# सूर्योदयः।

| एकादशे वर्षे | आषाढ-श्रावणयोः-पूर्णिमा सं० १९९२ | प्रथम-द्वितीय-संख्ये |
|---|---|---|

## सम्पादकीयम्।

—— :०: ——

### नववर्षारम्भः।

श्रीमन्तः पाठकमहानुभावाः !

करुणा-वरुणालयस्य श्रीभगवतो विश्वनाथस्यानुकम्पया सुरसरस्वत्याः सेवकोऽयं 'सूर्योदयः' सम्प्रति दशमं वर्षमतिवाह्यैकादशे वर्षे पादार्पणमादधातीति परम-हर्षास्पदमस्माकम्। कालो हि सर्वशक्तिमतो भगवतः स्वरूपमुच्यते। सृष्टिप्रारम्भे सर्वप्रथमं कालरूपेणैव परमात्मा प्रादुर्भवति। तस्य च कालस्य कालमहाकालभेदेन स्वरूपद्वयमस्ति। तत्रानाद्यनन्तानन्तकोटिब्रह्माण्डानां द्रष्टा महाकालो निगद्यते। एकेन ब्रह्माण्डेनैकेन पिण्डेन च सम्बन्धभाजो भगवतः स्वरूपमेव कालशब्देनोच्यते। सूर्योदयो हि कालप्रभावतः सम्प्रति स्वप्रादुर्भावकालस्यैकादशे वर्षे प्रविशतीति महाकालात्मनः परमेश्वरस्य महाशक्तिं वयं वन्दामहे। दैवघटना हि दुरत्यया विद्यते बन्धमोक्षौ सुखदुःखे हानिलाभौ भयक्रोधौ अप्राप्तीमानि आहोस्विदेतेष्वेकमपि यद्धि विना चिन्तितमेवोपनमते तदेव हि दैवशब्देनोच्यते। दैवी क्रिया हि दैवाधीनैव तिष्ठति। तस्यापि किमपि अदृष्टं कारणं भवत्येव। एवं हि दैवाधीनः सूर्योदयो यथासमयं प्रकाशनेऽन्तरायाच्छन्नो जात इति ग्राहकानुग्राहकमहोदयाः क्षाम्यन्तु। सम्प्रति वयमाशास्महे यच्छीघ्रमेव बृहदाकारं विशेषाङ्कं प्रकाश्य श्रीमतः प्रसादयिष्याम इति।

सम्प्रति सूर्योदयोऽयमन्यमुखापेक्षी विद्यते। अन्यसंस्थया एतस्मै साहाय्यं दीयते। संस्कृतविश्वविद्यालयस्य मुखपत्रं संस्कृत विदुषां संस्कृतच्छात्राणाञ्च

सेवकोऽप्ययमन्येभ्यः स्वीयं भरण-पोषणं कुर्य्यादिति कियत् चित्रम् ? यस्यैताव-तोऽगणिताः सहायकाः सन्ति । तादृशोऽप्ययमकिंचनः स्यादिति लज्जास्पदमेतद् ।

अतोऽधुना वयं श्रीमतां पुरस्तात् पुनर्गतहायनवत् प्रार्थनां कुर्मो यत् पञ्च पञ्च नवीनान् ग्राहकान् सुरसरस्वतीप्रचाराभिलाषुकाः समुत्साहिनो नवयुवका विदध्यु-श्चेत्सर्वथाऽप्ययं स्वतन्त्रः स्यात्सूर्योदयः । यदि नैवं सम्भाव्येत तदा सर्वेऽपि साम्प्रतिकाः सूर्योदय-पाठकाः प्रतिग्राहकमेकामपि ग्राहकसंख्यां वर्द्धयितुं कृतप्रतिज्ञा बद्धपरिकराः स्युश्चेदवश्यमयं कथमपि स्वातन्त्र्यं विभ्रीत । पश्यन्तु भवन्तः ! भवद्भ्यस्तु एकेनैव रूप्यकेण द्वादशमासानयं सेवते । तत्रापि आणकत्रयं चिटिकाया मेव व्ययीभवति । केवलम् आणकत्रयोदशकेनैव द्वादशमासान् श्रीमतामन्तिकेऽयं द्वादशविग्रहान् धृत्वा समुपसर्पति । एकमेवाणकमेकस्याङ्कस्य मूल्यं भवतीति कियान् समर्द्धोऽयं विद्यते । एकेनाणकेन तु तावन्मुद्रात्मकम् आपणं कर्णजमपि प्रयासतो भाग्येनैवोपलब्धं स्यात् । विविधानां विदुषां लेखमणिरश्मि मण्डितस्वरूपस्य सूर्योदयस्योपलब्धिः तावता एव मूल्येन भवति इति विमर्शनी-योऽयं विषयः ।

अन्यच्च श्रीमन्तः स्वीयं लेखमपि विना मूल्यमेव प्रकाशयन्ति । स्वीयं च विचारं सर्वेषां पुरस्तादनायासेनैवोपस्थापयितुं समर्था भवन्ति । किम्बहुना विदुषां छात्राणां वा लेख-संशोधने मुद्रापणे कियान् भवति प्रयास इति वयमेव जानीमः । अतश्च संक्षेपेणैवोच्यते सर्वथा सुरभाषासेवकस्य सूर्योदयस्य बाल्यकालो व्यतीतो यौवनकालः समायाति सम्प्रत्यप्ययं पराधीनजीवनो भवेत् इति केषामपि नाभीष्टं भाति । सर्वेऽपि यौवने स्वीयं व्ययं स्वयमुपार्जयन्ति । किम्बहुनाऽन्यानपि स्वोपार्जनेन पोषयन्तीत्येव विद्यते लोकाचारः । अतोऽयं स्वाधीनजीवनस्तु स्यात् । स्वीयं व्ययं स्वयमेवोपार्जये-दित्येव प्रयतन्तां सर्वेऽपि ग्राहका अनुग्राहका लेखकाः पाठकाश्च । विज्ञापनदाता-रोऽपि महोदया हिन्दीपत्रादिषु विज्ञापनं प्रहिण्वन्ति । संस्कृतपत्रे तु विज्ञापनमपि नायाति । तदपि श्रीमद्भिश्चिन्तनीयमित्येवं सर्वतो ग्राहकमात्रैकधनस्य संस्कृत-पत्रस्य ग्राहका अपि यद्युपेक्षका आलस्यादिदोषपराभूताः स्युस्तर्हि तु अमरवाणी मृतभाषेति जल्पतां जल्पाकानां जल्पनं सर्वथा सार्थकं स्यादिति ।

## धन्यवादा दीयन्ते ।

महामहोपाध्यायाः पण्डितसकलनारायणशर्माणो व्याकरणाचार्य्याः पेषमो ग्रीष्मसमये श्रीमतां भारतसम्राजां पञ्चमजार्जमहोदयानां रजतजयन्ती महोत्सवे बंगालशासकमहोदयैर्महामहोपाध्यायपदप्रदानेनालंकृता इति परम प्रमोदास्पदमस्माकम् । यथा हि ते महोदया विद्यायां पारावारीणाः सन्ति । तथैव ते लोक-समाज-सेवायामप्यग्रेसराः सन्ति । शिक्षाविभागे तु बहुकालादेवाभ्यर्हितं पदमलंकुर्वन्ति । 'शिक्षा' नाम्नी हिन्दी साप्ताहिक-पत्रिका सर्वसाहित्यसेविदल-विदिता शिक्षाप्रचार-पद्धतावत्युपकारिणी हिन्दीभाषाभिज्ञानामानन्दवर्द्धिका प्रसिद्धपत्रश्रेण्यां गण्यमाना तेषामेव सम्पादकत्वे निःसरति । संस्कृतविदुषां हिन्दीभाषाप्रेम प्रविरलमेवोपलभ्यते । तत्र संस्कृतविद्वत्सु प्रख्यातपाण्डित्या अपि ते स्वीयं हिन्दीभाषाप्रेमानवच्छिन्नं प्रवाहितवन्त इति प्रशंसास्पदमिदम् । तत्रापि सर्वदा सुदूरप्रान्ते कलिकातानगरे संस्कृत-कालिजविभागे संस्कृताध्यापन-रता अपि हिन्दी-पत्र-सम्पादनं विदधतीति संस्कृत-विदुषामनुकरणीयोऽयं विषयः ।

अस्तु, श्रीमतां पण्डितवर्य्याणां सदुत्साहं वार्द्धक्येऽपि पत्रसम्पादनसंस्कृ-ताध्यापनादि बह्वायाससाध्यं सुकृत्यं प्रशंसन्तो वयं पण्डितप्रवराणान्तेषामस्मिन् राजसम्मानप्राप्त्यवसरे सोल्लासं धन्यवादान् दद्मः । भारतीयशासकेभ्योऽपि गुणपूजनप्रथासम्वर्द्धकेभ्योऽनेकशो धन्यवादान् वितरामः । × × ×

## पश्चिम प्रान्तीयो भूकम्पः ।

अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवःशैलताम् ।
शैलो मृत्कणतां तृणं कुलिशतां वज्रं तृणक्षीणतां ॥
अग्निः शीतलतां हिमो दहनतामायाति यस्येच्छया ।
लीलादुर्ललिताद्भुतव्यसनिने तस्मै नमो ब्रह्मणे ॥

प्रिय सूर्य्योदयपाठकाः ! गतहायने श्रीमद्भिर्विहारप्रान्ते दैवप्रकोपस्वरूपो भूकम्पात्मकमहोत्पातः श्रुतो दृष्टस्तत्रत्यैश्चानुभूतश्च । सहि महोत्पातो यावत्तत्रत्यै र्जनै र्विस्मृतोऽपि नासीत्तावदेव पश्चिमप्रान्ते विशेषतः क्वेटानगरे ततोऽपि महा-घोरतरो भूचालः-महोत्पातो जातः । यत्र पञ्चाशत्सहस्रतोऽपि समधिका मानवा मृदन्तर्विलीनाः क्षणेनैव पञ्चत्वमुपेताः । किमत्र वाच्यम् ! को हि हेतुरीदृशानां महो-त्पातानां विद्यते? पूर्वं तु क्वापि ईदृक् महोत्पातो न भवतिस्म । यतो हि पुराणादिषु

साहित्यादिषु वा क्वापि न श्रूयते भूकम्पोत्पातजन्योपद्रववर्णनम् । साम्प्रतन्तु खण्डप्रलय एव समुपस्थितो दृश्यते । प्रतिवर्षमेव क्वापि भूकम्पमहोत्पातः । क्वापि जलप्लावनमहोपद्रवः । कुत्रापि ग्रीष्मर्तौ अनलप्रकोपमहोपद्रवः । इत्येवं विविधा महोत्पाताः प्रतिवर्षं प्रादुर्भूय जनपदोद्ध्वंसं कुर्वन्ति । यत्र साम्प्रतिका वैज्ञानिकास्तु बाह्यमेव कारणं पर्वतप्रवेश-भूगर्भस्थितोष्मप्रस्फोटादिकं निदानत्वेनामनन्ति । परन्तु ये हि धार्मिका ईश्वरशक्तिप्रभावेण जगन्नियन्त्रणं स्वीकुर्वन्ति, ते तु सर्वथा पुरुषकर्म-वैगुण्यमेवेदृशानां महोत्पातानां निदानमामनन्ति। यतश्च मानवविगुणकर्मवशेनेश्वरेच्छयैवेदृशा महोत्पाताः समुद्भवन्तीति तेषां सिद्धान्तः । तत्र सर्वथा सनातनधर्मशास्त्रानुसारेणेश्वरेच्छा तु सामान्यं कारणं वस्तुतस्तु मानवानां विगुणं कर्मैव प्रधानं निदानमिति सर्वतन्त्रसिद्धान्तसिद्धो विषयः ।

अतश्चास्माभिस्तु एतदेवेहोच्यते यत्सर्वथा शास्त्रप्रतिपादितपद्धत्यैव स्वैर्मानवैर्व्यवहर्तव्यम् । येनेदृशानां महोत्पातानां दर्शनमेवासम्भवः स्यादिति । कृत्य-बुद्धिपरिष्कारायापि शास्त्राण्येव प्रमाणानि ।

तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानन्तु कर्म कर्तुमिहार्हसि ॥

इति भगवताऽपि स्पष्टमेव व्यक्तीकृतोऽयमुपरिष्टादाशयः श्रीमद्भगवद्गीतायाम् श्रीमद्व्यासमुनिविरचितायाम् । × × × ×

## श्री स्वामि दयानन्दपादाः ।

हा हन्त ! अद्य श्रावण्याममावास्यायां सनातनधर्म्मसूर्य्य श्री स्वामी दयानन्दमहाराजः काश्यां श्रीभारतधर्ममहामण्डलभवने १० वादनवेलायां दिने मंगलवासरे नश्वरं शरीरं हित्वा शाश्वतिकं ब्रह्मलोकं जगामेति लिखतो लेखनी पतति हस्तात् ! केनापि न हि सम्भावितमासीद् यद् एतादृशोऽनभ्रो वज्राघातोऽकस्मादेव भविष्यति यत् सम्प्रति स्वामिदयानन्दमहाराजः पञ्चपञ्चाशद्वर्षावस्थायामेवास्मान् विहास्यतीति । सहि महात्मा सनातन-धर्मस्याद्वितीयो व्याख्याताऽनेकेषामनर्घाणां धर्मकल्पद्रुम-धर्मविज्ञान-गीतार्थचन्द्रिकाप्रभृति-धर्मग्रन्थानां रचयिता जलग्रामे वर्णाश्रमधर्ममहासम्मेलने व्याख्यानदानानन्तरं रोगशय्यायां पतितस्तत एव क्षीणकायो न साधुस्वास्थ्यमासादितवान् । सम्प्रति पञ्चदशदिनानि हृदयरोगेणाक्रान्तः । सहसा नश्वरं शरीरं हित्वा ब्रह्मीभावमासादयत् ।

तेषामनेनाकस्मिकशरीरपातेन सनातनधर्मस्य तु या हि महती क्षतिः सञ्जाता तस्याः पूर्तिरसम्भाविनी । श्रीभारतधर्ममहामण्डलस्य मन्त्रि-

पदमासाद्य हिन्दुजाते सनातनधर्मस्य भारतीयसंस्कृतिसमेधिकाया धर्मशिक्षायाः प्रचारादिना विविधामूल्यग्रन्थराशिनिर्माणेन सर्वत्र भारतेऽविश्रामं पर्य्यटनं कृत्वा अपूर्वधर्मोपदेशप्रदानेन या हि सेवा संन्यासिनापि सता तेन महापुरुषेण सम्पादिता ततस्तदृणभारग्रस्ताया अस्या जातेर्न कदापि मोक्ष इति सुस्थिरम् ।

अस्तु, स हि महात्मा स्वलोकसंग्राहककर्मणा संन्यासिसंघेभ्यः सर्वदा

अनाश्रितः कर्मफलं कार्य्यं कर्म करोति यः
स संन्यासी च योगी च न निरग्निर्नचाक्रियः ।

इति गीतोपदेशं दत्वा प्रारब्धपरिपाकान्ते ब्रह्मतामेवोपगतः । परन्तु शोच्याः सम्प्रति वयमेव स्मो येषां सनातनधर्मस्य संरक्षका इत्थं हि क्रमशो लोकान्तरं गच्छन्ति । न तादृक् पुनस्तत्स्थानपूरकः कोऽपि प्रादुर्भवतीति ।

स्वामिदयानन्दमहाराजस्याकस्मिक-शरीरत्यागेन तदीयसंकल्पितानां संस्कृतविश्वविद्यालयप्रभृतिकार्य्याणां या हानिर्जाता, यश्चाघातस्तदीयगुरुवर्य्याणां श्री १०८ स्वामिपादानां ज्ञानानन्दजीमहाराजानां शान्तिवराणां महायोगिनामपि सतां योग्यतरशिष्यवियोगेन हृदये संलग्नस्तत्सर्वासामप्यनर्थपरम्पराणां श्रीकाशीविश्वेश्वर एव सम्मार्जयितेति शोकसंक्षुब्धमनसो न शक्नुमोऽग्रे लेखितुमिति श्रीस्वामिदयानन्दमहाराजस्य ब्रह्मभावमुपगतस्य सन्निधाने कियता शब्देनैव स्वश्रद्धाञ्जलिं समर्प्य विरमामः ।

## श्रीस्वामिदयानन्दस्मृत्यङ्कः ।

सूर्योदयस्य भाद्राश्विनमासाङ्कः शीघ्रं प्रकाशितो भविष्यति सच श्रीमतां स्वामिदयानन्दपादानां स्मृतौ प्रकाशितो भवेदित्यस्माकं विचारः । तत्र संन्यासाश्रमीय-कर्तव्यविधायिका संन्यासपद्धतिः सम्पूर्णा प्रकाशमेष्यति । तया पद्धत्या सर्वमपि संन्यासाश्रमीयं कर्तव्यमौर्ध्वदैहिकं सर्वमपि विधानञ्च सर्वेषां पुरतः प्रकाशमेष्यति । या अद्यत्वे सर्वथाऽनुपलब्धा विद्यते । तत्रैव संन्यासगीताऽपि । तयैव सह स्वामिपादानां जीवनचरित-धर्मप्रचार-ग्रन्थनिर्माणादि-विषयकास्तेषां स्मृतौ लिखिता लेखाः कविता वा शोकप्रकाशात्मकाश्च लेखा विदुषां समागताः सादरं प्रकाशिता भविष्यन्ति ।

अतश्च ये महोदयाः तेषां विषये यत्किमपि जानन्ति तल्लेखबद्धं कवितावद्धं वा विधाय-त्वरयैव सूर्य्योदयकार्य्यालये प्रेषयन्तु । सोऽङ्कः सुसज्जितो बृहदाकारस्तथा चित्रविभूषितश्च भविष्यति । अतश्च लेखप्रेषकैः कृपया शीघ्रमेव तत्स्मृत्यंके प्रकाशयोग्यान् लेखान् तदीयस्मृतिविषये निबद्धाः कविता वा प्रहित्यानुगृह्णन्तु ।

———:०:———

# वेदपुराणयोरेकवाक्यता

( अश्लीलतानिरासः )

( १ )

निबन्धा—श्रीदीनानाथ शर्मा सारस्वतः शास्त्री।
( 'मुलतानस्थ—स० ध० कालेजाऽध्यापकः )

* मंगलम् *

'नि षुसीद गणपते ! गणेषु त्वामाहुर्विप्रतमं कवीनाम्।
न ऋते त्वत् क्रियते किञ्चनाऽऽरे महामर्कं मघवञ्चित्रमर्च।'
—ऋ० १०।११२।६

'इयं या परमेष्ठिनी वाग्देवी ब्रह्म-संशिता।
ययैव ससृजे घोरं तयैव शान्तिरस्तु नः,। अथ० १६।६।३
'देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु'
—ऋ० ८।१०० ( ८६ )।११

त्वं नः पश्चादधरादुत्तरात् पुर इन्द्र ! निपाहि विश्वतः।
आरे अस्मत् कृणुहि दैव्यं भयमारे हेतीरदेवीः।
ऋ० ८।६१ (५०)।१६

'यत इन्द्र ! भयामहे ततो नो अभयं कृधि।
मघवञ्छग्धि तव तन्न ऊतिभिर्विद्विषो विमृधो जहि'। ऋ० ८।६१।१३

— —

## भूमिका

'यत्र स्कम्भः प्रजनयन् पुराणं व्यवर्तयत्।
एकं तदंगं स्कम्भस्य पुराणमनु संविदुः'। अथर्व० १०।७।२६
'तमितिहासश्च पुराणञ्च गाथाश्च नाराशंसीश्चाऽनुव्यचलन्
—अथ० १५।६।११

अर्वाचीनमतानुयायिनः केचन, विशेषत आर्य्यसामाजिका मूर्त्तिपूजाऽव-

तारजन्मसिद्धवर्णव्यवस्था-श्राद्धप्रभृतिसनातनधर्म्मसिद्धान्तानां प्रत्यादेशे यदा बहुप्रयतनेनाऽपि साफल्यन्न प्राप्नुवन्; यदा च मूर्त्तिपूजाखण्डनस्थाने तैरपि स्वा० दयानन्दादिचित्राणि सत्कृत्य, पृष्ठस्थाऽस्थिन चेतः प्रणिधाय, तु रादींश्च नमस्कृत्य, × निराकारपरमात्मने च पानार्थं सोमरसं समर्प्य, चन्द्रमसे चाऽर्घ्यं प्रदाय, भारतमात्रादिश्च स्वेष्टदेवतां विधाय, राष्ट्रियपताकाश्चाऽभ्युत्थानपूर्व्वकमभिवाद्य, 'हरिजन' व्यपदेश्यांश्च देवमूर्त्तिदर्शनार्थमुत्साह्य स्वयमपि प्रकारविशेषेण मूर्त्तिपूजाऽऽद्रियत; यदा चाऽवतारखण्डनस्थाने त एव 'दयानन्द' 'गान्धि' प्रमुखानवतारिपुरुषानमन्यन्त; यदा गुणकर्म्महीना अपि तदीयब्राह्मणोपदेशका ब्राह्मणाः, विद्वांसोऽपि क्षत्रियादिकाश्च क्षत्रियादय एवाऽतिष्ठन्; यदा च स्वा० दयानन्दादिस्वमतप्रवर्त्तकानां श्राद्धस्वरूपे तन्नाम्ना विद्यालयाऽनाथालयादीनुद्घाट्य अन्येभ्यो विद्यादानमन्नादिदानञ्च वितरन्तः, 'परं मृत्यो' इत्यादिभिश्च मन्त्रैः क्षीरद्वारा दयानन्दनिर्व्वाणाऽऽहुतीर्ददतश्च, श्राद्धखण्डनं फल्गु+निरचैषुः; यदाचैतद्विषयकशास्त्राऽर्थेषु सनातनधर्म्मोपदेशकेभ्यस्ते स्थाने स्थाने पराजिता जाताः तदाऽद्यत्वे पुराणं * सनातनं वा धर्म्मम् आक्रमितुं ते पुराणानाम् अश्लीलशीलताम्, अवैदिकताम्, असम्भवताञ्च साधयितुमकाण्डताण्डवं वितन्वन्ति; एतद्विषय एव च शास्त्राऽर्थान् कर्त्तुं सन्नद्धा जायन्ते; एवङ्कृत्वा स्वकीयामवैदिकताम् ( वेदाऽदर्शनम् ) आग्रहग्रहिलताञ्च ( वेदे सतामपि पौराणि-

× १९१५ ईशवीये कांगड़ीगुरुकुले वेदपुस्तकानि सभापतित्वं नीतानि, इयं स्पष्टं मूर्त्तिपूजा ।

+ 'फल्गु' इति खण्डन-विशेषणं द्वितीयान्तम्, अमो लुक् ।

* अस्मदीयधर्मस्य 'सनातनधर्म्मः' 'पुराणधर्म्मं' इति वा नाम; तथा च वेदे- 'सनातनमेनमाहुः' अ० १०।८।२३ 'यो देवमुत्तरावन्तमुपासातै सनातनम्' अ० १०।८।२२ 'धर्म्मं पुराणमनुपालयन्त' अ० १८।३।१ 'अयं पन्था अनुवित्तः पुराणो—' ऋ० ४।१८।१ 'प्रत्नमिन्द्र ! हवामहे' अ० २०।२४।९ अत्रेन्द्रपरमात्मनो विशेषणं सनातनः, प्रत्नः पुराण इति; तत्प्रचालितधर्म्मस्याऽप्यत एव 'सनातन' 'पुराण' इत्यादि नाम । 'मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट' ऋ० ८।३०।३ हे देवाः ! अस्मान् पितृपरम्पराप्राप्तान्मार्गान्मा दूरीकार्ष्ट, तादृशस्तु सनातनधर्म्म एव । 'वक्ष्ये सनातनं धर्म्मं नारायणमुखाच्छ्रुतम्' भागवत० ७।११।४ 'सनातनस्य धर्मस्य मूलमेतत्सनातनम्' महाभा० अश्वमेध० ९७।३२ 'मूलं हि विष्णुर्देवानां यत्र धर्मः सनातनः' भाग० १०।४।३९। एतदतिरिक्तप्रमाणानि 'संस्कृतरत्नाकरे' २।६ सङ्क्लेखे द्रष्टव्यानि ।

कविषयाणां निह्नवेन) पिशुनयन्ति । तदीयगुणान्, 'अनवद्या पतिजुष्टेव नारी ऋ० १।७३।३ इतिमन्त्रोदाहरणीभूत-सं तासावित्रीसुलोचनागान्धार्य्यनसूयाप्रभृति-पतिव्रतधर्म्मोपोद्बलकपवित्रचरित्राणि च निह्नुत्य कलुषतामात्रोपगूढा मूढास्ते क्रमेलकाः कण्टकजालमिव तद्-दोषमात्रमेव प्रदर्शयितुमुद्यच्छन्तेऽपठितजनताया अग्रतः । तानि च पुराणानि वेदविरुद्धान्यत एवाऽप्रमाणानि च साधयितुं दुश्चेष्टन्ते । तदीयविरुद्धांश- ( स्वेप्सित ) प्रदर्शनसमये तु ते तान्येव तदितिहासांश्च स्वतःप्रमाणानि मन्यमाना भवन्ति । यदि तत्र क्वचित् स्वेच्छाविरुद्धं ( मूर्त्तिपूजाऽवतारश्राद्धतीर्थयात्रा व्रतादिकं ) पश्यन्ति, तर्हि तमंशं प्रक्षिप्तं प्रतिपाद्य, तदवैदिकतां प्रख्याप्य, तन्निन्दानिनादैर्यत्र तत्र कर्णकुहरे स्फोटयन्ति । परन्ते विवेकदुर्विदग्धा एतन्न विविञ्चन्ति, यत्-किन्तेषां कथनमात्रेणैव प्रक्षिप्तताऽवैदिकता वा तादृशवचनानां भविष्यति ? कदाऽपि नैवम् । कल्प्यताम्-यदि केचिद् वेदेषु प्रक्षिप्ततां वा तदप्रमाणतां वा, भण्डधूर्त्तनिशाचरपोपकर्तृकतां वा तेषां मन्वीरन्, तर्हि किं वेदा अप्रमाणभूताः पोपपाखण्डिप्रणीता वा सेत्स्यन्ति ? यदि कथयेत - आम्, तर्हि तु धन्या भवन्तः; एवन्त्वेकमपि पुस्तकं प्रमाणकोटौ न स्थास्यति; यतः प्रत्येकग्रन्थप्रामाण्ये तद्विरुद्धजनसमुदायः सदा नकारमेव करिष्यति । यदि तादृशानां तथा मननेऽपि वेदेषु प्रामाणिकता वर्त्तते; तर्हि अप्रमाणतामन्तॄणां तथा मननमात्रेणैवाऽऽर्षवचनानां ( पुराणस्थानां ) प्रामाणिकता कथं प्रच्युता स्यात्, कथं वा प्रक्षिप्तता स्यात् ! तादृशवचनानां तात्पर्य्यं ज्ञातुम् उपक्रमोपसंहाराऽभ्यासाऽर्थवादोपपत्त्यादीनामुपयोगो ग्रहीतव्यो भवति ॥

वयमेतदपि न कथयामो यत्— पुराणेषु प्रक्षिप्तता वर्त्तत एव न; नहि— प्रक्षिप्तताऽपि वर्त्तते पुराणेषु, न्यूनताऽपि च वर्त्तते । परमस्य नेदमाकूतम् यद् यद् भवन्मतविरुद्धं स्यात्, तदेवाऽत्र प्रक्षिप्तं स्यात्; अथवा यद् भवन्मते वर्त्तेऽत्र च न दृश्यते— सैवाऽत्र न्यूनता स्याद् । नहि २ कदाऽपि नैवम् । प्रक्षिप्ततायाः न्यूनतायाश्च सम्भवस्तदा; यदा पुराणनिर्दिष्टतत्तद्विषयविभाग-स्तन्नियतश्लोकसंख्या तन्नियतविषयाऽनुक्रमश्च यदि तत्तत्पुराणे तथा न मिलेत्; तदैव प्रक्षिप्ततान्यूनताद्यनुमानं कर्त्तव्यम्भवति । निश्चयश्च तदीय उपक्रमोप-संहाराद्युपयोगेनैव कर्त्तुं शक्यः । एतदादिकाऽव्यवस्थायाः कारणमपि वर्त्तते श्रूयताम्— परस्सहस्रैर्वर्षैः पुराणानां यत्र तत्र प्रचारस्तु स्थितः परं तदा मुद्रणयन्त्राणि नाऽऽसन्; भिन्नभिन्नलेखकानां हस्ते पातेन पाठानां यत्र तत्र परिवर्तनेन भवितुं शक्यम् । भवद्भिर्वेदा एव द्रष्टव्याः, अत्र सत्यव्रतसामश्रमी भणति—'एष किल वैदिकशाखाभेदो नह्येककर्तृकः, न च ब्रह्मविष्णुपुराणादि-

ग्रन्थभेदवत्, नाऽपि प्रथमाद्यध्यायभेदतुल्यः, प्रत्युत भिन्नकालदेशव्यक्तिलिखिता-नामेकग्रन्थीयानां बहुतराऽऽदर्शपुस्तकानामवश्यम्भाविन एव पाठभेदादिभावाः, तथाभूतपाठभेदादिहेतुक एव, (ऐतरेयालोचने १२५ पृ०)। यद्यप्यस्मिन्नर्थेऽस्माकं पूर्णसम्मतिर्नास्ति; तथाऽप्येतेन पुराणानां लेखभेदोऽप्यनुसन्धेयो भवतीत्युपन्यस्तः । फलतो वेदानां रक्षणं भूयिष्ठप्रयत्नेन जातं प्राक्तनसमये; अनेकैस्तेषां कण्ठस्थता कृता; तद्रक्षणार्थं शाखाश्च नियता जाताः, अत एव तेषां नामाऽपि श्रुतिरिति जातम्, एवंविधसंरक्षणे जातेऽपि नियतसङ्ख्याकमन्त्रवतामपि वेदानां पाठभेदभूयस्त्वं प्राप्यते, यत् सायणादिभिर्मैक्समूलराद्याङ्ग्लैश्च तत्र प्रदर्शितम् । यथा वा... १९८१ वैदिकयन्त्रालयमुद्रिताऽथर्व्ववेदे ८१ पृष्ठे ३ पङ्क्तौ 'अमृतस्य' स्थाने 'अम तस्य' इति, ८२ पृष्ठस्याऽन्तिमपङ्क्तौ च 'विद्वान्' इत्यस्य 'वेद्वान्' इति मुद्रितम्, एवमन्यत्राऽपि । एवं शनैश्शनैरिमे पाठा अग्रिमसंस्करणेष्वप्येवमेव स्थास्यन्ति, 'यमराजस्य पन्था वै' एतत्स्थाने 'यमराजस्य यन्था वै' इति पाठे मुद्रितेऽपि जनाः कमप्यर्थं कुर्व्वन्त्येव; तदा वेदमुद्राऽशुद्धेरपि कमप्यर्थं साधयिष्यन्त्येव जनाः; तदा केचित् कथयिष्यन्ति— यदयं पाठश्शुद्धः, अन्येऽन्यं शुद्धं मंस्यन्ते । एवम् अजमेरमुद्रितसामवेदसंहिताकृते 'वेदसर्वस्व' स्य १५८ पृष्ठे तत्प्रणेत्रा स्वा० हरिप्रसादवैदिकमुनिना कथितम्— "अजमेर" के वैदिकयन्त्रालय में जो सामवेद संहिता छपी है- उसके छापने में तो इतनी असावधानी हुई है कि जिसके लिये अधिकारियों को कुछ प्रायश्चित्त करना चाहिये" । यद्येवमद्यत्वे मुद्रायन्त्रेषु सत्सु पाठभेदादिकस्य सर्व्वश्रद्धेये वेदे ईदृग् दुरवस्था; तर्हि यदा मुद्रायन्त्राणि नाऽऽसन्, न चाऽद्यतनसदृशी सुव्यवस्थैवाऽऽसीत्; तर्हि पुराणेषु तदा पाठभेदादिकं पुस्तकान्तर पाठ सम्मिश्रणञ्च जातं स्यात्; तत्किमाश्चर्य्यम् ।

(क्रमशः—)

---

## कुरुक्षेत्रभूमिः

(ले०—ओंकारदत्तशास्त्री विद्याभूषणः)

परमपवित्रायाः कुरुक्षेत्रभूमेर्महिमानं को नाम नरो वक्तुं शक्नुयात् । यदुच्यते-"पांसवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः । अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ।" कुरुक्षेत्रभूमेर्महिमा वेदेषु पुराणेषु स्मृतिषु च सर्वत्र मिलति । तद्यथा— अविमुक्तं वै कुरुक्षेत्रमत्र हि तारकं ब्रह्म व्याचष्टे येनासौ (मृतजीवः) अमृतो भूत्वा मोक्षीभवति ( जाबालोपनिषत् ) कुरुक्षेत्रं वै देवानां देवयजनमास ( शतपथ-

ब्राह्मणम्) किमधिकम्—अस्या भूमेः परमपवित्रत्वे इदमेव महाभारतवचः पर्याप्तमस्ति यत्—"अन्यदेशे कृतं पापं गंगायां प्रविनश्यति । गंगायान्तु कृतं पापं कुरुक्षेत्रे प्रणश्यति" ।। इति ।। 'धर्मक्षेत्रे कुरुक्षेत्रे' इत्यादि गीतावाक्यमिति कति ब्रूमः । इयमेवभूमिः सर्वेषां महर्षीणां सर्वेषां ब्राह्मणानां चादिममुत्पत्तिस्थानं मन्यते । अत्रैव भूमावाबालवृद्धप्रसिद्धो महाभारतसंग्रामो बभूव । यन्मध्ये भगवान् कृष्णः सकलश्रुतिस्मृतिसारभूतां गीतामुपदिदेश । व्यासश्च भगवानत्रैव भारतं भागवतं ब्रह्मसूत्रं योगभाष्यं पुराणानि च कृतवान् । अत्रैव भूमौ पराशरप्रभृतयो महात्मानः, भीष्म-विदुर-युधिष्ठिरप्रभृतयो राजानः, द्रोण भीमार्जुनप्रभृतयो वीराः । कर्णप्रभृतयो दानिनः । षट्शास्त्रि-गरुडध्वजप्रभृतयो विद्वांसः प्रादुरभूवन् । अद्यापि विश्वविख्यातकीर्तयः सर्वतन्त्रस्वतन्त्रप्रतिभाः पण्डित श्री छज्जूरामशास्त्रिविद्यासागरप्रभृतयोऽगत्या विद्वांसः सर्वशास्त्रीय-ग्रन्थनिर्माण-षट्शास्त्राध्यापन-धर्मोपदेशादिकार्यैः संस्कृतसाहित्यस्य महत सेवां कुर्वन्तोऽस्या भूमेर्गौरवं वर्धयन्तीति नाविदितं कस्याप्यक्षरजुषः । परन्तु महद्दुःखमिदं यदत्र सर्वस्यामपि भूमौ, प्रसिद्धनगरेष्वपि का कथा ग्रामाणां, एकापि संस्कृतपाठशाला तादृशी न विद्यते, यत्र दशानामपि-शास्त्रिविशारदाचार्य मध्यमादिपरीक्षादित्सूनां छात्राणां पठनपाठनयोः सुप्रबन्धो भवेत् । दानवीरैरत्र दृष्टिर्दातव्या । अस्तु । इयं भूमिरष्टचत्वारिंशत्क्रोशपरिमिता मन्यते । तस्यां च षष्ठ्यधिकानि त्रिशतानि तीर्थस्थानानि विद्यन्ते । परन्तु तेषु पञ्चतीर्थस्थानान्यति-प्रसिद्धानि सन्ति । स्थानेश्वरनगरस्थकुरुक्षेत्रतीर्थे लक्षाधिकैः स्त्रीपुरुषैः स्नानं दानं च क्रियते । एवं पृथूदके चैत्रामावस्यायाम् । फल्गुतीर्थे आश्विनस्य सोमवत्याममावस्यायाम् । रामह्रदे कार्तिकी पूर्णिमायाम् । पिण्डारके सोमवत्या-ममायामिति संक्षेपः । [ अयं लेखः— म० म० श्रीमदन्नदाचरणतर्कचूडामणि-महोदयानां 'विहार गौरवं' लेखमाश्रित्य लिखित इति तेषामधमर्णो लेखकः ]

---

## विज्ञापन-नियमः ।

सूर्य्योदये विज्ञापनप्रकाशनार्थम् उपरितनपृष्ठैकस्य कृते १० रुप्यकम् ।
अर्धभागस्य कृते ६) षड्रुप्यकम् चतुर्थांशस्य ३) रुप्यकत्रयम् ।
विशेष सौविध्यार्थं सूर्य्योदयव्यवस्थापकपार्श्वे पत्रं प्रेषणीयम् ।
समालोचनार्थ- पुस्तकादिकमपि व्यवस्थापक नाम्नैव प्रेषणीयम् ।

सरस्वती श्रुतिमहती महीयताम्

# अखिल भारतवर्षीय

## धार्मिकाध्यात्मिक-संस्कृत-विश्वविद्यालयस्य

### संशोधितोद्देश्यनियमावली पाठ्यक्रमश्च

( प्रधान कार्यालय जगतगंज, बनारस काशी )।

——:*:——

### तत्रोद्देश्यानि

( १ ) सनातनधर्मानुसारेण धार्मिकशिक्षाविस्तारः, संस्कृतविद्याप्रचारः, आयुर्वेदप्रभृतिशास्त्रशिक्षाप्रचारः, राष्ट्रभाषाया ( हिन्दी ) अभ्युन्नतिः, पुरुषेष्वार्य्यमहिलासु च धर्मज्ञानाद्यभ्युदयः, प्राचीनविद्यापीठानामुद्धारः, प्राचीनाध्यात्मशास्त्रोन्नतिः, प्राचीनपद्धत्याऽवैतनिकं विद्यार्थिषु विद्यादानं प्रकुर्वतां सदाचारपालकानां धार्मिकाणां विदुषां ब्राह्मणानां समुत्साहसमवर्द्धनम्, इंग्लिशभाषायाः कुमारविद्यालय-महाविद्यालयप्रभृतिविद्यालयेषु धर्मज्ञानाभिवृद्धिः, श्रौतस्मार्तकर्मकाण्डानामुपासनाकाण्डानाञ्च बाहुल्येन प्रचारः, पुराणरहस्यज्ञानां व्यासासनेन कथाप्रवचनं प्रकुर्वतां मार्मिकपौराणिकप्रवराणां देवालयादिषु च योग्यानां, देवार्चकानां धार्मिकव्याख्यानेन च सर्वत्र जनसाधारणेषु धर्मजागर्तिजनकानां धार्मिकाणामुपदेशक-महोपदेशकानाञ्च सुलज्जीकरणम् विश्वस्मिन्नपि जगति पूज्यपादानां परमकारुणिकानां महर्षीणां ज्ञानज्योतिर्विस्तारः, सर्वेषामेव सद्गृहस्थानां गृहस्थितबालकबालिकासु च धार्मिकशिक्षाप्रचार एवमन्येषामपि विविधानां धार्मिकाध्यात्मिकानां साहित्य-देश-धर्म-समाजराष्ट्र-राज्याभ्युदयकराणां कृत्यानां प्रोत्साहनमित्यादीनि मङ्गलमयाभ्युद्देश्यानि संकल्पीकृत्यास्याखिलभारतवर्षीय-धार्मिकाध्यात्मिक-संस्कृतविश्वविद्यालयस्य प्रतिष्ठापनमभूत्।

( १—सनातनधर्मानुसार धार्मिकशिक्षाविस्तार, संस्कृतविद्याप्रचार आयुर्वेद आदि शास्त्रोंका प्रचार, राष्ट्रभाषा हिन्दीकी उन्नति, पुरुष और स्त्रियोंके धर्मज्ञानकी उन्नति, प्राचीन-विद्यापीठोंका उद्धार, प्राचीन अध्यात्मशास्त्रका अभ्युदय, जो बिना वृत्ति लिये सदाचारी ब्राह्मण प्राचीन रीतिपर विद्यादान करते हैं, उन विद्वान् ब्राह्मणोंको उत्साह-प्रदान, स्कूल-कालेजादि विद्यालयोंमें धर्मज्ञानकी अभिवृद्धि, श्रौतस्मार्तकर्मकाण्ड और उपासनाकाण्डका अधिक प्रचार, पुराणोंके यथार्थ रहस्य जाननेवाले कथावाचकों और देवा-

लयोंमें योग्य देवसेवकों तथा धार्मिक व्याख्यानों द्वारा जनसाधारणमें धर्मकी जागृति पैदा करनेवाले उपदेशक-महोपदेशकोंको प्रस्तुत करना, जगत् में पूज्यपाद महर्षियोंकी ज्ञानज्योतिका विस्तार, सद्गृहस्थोंके गृहस्थित बालकों और बालिकाओं में धार्मिक शिक्षाका प्रचार करना, इसी प्रकार विविध साहित्य, देश, समाज, राष्ट्र, राज्य प्रभृतिके अभ्युदयकारी धार्मिकाध्यात्मिक मङ्गलमय अभिप्रायों से यह अखिल भारतवर्षीय-धार्मिकाध्यात्मिक-संस्कृत विश्वविद्यालय स्थापित हुआ है।)

## संक्षिप्त नियमावली।

२—इस अखिल भारतवर्षीय स्वजातीय विश्वविद्यालयका प्रधान कार्यालय श्रीमहामण्डलभवन, जगत्गंज बनारसमें स्थापित रहेगा।

३—इस विश्वविद्यालयके परीक्षाकेन्द्र भारतवर्षके प्रधान प्रधान नगरों और देशी राजधानियोंमें स्थापित होंगे। परीक्षाकेन्द्र स्थापित होनेके नियम निम्नलिखित हैं:—

(क) परीक्षाकेन्द्रोंसे कुछ भी शुल्क नहीं लिया जायगा, बल्कि उनको कई तरहकी सहायता आवश्यकतानुसार दी जायगी।

(ख) विश्वविद्यालयकी आय बढ़ने पर केन्द्रोंसे सम्बन्धयुक्त अध्यापकों और पाठशालाओंको सहायता दी जासकेगी।

(ग) परीक्षाके उपयोगी पुस्तकें जिससे अपेक्षाकृत अल्प मूल्यमें केन्द्रों को और उनके मार्फत परीक्षार्थियोंको मिल सकें, इसका भी यथासम्भव प्रबन्ध किया जायगा।

(घ) केन्द्रोंको विश्वविद्यालयका मुखपत्र बिना मूल्य मिला करेगा, यदि उनके पास पुस्तकालय हो और केन्द्रका कार्य नियमित चलता हो। इसके अतिरिक्त प्रधान कार्यालयसे सम्बन्ध युक्त अन्यान्य मासिकपत्र वार्षिक पुस्तक (डाइरेक्टरी) और अन्यान्य प्रकाशित पुस्तकें स्वल्प मूल्यमें मिल सकेंगी।

४—किसी नगर अथवा राजधानीमें प्रयोजनानुसार एकाधिक परीक्षा केन्द्र खुल सकेंगे। परीक्षाकेन्द्र किसी कालेज, स्कूल, पाठशाला सार्वजनिक पुस्तकालय या महामंडलसे सम्बन्ध युक्त किसी धर्मसभामें खुल सकेगा। देशी रजवाड़ोंमें और महामण्डलके संरक्षकों और प्रतिनिधियोंके स्थानों पर भी खुल सकेगा। इसके लिये नाम, पता और पूरे परिचय सहित आवेदनपत्र धार्मिकाध्यात्मिक संस्कृतविश्वविद्यालयके प्रधान कार्यालय-काशीमें भेजकर

परीक्षा-केन्द्रको रजिस्टर दर्ज कराना होगा । परीक्षाकेन्द्रके लिये एक सुन्दर प्रमाणपत्र कार्यालयसे विशिष्ट पदधारियोंके हस्ताक्षरोंसे भेजा जायगा ।

५—प्रतिवर्ष नियत समयपर परीक्षा होगी । यदि परीक्षाके समयमें कुछ परिवर्तन होगा तो विश्वविद्यालय के मुखपत्र ( सूर्योदय ) में प्रकाशित किया जायगा । जो परीक्षाएं परीक्षाकेन्द्रोंमें अथवा निबन्ध-रचना ( थीसीस ) द्वारा ली जायगी, वे सभी चैत्रमास (मार्च) में होंगी । नियत दिनकी सूचना विज्ञप्ति पत्र [सरक्यूलर] द्वारा दी जायगी ।

६—परीक्षार्थियों को मकरसंक्रान्ति ( दिसम्बर से ) पहले शुल्कसहित आवेदनपत्र प्रधान कार्यालय में भेज देना होगा । मुद्रित आवेदनपत्र कार्यालय से बिनामूल्य नवम्बर तक मंगा लेना चाहिये ।

७—केन्द्रोंमें परीक्षा लेनेके नियम निम्नलिखित होंगे:—

( क ) प्रत्येक केन्द्रमें प्रश्नपत्र यथासमय बन्द लिफाफेमें सील करके प्रधान कार्यकर्त्ताके नाम रजिस्ट्री डाकसे भेजे जायँगे। वहाँके केन्द्राध्यक्ष उनको ठीक समय पर दो नियत निरीक्षकों के सामने परीक्षास्थानमें ही सावधानतासे खोलकर अपने सामने परीक्षार्थियोंको देंगे और उनके उत्तर-पत्र प्रधान कार्यालय द्वारा भेजे गये नियमोंके अनुसार सावधानतासे प्रधान कार्यालय में भेजेंगे । परीक्षा लेने तथा उत्तरपत्र भेजने के सभी नियम परीक्षा के समय छापकर भेजे जाते हैं ।

( ख ) स्त्रियोंकी परीक्षा, इस साधारण नियम के अनुसार परीक्षा केन्द्रोंमें तथा इसके अतिरिक्त उनके मकानों में अथवा किसी सद्गृहस्थ के यहां नियत समय पर ली जासकेगी । इसका प्रबन्ध उस स्थान का परीक्षाकेन्द्र आर्य महिलाओं के द्वारा करा देगा । अथवा कोई प्रतिष्ठित गृहस्थ स्वयं भी कर सकेगा । जहां आर्यमहिलाहितकारिणी महापरिषद्के कमसे कम सात सभ्य होंगे वहां ही यह केन्द्र खुल सकेगा ।

( ग ) जिन जिन परीक्षाओं में मौखिक या लेखबद्ध परीक्षा न लेकर केवल नियत समय एवं नियत विषयपर निबन्ध रचना द्वारा ही परीक्षा लेने का नियम रहेगा, उनके परीक्षार्थियोंको नियमानुसार स्वतंत्र स्वतंत्र रूपसे नियत समय पर प्रधान कार्यालय में लेख भेजकर अपनी योग्यता का परिचय देना होगा और परीक्षा का शुल्क नियत समयपर सीधे कार्यालय में भेज देना होगा ।

८—निम्नलिखित परीक्षाएँ निम्नलिखित भाषाओं में निबन्ध रचना द्वारा ली जायंगीं ।

(१) धर्माचार्य और महोपाध्याय उपाधि परीक्षा—केवल संस्कृत में निबन्ध रचना द्वारा होगी।

(२) महोपाध्याय उपाधि परीक्षा की निम्नलिखित श्रेणियां होंगी।

(क) वेद, (ख) दर्शन, (ग) व्याकरण, [घ] साहित्य [ङ] धर्मशास्त्र, [च] ज्योतिष, [छ] आयुर्वेद, [ज] पुराण, [झ] आगम।

(३) डी० ओ० सी० और पी० एच० डी० उपाधि परीक्षा अंग्रेजी अथवा संस्कृतमें निबन्ध रचना द्वारा होगी।

(४) बी० डी० सी० उपाधि परीक्षा केवल अंग्रेजी में निबन्ध रचना द्वारा होगी।

(५) पुरोहितरत्न, देवार्चनरत्न और व्याख्यानवाचस्पति उपाधि परीक्षा हिन्दी अथवा संस्कृत भाषामें निबन्ध रचना द्वारा होगी।

(६) राष्ट्रभाषाभास्कर उपाधि परीक्षा हिन्दी में निबन्ध रचना द्वारा होगी।

उपर्युक्त उपाधिपरीक्षाओं के लिये परीक्षाकेन्द्रमें आनेकी आवश्यकता नहीं होगी। केवल 'व्याख्यानवाचस्पति' परीक्षाके परीक्षार्थियोंको प्रधान कार्यालय बनारस, अथवा उससे सम्बन्धयुक्त किसी केन्द्रमें व्याख्यान की परीक्षा देनी होगी।

६—निम्नलिखित परीक्षाएं अ० भा० धार्मिकाध्यात्मिक-संस्कृत विश्वविद्यालय तथा आयुर्वेदसम्मिलनी नामक गवर्मेण्ट से रजिष्टर्डसंस्था द्वारा लीजायगी, जो प्रधान कार्यालय तथा भिन्न, भिन्न परीक्षाकेन्द्रोंमें प्रश्न पत्रोंके द्वारा गृहीत होगी।

[१] आचार्य और शास्त्री उपाधि परीक्षाएं निम्नलिखित विषयों में होंगी। हिन्दी की आचार्य और शास्त्री परीक्षामें क्रमशः 'हिन्दीरत्न' और 'हिन्दीभूषण' उपाधि दी जायगी।

[क] वेद, [ख] दर्शन, [ग] व्याकरण, [घ] साहित्य, [ङ] धर्मशास्त्र, [च] ज्योतिष, [छ] पुराण, [ज] आगम [झ] कर्मकाण्ड [ञ] और आयुर्वेद, ये सब परीक्षाएं संस्कृत भाषा में होंगी।

[२] श्रौतकर्मनिष्णात और पौरोहित्यनिष्णात ये परीक्षाएं हिन्दी या संस्कृत में लीजायगी और इन दोनोंमें यथावश्यक मौखिक प्रश्न भी पूछे जायंगे।

(३) हिन्दी और व्याख्यानकी सभी परीक्षाएं हिन्दीमें लीं जायँगी।

[१०] उपर्युक्त सभी विषयोंकी विशारद और प्रवेशिका परीक्षा भी होगी।

[क] इन परीक्षाओंमें प्रवेशिका [प्रथमा] परीक्षाके उत्तर संस्कृत अथवा अपनी मातृभाषा हिन्दी में लिखे जासकेंगे।

११—भारतवर्षके स्कूलोंमें प्रतिवर्ष जो धर्म परीक्षा होगी, जिसमें परीक्षोत्तीर्ण छात्रोंको प्रमाणपत्र तथा उत्तम श्रेणीमें परीक्षोत्तीर्ण होनेवालोंको छात्रवृत्ति, स्वर्णपदक, रौप्यपदक, आर्थिक या पुस्तकोंके पारितोषिक आदि भी मिलेंगे, उसमें दो श्रेणीकी परीक्षा होगी।

[१] मध्यमपरीक्षा [जूनियर] [२] उत्तमपरीक्षा (सीनियर) ये दोनों परीक्षाएं हिन्दी अथवा अंग्रेजी भाषामें ली जायंगी।

१२—हिन्दी मिडिलकी योग्यता वाले हिन्दी पाठशालाके विद्यार्थियोंके लिये और संस्कृतकी प्रथमा एवं मध्यमाकी योग्यता रखनेवाले संस्कृतपाठशालाओंके विद्यार्थियोंके लिए खासकर हिन्दी प्रवेशिका धर्मप्रवेशिका परीक्षाएं होगीं, जो हिन्दी अथवा संस्कृत भाषामें ली जायगी। परीक्षोत्तीर्ण छात्रोंको प्रमाणपत्र और उत्तम श्रेणीमें उत्तीर्ण होनेवालोंको छात्रवृत्ति स्वर्ण रौप्य पदक, पारितोषिक आदि भी दिये जायंगे।

१३—आर्यमहिलाओंके लिये उपर्युक्त विषयोंकी कतिपय परीक्षाओं के अतिरिक्त निम्नलिखित परीक्षाएं भी होगी।

[क] धर्मप्रवेशिका [ख] धर्मप्रभा [ग] राष्ट्रभाषाचन्द्रिका [घ] व्याख्यानकौमुदी।

[१] धर्मप्रवेशिका और धर्मप्रभापरीक्षा आर्यमहिलाओंके परीक्षा केन्द्रोंमें उनकी मातृभाषा या हिन्दीमें ली जायगी। [२] राष्ट्रभाषाचन्द्रिका परीक्षा शास्त्री (हिन्दीभूषण) के समकक्ष परीक्षा होगी, उस के निर्दिष्ट ग्रन्थ इसके भी पाठ्य ग्रन्थ होंगे। केवल उपाधि में भेद रहेगा। [३] व्याख्यानकौमुदी उपाधि परीक्षा में विद्यार्थियोंकी परीक्षा परीक्षाकेन्द्र द्वारा अथवा आर्यमहिला-महाविद्यालय काशीके द्वारा ली जायगी। इनको धर्म व्याख्यान और पुराण प्रवचनकीयोग्यता भी दिखानी होगी। अन्तिम दो परिक्षाएं हिन्दी भाषा में ही ली जायगी।

परीक्षोत्तीर्ण विदुषियोंको उपाधि-प्रमाणपत्र, स्वर्ण या रौप्यपदक और आर्थिक अथवा पुस्तकादिरूपमें पारितोषिक योग्यतानुसार दिये जायँगे।

[ख] इन परीक्षाओंके अतिरिक्त संस्कृत विश्वविद्यालयकी अन्यान्य प्रवेशिका, विशारद, शास्त्री, आचार्य, पी० एच० डी०, डी० ओ० सी० और वी० डी० सी० प्रभृति परीक्षाओंमें भी आर्यमहिलाएं योग्यतानुसार प्रविष्ट हो सकेंगी।

१४—धर्माचार्य, पुरोहितरत्न देवार्चनरत्न, व्याख्यानवाचस्पति, श्रौतकर्मनिष्णात और पौरोहित्य-निष्णात उपाधिपरीक्षाएं और आर्यमहिलाओंकी व्याख्यानकौमुदी परीक्षा इन परीक्षाओंके देनेका अधिकार केवल ब्राह्मण जातिको ही रहेगा।

१५—परीक्षोत्तीर्ण विद्वानोंको विश्वविद्यालयमें धन समागमके तारतम्यानुसार और योग्यतानुसार निम्नलिखित रीति पर पुरस्कृत और उत्साहित करने का नियम रहेगा:—

( क ) १००) से लेकर १०) तक एककालीन पारितोषिक, पारितोषिककी रकम अधिक होने पर मासिक वृत्ति रूपसे देने का भी नियम रहेगा।

( ख ) सोने और चांदी के पदक देने का भी नियम रहेगा।

( ग ) यथायोग्य मूल्यवान पुस्तकें देनेका भी नियम रहेगा।

( घ ) प्रमाणपत्र दिये जायंगे, जिनपर विश्वविद्यालयके प्रधान अधिष्ठाता ( चांसलर ) के हस्ताक्षर होंगे।

( ङ ) प्रतिवर्ष, परीक्षोत्तीर्ण व्यक्तियोंको उपाधि प्रमाणपत्र, पुरस्कार, पदक आदि दिये जायगे। यह सम्मान सबको काशीमें सभा करके अथवा अन्य प्रकारसे उत्साहित करके देनेका नियम रहेगा।

१६—प्रत्येक प्रश्नपत्रके १०० पूर्णाङ्क होंगे। प्रत्येक प्रश्नपत्रमें जो ३३ नंबर पावेगा, वह उत्तीर्ण समझा जायगा। जो ४५ नम्बर पावेगा, वह द्वितीय श्रेणी में और जो ६० नम्बर पावेगा, वह प्रथम श्रेणीमें उत्तीर्ण समझा जायगा।

( १७ ) परीक्षा शुल्क निम्नलिखित होंगे—

( १ ) धर्माचार्य, महोपाध्याय, और व्याख्यानवाचस्पति उपाधिपरीक्षाओंमें प्रत्येकका १०)

( २ ) डी० ओ० सी० और पी० एच० डी० परीक्षाओं में प्रत्येकका २५)

( ३ ) बी० डी० सी०, पुरोहित रत्न, देवार्चन रत्न, राष्ट्रभाषा-भास्कर, हिन्दीरत्न और आचार्य्य उपाधि परीक्षाओंमें प्रत्येकका ५)

( ४ ) शास्त्री, श्रौतकर्मनिष्णात, हिन्दीभूषण और पौरोहित्यनिष्णात, परीक्षाओंमें प्रत्येकका। ४)

( ५ ) प्रवेशिका ( प्रथमा ) स्कूलकी जूनियर और हिन्दी तथा संस्कृत पाठशालाओंकी हिन्दी प्रवेशिका परीक्षाओंमें प्रत्येकका। १)

( ६ ) विशारद ( मध्यमा ) सीनियर एवं हिन्दी विशारद परीक्षाओंमें प्रत्येकका। २)

( ७ ) आर्यमहिलाओं की धर्म प्रवेशिका और धर्मप्रभा, परीक्षाओं में प्रत्येकका। १)

राष्ट्रभाषाचन्द्रिका, व्याख्यानकौमुदी परीक्षाओं में प्रत्येक का २)

( ७ ) स्त्रियों से और परीक्षाओं का शुल्क आधा ही लिया जायगा।

## परीक्षापाठ्यक्रम।

१८—निबन्ध द्वारा गृहीत होनेवाली परीक्षाओं के पाठ्य ग्रन्थ तथा नियम।

### ( १ ) धर्माचार्य-परीक्षा

परीक्षार्थीको अ० भा० धा० आ० सं० वि० विद्यालय की किसी आचार्यपरीक्षामें उत्तीर्ण होना चाहिये—अथवा किसी विश्वविद्यालय की सर्वोच्च श्रेणी की संस्कृत-परीक्षा में उत्तीर्ण होना आवश्यक होगा या तत्समयोग्यता प्रमाणित हो जानेसे भी इस परीक्षाको दे सकते हैं।

इस परीक्षामें प्रविष्ट होनेवाले विद्वानों को निम्नलिखित ग्रन्थोंसे निबन्धरचनार्थ सहायता लेनी होगी।

वैदिक सप्तदर्शन सभाष्य। यथा—

न्यायदर्शन,

वैशेषिकदर्शन

योगदर्शन,

सांख्यदर्शन,

कर्ममीमांसा, [ पूर्वभाग. और उत्तरभाग ]

दैवीमीमांसा और उत्तरमीमांसा [ब्रह्मसूत्र] तथा चतुःसूत्री समन्वय भाष्य।

शुद्धाद्वैत, विशिष्टाद्वैत, द्वैताद्वैत, अद्वैत और द्वैत तथा पाशुपत आदि साम्प्रदायिक दर्शनोंका ज्ञान। दशोपनिषद् शाङ्करभाष्य तथा यथोपलब्ध साम्प्रदायिक भाष्य सहित।

ईश, केन, कठ पर महामण्डल द्वारा प्रकाशित भाष्य।

मन्त्रयोग संहिता,

हठयोग संहिता,

लययोग संहिता और राजयोग संहिता।

धर्मकल्पद्रुम सम्पूर्ण।

धर्मविज्ञान।

मन्त्रमहोदधि।

देवी भागवत,

श्रीमद्भागवत,

विष्णुपुराण,
महाभारत,
पुराणरहस्यम्।
शम्भुगीता,
शक्तिगीता,
सन्यासगीता,
श्रीमद्भगवद्गीता और सप्तसतीगीता सभाष्य।
तन्त्रसार और महानिर्वाणतन्त्र।
प्राच्य प्रतीच्य दर्शनों का तुलनात्मक ज्ञान।

## २ महोपाध्याय परीक्षा।

महोपाध्याय परीक्षा देनेवाले विद्वानों को अ० भा० सं० धा० आ० विश्वविद्यालयकी आचार्य्य परीक्षा या किसी विश्वविद्यालयकी सर्वोच्च संस्कृत परीक्षामें उत्तीर्ण होना आवश्यक है अथवा तत्सम योग्यता को प्रमाणित करने पर भी इस परीक्षाको दे सकते हैं। इसमें वेद, दर्शन आदि परीक्षाओं पर पृथक् पृथक् 'महोपाध्याय' उपाधियां प्राप्त होंगी।

उनको निम्नलिखित ग्रन्थों से निबन्ध रचना में सहायता लेनी होगी।

**वेद**—ईश, केन, कठ उपनिषदों पर भारतधर्ममहामण्डल द्वारा प्रकाशित भाष्य। बाकी सात उपनिषदों पर शाङ्करभाष्य तथा साम्प्रदायिक भाष्यों का तुलनात्मक ज्ञान जिसमें छान्दोग्य का अन्तिम ५ पांच अध्याय और बृहदारण्य का प्रथम ४ अध्याय विशेष द्रष्टव्य है।

शतपथ ब्राह्मण, ऋग्वेदका नासदीय सूक्त, निरुक्त, पाणिनीय और याज्ञवल्क्य शिक्षा।

सायणकृत—ऋग्वेदभाष्य भूमिका। सभाष्य चारों वेदों का समालोचनात्मक ज्ञान। प्राच्य पाश्चात्य विद्वानों की वेदविषयक गवेषणाएं।

**दर्शन**—सभाष्य सप्तदर्शनों का ज्ञान (उसमें कर्ममीमांसा, दैवीमीमांसा योगदर्शन पर महामण्डल से प्रकाशित भाष्य।)

ब्रह्मसूत्र पर शाङ्करभाष्य के अतिरिक्त चारो सम्प्रदायों का भाष्य तथा ब्रह्मसूत्र चतुःसूत्री समन्वयभाष्य द्रष्टव्य है। तथा प्राच्य प्रतीच्य दर्शनों का तुलनात्मक ज्ञान भी अपेक्षित है।

शाङ्करभाष्यसहित दशोपनिषदें (ईश, केन, कठ पर महामण्डल द्वारा प्रकाशित भाष्य भी)

**व्याकरण**—महाभाष्य सम्पूर्ण,

स्फोटचन्द्रिका

व्युत्पत्तिवाद,
शब्दशक्ति प्रकाशिका,
शक्तिवाद,
शब्दकौस्तुभ।

साहित्य—काव्यप्रकाश,
रसगङ्गाधर,
ध्वन्यालोक,
व्यक्तिविवेक,
भरतनाट्यसूत्र,
सरस्वती कण्ठाभरण,
} इन ग्रन्थोंका समालोचनात्मक ज्ञान अपेक्षित है।

धर्मशास्त्र—पारस्कर गृह्यसूत्र,
बौधायन,
लाट्यायन,
आपस्तम्ब
} इन सूत्रोंका भाष्य।

निर्णयसिन्धु,
प्रायश्चित्तेन्दुशेखर,
वीरमित्रोदय,
याज्ञवल्क्यस्मृति समिताक्षरा,
बालम्भट्टि
} (इन धर्मशास्त्रीय ग्रन्थोंका ऊहापोहात्मक ज्ञान अपेक्षित है।)

ज्योतिष—पराशर और जैमिनि दोनोंके सिद्धान्तोंका यथार्थ ज्ञान।
संग्रहशिरोमणि।
पराशरीहोरा।
बृहज्जातक।
} इन ग्रन्थोंका परिशीलनात्मक ज्ञान।

श्रीमद्भागवतका पञ्चमस्कन्ध और देवी भागवतका अष्टमस्कन्ध द्रष्टव्य है।

आयुर्वेद—चरकसंहिता
सुश्रुतसंहिता,
वाग्भट
} इन ग्रन्थोंका समालोचनात्मक ज्ञान।

आयुर्वेदकी औषध प्रक्रियाका ज्ञान।
अग्निपुराणका चिकित्सा प्रकरण,
पाश्चात्यचिकित्सा पद्धतिका साधारण ज्ञान।

पुराण—अष्टादश पुराणोंका रहस्यात्मक तथा सामञ्जस्यात्मक ज्ञान।
उपपुराणोंका पर्य्यवेक्षण, तथा पुराणोंपर पाश्चात्य एवं एतद्देशीय

भिन्न २ समालोचकोंके ग्रन्थोंका पर्य्यवेक्षणपूर्वक पुराणकी सत्य-मर्य्यादाका रक्षात्मक ज्ञान।

आगम—रुद्रयामल,
ब्रह्मयामल,
विष्णुयामल,
तन्त्रसार,
मन्त्रमहोदधि,
शारदातिलक,
तारारहस्य,
प्राणतोषिणी,
मेरुतन्त्र,
श्यामारहस्य,
महानिर्वाण तन्त्र,
भैरव तन्त्र,
शाक्तप्रमोद
} इन तान्त्रिक ग्रन्थोंका यथार्थ ज्ञान।

नोट—सभी विषयोंके महोपाध्याय परीक्षार्थियोंको निम्नलिखित धार्मिक-ग्रन्थोंका परिशीलनात्मक ज्ञान प्राप्त करना अत्यावश्यक है।

धर्मकल्पद्रुम ( सम्पूर्ण )
धर्मविज्ञान।
पुराणरहस्यम्।
सप्त गीतायें।
सप्तशतीगीता ( चण्डी ) महामण्डल द्वारा प्रकाशित।
गीतार्थ चन्द्रिका।
वेदान्तदर्शनका चतुःसूत्री भाष्य ( महामण्डल द्वारा प्रकाशित। )
प्रवीण भारत और नवीन भारत।
उपदेशपारिजात।
व्रतोत्सवचन्द्रिका।

# ( ३-४ ) डी० ओ० सी० और पी० एच्० डी० परीक्षा ।

**The Conferment of Doctorates on Distinguished Scholars by the All-India Sanskrit and Spiritual University of Sri Bharat Dharma Mahamandal on the Basis of Their Advanced Researches in Sanskrit Literature, Philosophy and Theology.**

## I. OBJECT.

No culture, intercommunal or international, is complete unless it is based on the sound comparative study of both the oriental and occidental philosophies, theologies and literatures. The knowledge of Sanskrit is the backbone of such culture as Sanskrit is the fountain-head from which all languages and literatures of the world have sprung. It is with a view to encourage the spread of this national and international culture and to properly recognise and honour such great educationists of all-world fame that the Board of this All-India Sanskrit University have decided to confer doctorates on them on the basis of their advanced researches in Sanskrit Literature, Philosophy and Theology.

## II. TWO DEGREES OF THE DOCTORATE.

There will be two degrees of the doctorate, *viz.*:—Doctor of Philosophy (Ph. D.), and Doctor of Oriental Culture (D O.C), and the competition will be open to scholars of all countries and nationalities,

## III. CONDITIONS TO BE FULFILLED.

All intending candidates must satisfy the following conditions :—

(*a*) He should be a scholar of considerable reputation.

(*b*) He must produce evidence of his fitness for the competition :—

(*i*) He may be an M. A. or a distinguished graduate; (preference to be given to a scholar who has done some substantial research work already);

*OR,*

(*ii*) A principal or a professor of a college or a teacher of great reputation and scholarship in a school ;

*OR,*

(*iii*) A scholar who has already done considerable research work in the domain of Indian or Indo-European culture or has written or published original articles or articles of comparative studies on Indian and European Literature, Philosophy and Religion;

*OR,*

(*iv*) A Sanskrit scholar of repute belonging to any famous University or non-University institution of Sanskrit culture ;

*OR,*

(*v*) A scholar who has already acquired distinction and received degrees or high-class diplomas from Sri Bharat Dharma Mahamandal and subsequently done good work in his special subject.

## IV. MANAGEMENT.

(*a*) The intending candidate should send his application to the Secretary of the Board.

(*b*) If he is considered fit, he will be asked to send the title and short conspectus of his thesis by a certain date.

(*c*) When he submits his complete thesis for examination, he will be required to send Rs. 25/- as examination fee to the University.

(*d*) All candidates must first be registered members of this University and the registration fee will be Rs. 2/-.

## V. THE NATURE OF THE THESIS.

( I ) Comparative study of some special aspects of Indian and European culture.

( II ) Originality of thinking and novelty of presentation, regarding some aspects of ancient Indian culture or religion, will be demanded. A few examples may be given.—

A. Indian Scriptures:

(1) Vedas.

(2) Upanishads.

(3) Darshanas.
(4) Puranas.
(5) Tantras.

B. Religio-Literary Topics—They may be many:
(1) Bhagwat Gita and other Gitas.
(2) Yoga Systems of India.
(3) Vaishnava Cult.
(4) Shakti Cult.
(5) Indian Religious Creeds.

C. Philosophico-Literary Topics :
(1) The seven systems of Vaidic Philosophy.
(2) Vaidic and non-Vaidic Philosophies of India.

D. Comparative studies on:
(1) Religions of the East and the West.
(2) Philosophies of the East and the West.
(3) Occult Sciences of the East and the West.
(4) Sociology of India and the West.

(III) The thesis may be written in English or in Sanskrit.

(IV) A very high standard of scholarship and originality will be expected.

(V) The thesis, in the case of English, should be typed and, in the case of Sanskrit, should be very clearly and legibly written.

(VI) The thesis should not be interminably lengthy. Even a short thesis, say of 30 or 40 pages, if it be profound and original, will be given credit.

*Note.*—The successful thesis may be published by the University and will always be the property of the University.

## VI. EXAMINATIONS.

(*a*) A *Board of Experts* will be appointed for the examination of every thesis. These men will be renowned scholars in that particular subject—scholars of all-India or international fame—hailing from the different provinces of India, or, if necessary, from other countries. Thus there will be several boards for different theses. They

will submit their report to the University regarding the success, or otherwise of the candidates.

(b) After the examination of the thesis, the members of the Board, if they so desire, may call the candidates and hold a *viva-voce* examination on the subject itself or on the books which the candidates have read and appended a list of, or they may hold necessary communications with the candidates with regard to this matter.

*Nete.*—Every candidate must give a list of the books he has read on the subject and mention the name or names of person or persons who have guided and helped him.

(c) After reports of success or otherwise have been received from the Board, the results will be published in all respectable papers in India and abroad and successful candidates will be duly informed. The choice of conferment of any of the titles to the successful Hindu scholars or the deserving foreign scholars will rest with the Board of Experts appointed for the purpose.

(d) The University, if it so desires, may appoint a Committee of Experts who will suggest a very large number of topics for theses and an exhaustive list of books. The list may be printed and circulated to intending candidates for consultation and guidance. But in advanced researches such as these, it will always be desirable to make such topics and books suggestive rather than compulsory.

## VII. CONVOCATION.

(a) At a Convocation of the University in which all the examiners, the University people and a large number of the most renowned scholars will be present, the Doctor's Degree or Degrees will be presented to the successful candidate or candidates, *in a typical Indian fashion*, If possible, a Yajna will be performed on this occasion to invest the function with a spiritual significance. Some Sanskrit *slokas* (verses) in the form of Ashirvad will be composed for this occasion to be pronounced by the learned Pandits of Benares. The President of the

function will present the degree or degrees to the successful candidates. The candidates unable to be present in the function will be awarded diplomas through respectable institutions or Darbars or High Government Officials of the locality, or direct, with due regard befitting the national honour.

(b) The successful candidates will be entitled to write their respective titles, *viz.*, Doctor of Philosophy (Ph. D.) and Doctor of Oriental Culture (D. O. C.) after their names and these will be recognized everywhere in India and abroad.

## ( ५ ) बी० डी० सी० परीक्षा ।

## The B. D. C. (Bachelor of Dharmic Culture) Title Examination of the All-India Sanskrit and Spiritual University of Bharat Dharma Mahamandal.

### I. OBJECTS.

No education is perfect, nay even worth the name, if it fails to build the character and moral life of the alumni and give a healthy, bracing religious and spiritual tone to their hearts and minds. The miserable failures of the present-day universities in this respect are simply due to the fact that they have not paid as much attention to the spiritual aspect of education as to its secular side. It is with a view to fulfil this noble and unique object as well as to help these seminaries of learning in carrying out their true ideals of existence that among other examinations the above title examination has been inaugurated by this Examining University.

### II. SPECIAL FACILITIES PROVIDED.

No examination, oral or written, will be required to be undergone by the student. He will only write in English a religious thesis on the subject duly announced by the Board of Examination in the organ of the University and submit the same within the fixed period to the Secretary of the University.

### III. THE BENEFITS TO ACCRUE TO THE SUCCESSFUL CANDIDATE.

(a) In addition to the academic benefit of henceforward being called a sound scholar of Hindu Philosophy and Theology and the spiritual benefit of getting initiated into all the fundamental principles of a typically Sanatanist Hindu life, the successful candidate will be

honoured with the title of B. D. C. (Bachelor of Dharmic Culture) the special diploma whereof will be conferred on him.

(*b*) Candidate of special merit will have a fair chance of receiving rewards upto Rs. 100/- besides gold or silver medals.

## IV. THE CONDITIONS TO BE FULFILLED BY THE INTENDING CANDIDATE.

(*a*) He should send in his application with the form duly filled up. The application form will be available free of charge at the Head Office.

(*b*) The thesis should not be too lengthy. Even a short thesis covering 20 or 25 pages of a foolscap paper, if nicely written and containing profound thoughts, will be given due credit.

(*c*) The thesis should be very clearly typed on one side of the paper or legibly written.

(*d*) The thesis should be sent under registered cover, acknowledgment due, with a remittance of Rs. 4/- as examination fee.

(*e*) In sending the thesis to the Secretary, All-India Sanskrit and Spiritual University Office, Mahamandal Buildings, Jagatganj, Benares, the candidate should enclose two certificates to the effect that he has studied all the books prescribed by the Board and that the thesis is his own production. The certificates should be one from the Principal of a college or Head-master of a school and the other from the officer-in-charge of the examining centre of the University, or where there is no such centre, from a member of Sri Bharat Dharma Mahamandal.

### THE BOOKS PRESCRIBED FOR THE TITLE EXAMINATION.

The following books have been prescribed by the Board for the present as the basis of study for writing out the thesis :—

(1) The World's Eternal Religion (English); (2) India's Eternal Religion (English); (3) Bhagawat Gita, part I (English); (4) Markandeya Puran with commentary published by the Mahamandal (Sanskrit and Hindi); (5) Kathopanishad with special commentary published by the Mahamandal in Sanskrit and Hindi; (6) Tattwabodh in Sanskrit and Hindi; (7) Trivediya Sandhya; (8) Pravin Bharat (Hindi); (9) Dharmavignan (Hindi); (10) Gitartha Chandrika (Hindi).

## V. MISCELLANEOUS.

(*a*) The subject of the thesis will be announced by the Head office every year in the month of January and it should be submitted to the Board by the end of December.

(*b*) These dates may be changed if necessity arises. Any change of this kind will be published in the organ of the University.

(c) All the prescribed books, mentioned above, may be purchased locally or can be had at The Bharat Dharma Mahamandal Office, Jagatganj, Benares.

(d) The thesis will be the property of the University Board and will not be returned to the writer.

## ( ६ ) पुरोहितरत्न उपाधि परीक्षा ।

( निबन्ध रचनार्थ निम्नलिखित ग्रन्थोंसे सहायता ले सकते हैं। )

पारस्कर गृह्यसूत्र कर्कभाष्य ।

आपस्तम्ब धर्मसूत्र ।

अग्निष्टोम पद्धति स्वशाखीया ।

मन्त्रसंहिता, दशकर्मपद्धति ।

मण्डप कुण्ड सिद्धि तथा रुद्राष्टाध्यायी ।

कर्ममीमांसादर्शन ( धर्म और संस्कारपाद )। महामण्डलसे प्रकाशित ।

धर्मकल्पद्रुम ( चतुर्थखण्ड और सप्तमखण्ड )।

पुराणरहस्यम् ।

सप्तशतीगीता । ( महामण्डलसे प्रकाशित )

व्रतोत्सव चन्द्रिका ।

धर्म चन्द्रिका ।

जातीयमहायज्ञसाधन ।

## ( ७ ) देवार्चनरत्न उपाधिपरीक्षा ।

निबन्ध रचनार्थ निम्नलिखित ग्रन्थ द्रष्टव्य हैं—

दशकर्मपद्धति ।

रुद्राष्टाध्यायी ।

नित्यहोमपद्धति ।

पञ्चमहायज्ञ ।

ग्रहशान्ति ।

प्रतिष्ठामयूख ।

इन दोनों परीक्षाओंमें उपर्युक्त ग्रन्थोंके अतिरिक्त महामण्डलसे प्रकाशित इन ग्रन्थोंका विशेष अध्ययन अपेक्षित है।—

धर्मकल्पद्रुम ( तृतीयखण्ड ),

मन्त्रयोगसंहिता,

नित्यकर्मचन्द्रिका,

धर्मकर्मदीपिका,

स्तोत्रकुसुमाञ्जलि,

त्रिवेदीय सन्ध्या,

महामण्डल डाइरेक्टरी ( धर्मखण्ड )

सुगमसाधन चन्द्रिका,

आचारचन्द्रिका,

व्रतोत्सव चन्द्रिका,

जातीयमहायज्ञ साधन।

( ८ ) व्याख्यानवाचस्पति उपाधिपरीक्षा।

इसको वे ही विद्वान् दे सकेंगे जो कमसे कम किसी यूनिवर्सिटीकी आचार्य्य या शास्त्रिपरीक्षा पास हों या तत्समयोग्यता रखते हों।

निबन्ध रचनाके लिये निम्नलिखित ग्रन्थोंसे सहायता लेना आवश्यक है-

महाभारत,

भागवत।

रामायण। ( वाल्मीकीय )

सप्तदर्शन सभाष्य।

कर्ममीमांसा दर्शन,

दैवीमीमांसा,

ईश, केन, कठोपनिषद्। ( महामण्डलसे प्रकाशित )

ऋग्वेदभाष्यभूमिका ( सायणकी, )

निरुक्त।

यजुर्वेद संहिता।

अथर्ववेदसंहिता।

भिन्न भिन्न सम्प्रदाय, पन्थ तथा उपधर्म-विषयक ग्रन्थ। वेदों और पुराणों पर प्राच्य प्रतीच्य विद्वानोंके गवेषणात्मक ग्रन्थ।

भारतवर्ष तथा पृथिवीके इतिहास भूगोल विषयक साधारण ज्ञान।

इनके अतिरिक्त श्रीभारतधर्ममहामण्डलसे प्रकाशित—

धर्मकल्पद्रुम सम्पूर्ण,

धर्मविज्ञान,

पुराणरहस्यम्,

नवीन भारत, प्रवीण भारत,

उपदेशपारिजात,

जातीयमहायज्ञसाधन,

चरित्रचन्द्रिका,

सतीचरित्र चन्द्रिका,

गीतार्थचन्द्रिका,

व्रतोत्सव चन्द्रिका,

तुलसीदासजीका रामचरित मानस,

सप्तशतीगीता,

योगदर्शन,

ब्रह्मसूत्रपर चतुःसूत्री समन्वय भाष्य,

ये ग्रन्थ अवश्य परिशीलन करने पड़ेंगे।

## (६) राष्ट्रभाषाभास्कर उपाधि परीक्षा।

वे ही दे सकेंगे जो किसी भी विश्वविद्यालयकी कोई भी उपाधि परीक्षा पास हों या प्रयागके हिन्दी साहित्यसम्मेलनकी साहित्यरत्न परीक्षा पास हों या तत्समयोग्यता रखते हों।

निबन्ध रचनामें निम्नलिखित ग्रन्थ निर्दिष्ट हैं।—

सूरसागर।

विनय पत्रिका तुलसीदासजीकी।

कवितावली।

भूषणग्रन्थावली। हरिश्चन्द्र ग्रन्थावली।

कविताकौमुदी (सम्पूर्ण)

विहारीकी सतसई।

हिन्दीका इतिहास। (मिश्रबन्धु)

विद्यापति ठक्कुरकी ग्रन्थावली। कबीर ग्रन्थावली।

प्राचीन एवं अर्वाचीन हिन्दी कवियोंके ग्रन्थोंकी तुलनात्मक समालोचना।

इसके सिवाय श्रीभारतधर्ममहामण्डलसे प्रकाशित निम्नलिखित ग्रन्थोंका अवश्य परिशीलन करना होगा।

धर्मकल्पद्रुम सम्पूर्ण,

धर्मविज्ञान,

धर्मसुधाकर,

साधनचन्द्रिका,

शास्त्रचन्द्रिका,

प्रवीण भारत,

आचारप्रबन्ध,

गीतार्थचन्द्रिका,

योगदर्शन,

मार्कण्डेयपुराण, ( हिन्दी रहस्योद्घाटिनी टीका सहित )

देवीभागवत,

चरित्रचन्द्रिका,

कहावत-रत्नाकर,

जातीय महायज्ञ साधन।

१६—प्रश्नपत्रों द्वारा गृहीत होनेवाली निम्नलिखित परीक्षाओंमें पाठ्यक्रम तथा परीक्षाक्रम निम्नलिखित होंगे।

## (१०) आचार्य्य उपाधि परीक्षा।

इस परीक्षामें वे ही विद्वान् बैठ सकगे जो संस्कृत-विश्वविद्यालयको शास्त्रिपरीक्षा पास हों या किसी भी यूनिवर्सिटीकी तत्सम परीक्षा पास हों या उतनी योग्यता रखते हों। इस परीक्षामें चार प्रश्नपत्र होंगे, जिनमें १, २, पत्र सभीके लिये अनिवार्य होंगे, केवल आयुर्वेदमें धर्मसम्बन्धी प्रथमपत्र ही रहेगा जिसमें ५० नम्बरके धर्मशास्त्र विषयक प्रश्न होंगे। और ५० नम्बरके आयुर्वेद सम्बन्धी अनिर्दिष्ट ग्रन्थोंसे प्रश्न रहेंगे। तीसरा और चौथा पत्र क, ख, ग, घ, ङ, च, छ, ज, झ, और ञ में से कोई एक लिया जा सकेगा। दो धर्मसम्बन्धी पत्रोंके उत्तर हिन्दी या संस्कृत भाषामें दिये जा सकेंगे। सिर्फ तृतीय और चतुर्थपत्र संस्कृतमें लिखे जायँगे।

आचार्य्य परीक्षाके जो विद्यार्थी अन्य यूनिवर्सिटी ( विश्वविद्यालय ) के जिस विषयकी आचार्य्य या तत्सम उपाधि परीक्षा पास होंगे वे उस विषयके तृतीय और चतुर्थ प्रश्न पत्रसे मुक्त किये जा सकेंगे।

प्र० पत्र—१ साधारणधर्म सम्बन्धी—

२ धर्मविज्ञान,

३ धर्मसुधाकर,

४ गीतार्थचन्द्रिका, ( १२—१८ तक )

५ पुराणरहस्यम्,

६ उपदेश पारिजात,

७ नवीन भारत, प्रवीण भारत,

८ भारतवर्षका प्राचीन इतिवृत्त ( महामण्डल द्वारा प्रकाशित )

द्वि० पत्र—१ कर्ममीमांसादर्शन ( महामण्डल द्वारा प्रकाशित )
२ धर्मकल्पद्रुम, ( सम्पूर्ण )
३ चतुःसूत्री-समन्वय भाष्य ( महामण्डल )
४ तत्तच्छास्त्रविषयक गंभीर गवेषणापूर्ण निबन्ध ।

## आचार्य उपाधि परीक्षा ( वैकल्पिकविषय । )

### ( क ) वेद

तृ० प०—१—ऋग्वेद ऐतरेय ब्राह्मण-सायण भाष्य सहित-
२—ऋक् प्रातिशाख्य और ऋग्वेद भाष्यभूमिका ( सायणकी )

( अथवा )

तृ० प०—१—वाजसनेयी संहिता ( भाष्य सहिता । )
२—यजुः प्रातिशाख्य ( सभाष्य । )

( अथवा )

तृ० प०—१—साम संहिता ( सायण भाष्य सहिता । )
२—साम विधान ब्राह्मण ।

च० प०—१—निरुक्त सम्पूर्ण ।
२—कठोपनिषद् और बृहदारण्यकोपनिषद् ( महामण्डलीय )
३—आश्वलायन, कात्यायन, आपस्तम्ब अथवा लाट्यायन श्रौत सूत्रोंमेंसे कोई एक ।

### ( ख ) व्याकरण ।

तृ० प० —१—पातञ्जल महाभाष्य ( प्रथमाध्याय )
च० प०—१—लघुशब्देन्दु शेखर ( अव्ययीभावान्त )
२—परिभाषेन्दु शेखर ।

### ( ग ) दर्शन

तृ० पत्र—न्याय वैशेषिक-१—गौतम सूत्र ( वात्स्यायनभाष्य सहित )
२—वैशेषिक सूत्र ( उपस्कार सहित )
सां० यो०— १—सांख्य सूत्र ( विज्ञानभिक्षुभाष्य )
२—श्वेताश्वतर उपनिषद्
मीमांसा— १—शास्त्रदीपिका ( तर्कपादान्त )
२—शाबर भाष्य
अद्वैतवेदान्त-१—ब्रह्मसूत्र-शांकरभाष्य ( संपूर्ण )

२—अद्वैतसिद्धि ( मिथ्यात्व निरुक्ति )

३—सिद्धान्तलेश

विशिष्टाद्वैत—१—श्रीभाष्य सम्पूर्ण

२—शतदूषणी वाद १-५०

द्वैतवेदान्त—१—ब्रह्मसूत्रमाध्व भाष्य ( सम्पूर्ण )

२—तात्पर्य्यचन्द्रिका ( प्रथम पाद )

३—वादावली

शुद्धाद्वैत— १—अणुभाष्य ( सम्पूर्ण )

२—सुबोधिनी जन्म प्रकरण रासपंचाध्यायी सहित।

सर्वदर्शन— १—न्यायसूत्र ( वात्सायनभाष्य )

२—योगसूत्र ( व्यासभाष्य सहित )

३—वेदान्तसूत्र ( शांकरभाष्य )

चतु० प० — १-छान्दोग्य, बृहदारण्यक, (तत्तद् आचार्योंके भाष्य सहित)

२—योगदर्शन ( महामण्डलसे प्रकाशित )

नोट—सभी दर्शनोंके परीक्षार्थियोंको चतुर्थ पेपर एकही रहेगा। सिर्फ विशिष्टाद्वैत द्वैत और शुद्धाद्वैतके विद्यार्थियोंको अपने आचार्योंके मतानुसार उपनिषदोंके अर्थ लिखने होंगे।

( घ ) साहित्य।

तृ० प०—१—साहित्यदर्पण—और काव्यप्रकाश सम्पूर्ण ( समालोचनात्मक अध्ययन )

२—नैषध—नवसे तेरह सर्ग तक और १७ वाँ सर्ग।

३—माघ ११ से १४ सर्ग तक

चतुर्थपत्र-१—कादम्बरी सम्पूर्ण।

२—गद्यपद्यकाव्य रचना।

( ङ ) धर्मशास्त्र।

तृ० प०—१—मनुस्मृति—कुल्लूक भट्टटीका।

२—याज्ञवल्क्यस्मृति-मिताक्षरासहिता।

च० प०—१—शंखलिखित स्मृति।

२—पारस्कर गृह्यसूत्र।

३—दैवी मीमांसादर्शन।

( च ) ज्योतिष।

तृ० प०—१—सिद्धान्त शिरोमणि, गणिताध्याय।

२— ,, ,, गोलाध्याय

च० प०—१—नरपति जयचर्य्या
२—सूर्यसिद्धान्तः
३—केतकी। या ग्रहलाघव सोपपत्तिक

( छ ) पुराण।

तृ० प०—१—श्री मद्भागवत ( सम्पूर्ण )
२—विष्णु पुराण
३—अग्निपुराण

च० प०—१—महाभारत—उद्योग, वन, अनुशासन, शान्ति और विराटपर्व

[ ज ] आगम।

तृ० प०—१—मन्त्रमहोदधि, प्रत्यभिज्ञादर्शन।
२—तन्त्रसार ( कृष्णानन्दका )
३—शारदातिलक।

च० प०—१—शिवसूत्र।
२—प्राणतोषिणी।
३—रुद्रयामल, महानिर्वाण तन्त्र।

( झ ) कर्मकाण्ड।

तृ० प०—१—श्राद्धविवेक
२—सर्वशेष प्रतिष्ठा प्रकाश
३—शतचण्डी विधि

च० प०—१—कर्ममीमांसादर्शन
२—दत्तकविधान
३—मंत्रार्थदीपिका

( ञ ) आयुर्वेद।

द्वि० प०—१—चरक संहिता ( सम्पूर्ण )
तृ० प०—२—सुश्रुत संहिता ( सम्पूर्ण )
च० प०—१—अष्टाङ्ग हृदय ( सम्पूर्ण )

( ११ ) शास्त्रि उपाधिपरीक्षा।

इस परीक्षामें वे ही विद्यार्थी बैठ सकेंगे जो सं० विश्वविद्यालय ( यूनि-वर्सिटी ) की विशारद (मध्यमा) परीक्षा पास हों या तत्सम योग्यता रखते हों। इस परीक्षामें चार प्रश्न पत्र होंगे, जिनमें दो प्रश्नपत्र सभीके लिये अनिवार्य्य हैं। तीसरा और चौथा क, ख, ग, घ, ङ, च, छ, ज, झ, ञ और ट में से कोई

एक लिया जा सकेगा। केवल आयुर्वेदमें धर्म सम्बन्धी प्रथम पत्र ही रहेगा इसमें ५० नम्बरके धर्म सम्बन्धी प्रश्न रहेंगे और ५० नम्बरका अष्टांग हृदय ( सूत्र स्थान )।

प्रथम और द्वितीयपत्रके उत्तर हिन्दी या संस्कृतमें लिखने होंगे। तृतीय और चतुर्थ पत्रके उत्तर संस्कृतमें ही लिखने होंगे और व्याख्यानरत्न ( शास्त्री ) के सभी पत्रोंके उत्तर हिन्दीमें हो सकेंगे।

शास्त्री परीक्षाके जो विद्यार्थी, किसी भी यूनिवर्सिटी ( विश्वविद्यालय ) के जिस विषयकी शास्त्री या तत्सम उपाधि परीक्षा पास होंगे, वे उस विषयके तृतीय और चतुर्थ पत्रसे मुक्त किये जा सकेंगे।

साधारण पत्र ( धार्मिक )

प्रथम पत्र—१—धर्म विज्ञान ( उपासना तत्त्व और मन्त्र-शास्त्र तक।
२—गीतार्थचन्द्रिका ( ७–१२ अ० तक )
३—पुराणरहस्यम् ( संस्कृत )
४—जातीय महायज्ञ साधन।

द्वि० प०—१—धर्मकल्पद्रुम ( १, ३, ५, खण्ड )
२—शक्ति गीता
३—भारतवर्षका इतिवृत्त (महामण्डलसे प्रकाशित)।

( क ) वेद।

तृ० प०—१—माध्यन्दिनी सायण भाष्य सहित शुक्ल यजुर्वेद संहिता।
२—कृष्ण यजुर्वेद तैत्तिरीय संहिता ( १ का० ४ अ० )

च० प०—१—ऋग्वेद ( १—३—अ० तक ) सभाष्य
२—निरुक्तालोचन ( सामाश्रमी )
३—ऐतरेय ब्राह्मण-हरिश्चन्द्रोपाख्यानम्

( ख ) व्याकरण।

तृ० प०—१—सिद्धान्तकौमुदीके स्वरवैदिकी और उणादिप्रकरण।
२—पाणिनीय शिक्षा और मनोरमाका सन्धिभाग।
३—वैयाकरण भूषणसार।
४—लघुमंजूषा।

अथवा

१—रामाश्रमी टीकासहित सारस्वतचन्द्रिका, लघुभाष्य और सार-मञ्जरी।

च० प० १—भट्टिकाव्यम्।
२—वृत्त-रत्नाकर।

### ( ग ) दर्शन

तृ० प०—न्यायवैशेषिक—१—प्रशस्तपादभाष्य
२—न्यायकुसुमांजलिः
सां० यो०—१—सांख्यसूत्र ( अनिरुद्ध वृत्ति )
२—योगसूत्र ( व्यास भाष्य )
मीमांसा—१—जैमिनीय न्यायमाला ( ३ अध्याय तक )
२—शाबरभाष्य ( तर्कपादान्त )
अद्वैतवेदान्त—१—शांकर भाष्य ( तर्कपादान्त )
२—पंचदशी ( मूल ) सम्पूर्ण
विशिष्टाद्वैत—१—वेदार्थसंग्रह
२—सिद्धित्रय
३—चतुः सूत्री ( श्रीभाष्य सहित
द्वैत वेदान्त—१—प्रमाणपद्धति
२—तत्वोद्योत
३—गीता माध्वभाष्यसहित
शुद्धाद्वैत—१—विद्वन्मण्डन
२—प्रस्थान रत्नाकर
३—अणुभाष्य त्रिसूत्री )
सर्वदर्शन—१—सर्वदर्शनसंग्रह
२—सांख्य तत्वकौमुदी
३—पंचदशी सम्पूर्ण।
चतु० पत्र—१—वेदान्त चतुः सूत्री समन्वय भाष्य ( महामण्डलसे प्रकाशित )।
२—कर्म मीमांसादर्शन।
३—दैवी मीमांसादर्शन

### ( घ ) साहित्य

तृ० पत्र १—साहित्यदर्पण १, ३, ६, ७, १०वाँ परिच्छेद।
२—मेघदूत
३—माघ ४ सर्ग तक और नैषध ५ सर्ग तक।
च० पत्र १—मुद्राराक्षस
२—वेणीसंहार
३—कादम्बरी पूर्वार्द्ध

ङ—धर्म

तृ० प० १—मनुस्मृति ( ५-८ अध्याय तक )
„ २—निर्णयसिन्धु ( प्रथम परिच्छेद )
„ ३—याज्ञवल्क्यस्मृति ( व्यवहाराध्याय )
च० प० १—शंभु गीता ( सं० )
२—धर्मकल्पद्रुम ( २, ४, ६, ७, खण्ड )
३—कर्ममीमांसा ( दो पाद )

( च ) ज्योतिष ।

तृ० प० १—जैमिनीय सूत्र भाष्य ( पं० रामयत्न ओझा कृत )
२—बृहज्जातक
३—बृहद्वास्तु माला ( पं० रामनिहोरशर्मकृत )
४—क्षेत्रमितिः अ० ५
च० प० १—जातकालंकार
२—सरलत्रिकोणमितिः ।

(छ) पुराण

तृ० प्र० १—देवी भागवत
२—मार्कण्डेय पुराण
३—वाल्मीकीय रामायण ( बाल और अयोध्याकाण्ड )
४—महाभारत ( आदि० सभा० और भीष्मपर्व )
च० प्र० १—सप्तशती ( मातृमहिमा टीका )
२—अग्निपुराण
३—पुराण रहस्य

(ज) आगम ।

तृ० प० १—तन्त्रसार पूर्वार्द्ध
२—मन्त्रमहोदधि ११ तरङ्ग,
च० प० १—कालिका पुराण,
२—प्राणतोषिणी ।

( झ ) कर्मकाण्ड

तृ० प० १—प्रायश्चित्तपद्धति ।
२—पंचांगपद्धति
३—प्रतिष्ठामयूख

च० प० १—पार्वण श्राद्ध एकोदिष्ट श्राद्ध
२—कुण्डसिद्धि
३—धर्म सिन्धु ( सम्पूर्ण )

(ञ) आयुर्वेद

द्वि० प० १—चरक संहिता ( निदानेन्द्रियचिकित्सा )
तृ० प० १—सुश्रुत संहिता ( सूत्रस्थान शारीरस्थान )
च० प० २—माधवनिदान (मधुकोष टीका) तथा आयुर्वेदीय प्रबन्ध रचना

(ट) व्याख्यान ( व्याख्यानरत्न )

तृ० प० १—धर्मविज्ञान ( उत्तरार्द्ध ) भक्ति और योगसे अन्त तक।
२—धर्मकल्पद्रुम ( २रा और ८वाँ खण्ड )
३—दयानन्द तिमिरभास्कर
४—ईश, केन प्रश्न, मुंडक
५—भारतीय इतिवृत्त (महामण्डलसे प्रकाशित)
च० प० १—मनुस्मृति सम्पूर्ण
२—गीतार्थचन्द्रिका
३—सम्प्रदाय, पंथ और उपधर्मोंका साधारण ज्ञान।
४—निरुक्त दैवत काण्ड
५—महाभारत ( शान्ति पर्व )

## (१२) श्रौतकर्मनिष्णात उपाधि परीक्षा।

इस परीक्षा तथा पौरोहित्यनिष्णातपरीक्षामें वे परीक्षार्थी प्रविष्ट हो सकेंगे जो किसी भी संस्कृत विशारद (मध्यमा) परीक्षामें उत्तीर्ण हों, अथवा तत्सम योग्यता रखते हों। इन दोनों परीक्षाओंमें तीन प्रश्नपत्र होंगे।

प्रथमपत्र—मन्त्रसंहिता ( सस्वरा स्वशाखीया )
श्रौताग्न्याधानपद्धति स्वशाखीया।
अग्निहोत्र पद्धति
पुत्रेष्टि।

द्वितीयपत्र—श्रौतसूत्र ( परिभाषा और प्रायश्चित्त अध्याय स्वशाखीय )
आपस्तम्ब धर्मसूत्र।
अग्निष्टोमपद्धतिः स्वशाखीया।
ब्राह्मणभाग ( दर्शपौर्णमासीय स्वशाखीय )
कर्ममीमांसादर्शन।

पुराणरहस्यम्। ( संस्कृत )
सप्तशती गीता। ( महामण्डल द्वारा प्रकाशित )

तृतीय पत्र—जातीय महायज्ञ साधन,
भारतवर्षका इतिहास ( महामण्डलद्वारा प्रकाशित )
गीतार्थ चन्द्रिका।
धर्मसुधाकर।
धर्मकल्पद्रुमका तृतीय और अष्टमखण्ड।
श्रौतकर्मकाण्डविषयक निबन्ध रचना।

## (१३) पौरोहित्यनिष्णात उपाधिपरीक्षा।

प्रथम पत्र—दशकर्मपद्धति स्वशाखीय।
और्ध्वदेहिक कृत्य ,,
पार्वणश्राद्ध ,,
एकोद्दिष्टश्राद्ध ,,
रुद्राष्टाध्यायी ,,
प्रायश्चित्त पद्धति।
वास्तुशान्ति। (पं० विद्याधरजी कृत)
ग्रहशान्ति।
पञ्चाङ्गपद्धति।
प्रतिष्ठामयूख।
कुण्डसिद्धि।
स्मार्त्ताधान-पिण्डपितृयाग।
नित्यहोम-पञ्चमहायज्ञ।
धर्मसिन्धु। ( सम्पूर्ण )

द्वितीय पत्र—सप्तशतीगीता ( मातृमहिमाप्रकाशिनी टीका सहित )
धर्मसुधाकर।
पुराणरहस्यम्।
भारतवर्षका इतिहास। ( महामण्डलद्वारा प्रकाशित )

तृतीय पत्र—त्रिवेदीय सन्ध्या।
नित्यकर्म चन्द्रिका।
व्रतोत्सवचन्द्रिका।
जातीयमहायज्ञ साधन।
कर्मकाण्डविषयक प्रबन्धरचना।

## (१४) मध्यमा ( विशारद )

इस परीक्षामें उन उन विषयोंकी प्रवेशिका तथा अन्य यूनीवर्सिटियोंकी प्रथमा परीक्षोत्तीर्ण एवं अपने अध्यापकों द्वारा प्रमाणित होनेपर तत्सम योग्यतावाले विद्यार्थी भी सम्मिलित हो सकेंगे। इसमें तीन प्रश्नपत्र होंगे, धर्म और व्युत्पत्तिविषयक साधारण दो पत्र सबके लिये अनिवार्य रहेंगे। केवल आयुर्वेदमें धर्मसम्बन्धी प्रथम ही पत्र रहेगा जिसमें धर्मसम्बन्धी प्रश्न ५० नम्बरके होंगे और ५० नम्बरके रसेन्द्रसारसंग्रह ( जारणमारणाध्याय ) से प्रश्न रहेंगे। जिसके उत्तर पत्र संस्कृत हिन्दी या बङ्गला भाषामें लिखे जा सकेंगे। वैकल्पिक विषयोंके क, ख, ग, घ, ङ, च, छ, ज, झ, ञ और ट के उत्तर संस्कृतमें ही देने होंगे। केवल व्याख्यान विशारदके सभी पत्र हिन्दी भाषामें लिखे जायेंगे।

साधारण पत्र —[धर्म एवं व्युत्पत्ति सम्बन्धी]

प्रथम पत्र—१—संक्षिप्त महाभारत ( चतुर्वेदी द्वारकाप्रसाद कृत )
२—नवीन दृष्टिमें प्रवीण भारत
३—गीतार्थ चन्द्रिका ( ३ से ६ अध्याय )
४—धर्मचन्द्रिका

द्वितीय पत्र—१—हितोपदेश ( सम्पूर्ण )
२—भारतीय इतिहास भूगोल का साधारण ज्ञान।
३—हिन्दीसे संस्कृत तथा संस्कृतसे हिन्दी अनुवाद।

### (क) वेद

तृतीय पत्र—१—रुद्राष्टाध्यायी ( सम्पूर्ण )
२—ऋक्संहिता १. २. य अष्टक तक।
३—याज्ञवल्क्य शिक्षा
४—यजुर्वेद संहिता ( मूल १२ अध्याय )

### (ख) व्याकरण

तृतीय पत्र—१—सिद्धान्त कौमुदी ( उणादिवर्जित उत्तर कृदन्तान्त )
२—पाणिनीय शिक्षा पं० नारायण दत्त जी कृत (टीका सहित)

अथवा

१—सारस्वतचन्द्रिका ( सम्पूर्ण )

## (ग) साहित्य ।

तृतीय पत्र—१—किरात ( ११-१४ सर्ग तक )
२—रघुवंश ( ११-१४ सर्ग तक )
३—उत्तररामचरित
४—दशकुमारचरित ( पूर्व पीठिका )

नोट—छन्दो रस और अलंकारका साधारणज्ञान ।

## (ग) दर्शन ।

तृ० प० - न्याय वशेषिक—सिद्धान्त मुक्तावलि ( सं० ) और न्यायसूत्र पर छन्नूराम शास्त्रिकृत वृत्ति ।

सांख्य योग—सांख्य तत्वकौमुदी और योगसूत्र ( भोजवृत्ति )

मीमांसा—अर्थ संग्रह ( लोगाक्षी भास्कर ) और जैमिनि न्यायमाला ( प्रथमाध्यायके तृतीयपाद तक )

अद्वैत वेदान्त—वेदान्तपरिभाषा और वैयासिकी न्यायमाला ।

विशिष्टा द्वैत—श्रीभाष्यवार्तिक और वेदान्तदीप

माध्वदर्शन—१—तत्व संख्यान
२—पदार्थ संग्रह ( मध्वसिद्धान्तसार सहित )

शुद्धाद्वैत—तत्वार्थदीपनिबंध ( शास्त्रार्थ सर्व नि० प्र० )

सर्वदर्शन—वेदान्तसार सांख्यकारिका, मीमांसापरिभाषा, तर्कसंग्रह, चार्वाक, जैन, बौद्ध दर्शनोंसे तन्मत संग्रह ।

## (ङ) धर्म ।

तृतीय पत्र—१—मनुस्मृति ( ३, ४, अ० )
२—पराशर स्मृति
३—व्रतोत्सव चन्द्रिका
४—धर्मसुधाकर

## ( च ) ज्योतिष ।

तृ० प०—१—मुहूर्त्त चिन्तामणि ( मूल )
२—लघुपाराशरी लीलावती
३—फलित विकाश ( पं० रामयत्न ओझा कृत )
४—बीजगणित ।

( छ ) पुराण ।

तृ० प०—१—दुर्गासप्तशती ( महामण्डलसे प्रकाशित टीकासहित )
२—वाल्मीकीय रामायण ( सुन्दरकाण्ड )
३—श्रीमद्भागवत ( १० स्कन्ध )
४—धर्म कल्पद्रुम १ खण्ड

( ज ) आगम ।

तृ० प०—१—महानिर्वाण तन्त्र ।
२—मन्त्र योग संहिता
३—धर्म कल्पद्रुमका १ खण्ड

( झ ) कर्मकाण्ड ।

तृ० प०—१—लघुकर्मकाण्ड दर्पण ।
२—मूल शान्ति ।
३—प्रेतमंजरी ।

( ञ ) आयुर्वेद ।

द्वि० प०—१—चक्र दत्त ( परिभाषा सहित )
तृ० प०—१—वाग्भट ( शारीरस्थान ) तथा आयुर्वेदीयप्रवन्धरचना ।

( ट ) व्याख्यान ।

१—धर्म सुधाकर
२—कठोपनिषद ।
३—धर्म कल्पद्रुम ७ वाँ भाग ।
४—मनुस्मृति २, ३, अध्याय ।
५—सती सदाचार ।

## ( १५ ) प्रवेशिका परीक्षा ।

इस परीक्षाके सभी प्रश्न पत्रोंके उत्तर संस्कृत या हिन्दीमें लिखे जा सकेंगे। इसमें तीन प्रश्न पत्र होंगे जिनमें साधारण दो पत्र एक धार्मिक और एक व्युत्पत्तिविषयक सबके लिये अनिवार्य रहेंगे ।

तीसरा पत्र क, ख, ग, घ, ङ, च, छ, ज, झ, ञ, और ट विषयका होगा । केवल आयुर्वेदमें धर्म सम्बन्धी प्रथम पत्र ही रहेगा जिसमें ५० नम्बरके धर्म सम्बन्धी प्रश्न होंगे और ५० नम्बरके शार्ङ्गधर पूर्वखण्ड मात्र रहेगा ।

साधारण पत्र [ धर्मविषयक ]

प्र० प०—१—आर्य गौरव ।

२—नीति चन्द्रिका।

३—गीतार्थचन्द्रिका ( १—२ अध्याय )

४—आचार चन्द्रिका।

## साधारण पत्र [ व्युत्पत्तिविषयक ]

च० प०—१— हितोपदेश ( मित्रलाभ )

२—भारतीय स्वास्थ्य विज्ञान।

३—इतिहास भूगोलका साधारण ज्ञान।

४—व्याकरणविषयक साधारण व्युत्पत्ति।

**नोट**—जुनियर परीक्षार्थियोंको हितोपदेशके स्थानमें हिन्दी से अंग्रेजी और अंग्रेजीसे हिन्दीमें अनुवाद रहेगा। और कुमारियोंके लिये हितोपदेशके स्थानमें महामण्डलसे प्रकाशित 'पूजा' नामक पुस्तक रहेगी।

## वैकल्पिक विषय।

### ( क ) वेद।

तृ० प०—१—रुद्राष्टाध्यायी—१-२-३ अध्याय कंठस्थ।

२—देवपूजन विधि, वैदिक मंत्र।

### ( ख ) व्याकरण।

तृ० प०—१—लघुकौमुदी सम्पूर्ण अथवा सारस्वत चन्द्रिका चूरादि तक।

### (ग) साहित्य।

तृ० प० १—रघुवंश ( १-५ सर्ग )

२—कुमार संभव ( १-५ सर्ग )

३—पंचतंत्र ( काकोलूकीयम् )

४—श्रुतबोध अथवा ( तन्मात्र छन्दोज्ञान)

### (घ) दर्शन

तृ० प० न्याय वैशेषिक—तर्कसंग्रह ( न्यायबोधिनी सहित ) और ( म० म० पं० अन्नदाचरण तर्कचूड़ामणिकृत न्याय चित्र। )

सांख्ययोग—सांख्य कारिका, योगसूत्र मूल और सांख्ययोग चित्र।

मीमांसा—मीमांसा परिभाषा, मीमांसादर्शन चित्र।

अद्वैत वेदान्त—वेदान्तसार ( सदानन्द कृत ) तत्वबोध ( शङ्कराचार्य कृत ) और वेदान्तचित्र

विशिष्टाद्वैत—यतीन्द्रमतदीपिका ( श्रीनिवासाचार्य ) और वेदान्तसार रामानुजाचार्यकृत )

„ माध्वदर्शन १ पदार्थसंग्रह ( पद्मनाभाचार्य्य कृत मूलमात्र ) २ सदाचारस्मृति ।

„ शुद्धाद्वैत—वेदान्त चूड़ामणि अथवा शुद्धाद्वैत मार्तण्ड ।

„ सर्वदर्शन—षट्दर्शनसमुच्चय, सर्वदर्शनपरिचय और ( महामण्डलसे प्रकाशित ) साधारण न्यायचित्र ।

(ङ) धर्म

तृ० प० १—मनुस्मृति ( द्वितीय अध्याय )

२—सनातनधर्म दीपिका ।

३—चरित्रचन्द्रिका, नित्यकर्मचन्द्रिका ।

(च) ज्योतिष

तृ० प० १—फलित संग्रह ( पं० रामयत्न ओझा कृत )

२—जन्मपत्रीका साधारण ज्ञान ।

(छ) पुराण

तृ० प० १—दुर्गासप्तशती ( मूल )

२—१ गंगा लहरी, २-सरस्वती स्तोत्र ( द्विजेन्द्र कृत )

३—मूल रामायण और शील निरूपण

(ज) आगम

१—नित्यकर्म चन्द्रिका

२—आचार प्रबन्ध

[ झ ] कर्मकाण्ड

तृ० प० १—ग्रहशांति

२—षोड़श संस्कारपद्धति

[ञ] आयुर्वेद

द्वि० प० १—माधवनिदान ( मूल )

तृ० प० २—द्रव्यगुण तथा आयुर्वेदोय प्रबन्ध रचना

नोट—आयुर्वेदकी सभी परीक्षाएँ काशीस्थ आयुर्वेदसम्मिलनी ( गवर्नमेंटसे रजिष्टर्ड ) संस्था द्वारा हुआ करेंगी ।

[ ट ] व्याख्यान

तृ० प० १—मार्कण्डेय पुराण ( महामण्डलसे प्रकाशित )

२—उपदेश पारिजात ।

३—महाभारत और रामायणसे उपाख्यान।

४—चरित्रचन्द्रिका।

## [१६] अंग्रेजी स्कूलकी जुनियर और सिनियर परीक्षा।

### [क] जुनियर ( मध्यम ) परीक्षा।

प्रथम पत्र—प्रवेशिका परीक्षाके धर्मसम्बन्धी साधारण पत्रकी पुस्तकें।

द्वितीय पत्र—प्रवेशिका परीक्षाके व्युत्पत्तिविषयक पत्र केवल हितोपदेशके स्थानमें अंग्रेजीसे मातृभाषामें और मातृभाषासे अंग्रेजीमें अनुवाद रहेगा।

तृतीय पत्र—१—धर्म प्रश्नोत्तरी २—धर्मसोपान ३-ब्रह्मचर्य सोपान।

### [ख] सिनियर [उत्तम] परीक्षा

प्रथम पत्र—विशारद परीक्षाके धर्मसम्बन्धी साधारण प्रथम पत्रकी पुस्तकें।

द्वि० पत्र—विशारद परीक्षाके व्युत्पत्तिसम्बन्धी साधारण द्वितीय पत्रकी पुस्तकें

१—हितोपदेशके स्थानमें अंग्रेजीसे मातृभाषामें और मातृभाषासे अंग्रेजीमें अनुवाद।

तृतीय पत्र—

2. Bhagawadgita First Part in English.

3. India the Pioneer of World.

1. India's Eternal Religion.

4. त्रिवेदीय सन्ध्या

5. पदार्थ विज्ञानका साधारण ज्ञान

## [ १७ ] हिन्दी-प्रवेशिका।

नोट—१, २ पत्र प्रवेशिका परीक्षाके सदृश रहेगा।

तृ० प०—१—हिन्दी-प्रवेशिका ( इण्डियन प्रेस )

२—रामायण ( सुन्दरकाण्ड, किष्किन्धाकाण्ड )

३—सत्य हरिश्चन्द्र।

४—हिन्दी साहित्यका संक्षिप्त इतिहास।

५—व्याकरण, छन्द, अलंकारका साधारण ज्ञान।

६—पत्र-लेखन तथा वाक्य-रचना।

## [ १८ ] हिन्दी-विशारद ( मध्यमा )

नोट—१, २ पत्र मध्यमा ( विशारद ) परीक्षाके सदृश रहेगा।

तृ० प० १—रामायण ( बालकाण्ड )

२—प्रिय-प्रवास (१–५ सर्ग )

३—गद्य-रत्नावली
४—उत्तर रामचरित ( हिन्दी )
५—राष्ट्रभाषाभूषण ( श्रीगोपालशास्त्रिकृत )
६—सरल-पिंगल
७—काव्य, नाटक तथा रसके भेद
८—हिन्दीका विकास
९—अलंकार चन्द्रिका

## [१९] हिन्दी-शास्त्री [ हिन्दी-भूषण ]

प्रथम और द्वितीय पत्र शास्त्री परीक्षाके धर्म सम्बन्धी दोनों साधारण पत्र हैं।

तृ० प०—१—रामायण ( अयोध्या काण्ड आरण्य काण्ड )
२—सूर-पदावली।
३—रहिमन विनोद।
४—प्रिय प्रवास ( ६–१० सर्ग )
५—अलंकार मंजूषा

च० प०—१—छन्दः प्रभाकर
२—प्रवीण भारत
३—साहित्यालोचन
४—रसज्ञ-रंजन
५—भारतवर्षका भूगोल और इतिहास
६—राष्ट्रभाषा-भूषण ( श्रीगोपालशास्त्रि विरचित )

## [२०] आचार्य [ हिन्दी-रत्न ]

प्रथम और द्वितीय पत्र आचार्य्य परीक्षाके धर्मसम्बन्धी दोनों साधारण पत्र हैं।

तृ० प०—१—रामायण ( लंका, उत्तर काण्ड )
२—प्रिय-प्रवास ( सम्पूर्ण )
३—सूर-पंचरत्न।
४—गंगावतरण।
५—कवितावली।
६—कविता कौमुदी (प्रथम भाग)

चतुर्थपत्र-१—हिन्दी-नवरत्न।
२—हिन्दी साहित्यका इतिहास।
३—हिन्दी गद्यशैलीका विकास।
४—किसी एक कविका अध्ययन। ❀
५—साहित्यिक निबंध।
६—रस, अलंकार, छन्द आदि काव्याङ्गोंका पूर्ण ज्ञान आवश्यक है।

❀ सूर, तुलसी, बिहारी, केशव और देव-में किसी एक महाकवि का पूरा अध्ययन।

## [२२] आर्यमहिलाओंकी धर्म प्रवेशिका, धर्मप्रभा, राष्ट्रभाषा चन्द्रिका और व्याख्यानकौमुदी परीक्षाएँ।

### [क] धर्म-प्रवेशिका

कुमारियोंके लिये धर्मप्रवेशिका परीक्षाका यह खास कोर्स है।

प्रथम और द्वितीय पत्रमें प्रवेशिका परीक्षाके धर्मसम्बन्धी और व्युत्पत्ति सम्बन्धी पत्रोंकी ही पुस्तकें रहेंगी। केवल हितोपदेशकी जगह महामण्डलसे प्रकाशित 'पूजा' नामक पुस्तक रहेगी।

तृ० प०—१—श्रीधर्म प्रश्नोत्तरी।
२—कन्या-शिक्षा-सोपान।
३—सती चरित्र चन्द्रिका।

### [ ख ] धर्मप्रभा उपाधिपरीक्षा।

प्रथमपत्र—धर्मकल्पद्रुम अष्टम खण्ड, धर्मसुधाकर, सतीसदाचार, गीतार्थचन्द्रिका १-२ अध्याय और शशिकला।

द्वितीयपत्र—नवीन दृष्टिमें प्रवीण भारत, रामचरितमानस (महामण्डलसे प्रकाशित), आचारचन्द्रिका, व्रतोत्सवचन्द्रिका और सतीचरित्रचन्द्रिका।

तृतीयपत्र—मार्कण्डेयपुराण ( भाषाटीकासहित तीनों खण्ड, आर्य्य-महिला कार्यालयसे प्रकाशित ), धर्मसम्बन्धी निबन्ध रचना।

### [ ग ] राष्ट्रभाषाचन्द्रिका उपाधिपरीक्षा।

प्रथमपत्र—रामचरितमानस, भारतवर्षका इतिहास ( महामण्डलद्वारा प्रकाशित ), कविता कौमुदी ( प्रथम और द्वितीय खण्ड ), सूरदासकी विनय-पत्रिका और राष्ट्रभाषाभूषण-( श्रीगोपालशास्त्रि विरचित )।

द्वितीयपत्र—जातीय महायज्ञसाधन, धर्मसुधाकर, व्यासशुकसंवाद, आर्य्यगौरव और सतीसदाचार।

तृतीयपत्र—मार्कण्डेयपुराण, (भाषाटीकासहित तीनों खण्ड, आर्यमहिला कार्यालयसे प्रकाशित), धर्मकल्पद्रुमके अष्टम खण्डका भाषाविज्ञान नामक प्रबन्ध, और हिन्दीभाषासम्बन्धी निबन्ध रचना।

### [ घ ] व्याख्यानकौमुदी उपाधिपरीक्षा।

प्रथमपत्र—धर्मसुधाकर, गीतार्थचन्द्रिका, सतीसदाचार, नवीन दृष्टिमें प्रवीण भारत, और जातीय-महायज्ञसाधन।

द्वितीयपत्र—रामचरितमानस ( महामण्डलसे प्रकाशित ), मार्कण्डेयपुराण ( सटीक तीनों खण्ड, आर्यमहिलाकार्यालयसे प्रकाशित ), नित्यकर्मचन्द्रिका, व्रतोत्सवचन्द्रिका और सतीचरित्रचन्द्रिका ।

तृतीयपत्र—भारतवर्षका इतिहास ( महामण्डलद्वारा प्रकाशित ), हिन्दी साहित्यका संक्षिप्त इतिहास, धर्मकल्पद्रुमका अष्टम खण्ड, धर्मविज्ञानका 'व्याख्यानकलाकुशलता' नामक प्रबन्ध और व्याख्यानविषयक निबन्ध रचना ।

धर्मोपदेशिकाओंको अपनी व्याख्यान-कलाका परिचय किसी परीक्षा-केन्द्रमें जाकर व्याख्यानद्वारा देना होगा ।

नोट—आचार्योपाधिसे लेकर व्याख्यानकौमुदी उपाधि परीक्षा तक सभी परीक्षाओंके प्रत्येक प्रश्नपत्रके उत्तरके लिये चार घण्टा समय रहेगा ।

इन परीक्षाओंके अतिरिक्त यदि कोई सम्प्रदाय किसी विशेष रीति पर अपनी साम्प्रदायिक परीक्षा जारी करनेके लिये आवश्यक धनका प्रबन्ध करे तो विशेष नियमोंके अनुसार वैसी परीक्षा जारी की जा सकेगी ।

---

## परीक्षा बोर्डके सदस्यों की नामावली

१. साहित्यसुधानिधि श्रीमान् एच्० के० भट्टाचार्य एम्० ए० प्रिंसिपल, सनातनधर्मकालेज, नवाबगंज कानपुर ।
२. विद्यासुधाकर श्रीमान् हरिदास भट्टाचार्य एम० ए०, ढाका कालेज, ढाका ।
३. महामहाध्यापक श्रीमान् पण्डित प्रभुदत्तशास्त्री, I. E. S. प्रिंसिपल राजशाही कालेज, राजशाही ।
४. विद्यारञ्जन श्रीमान् पण्डित रमेशदत्तपाण्डेय बी० ए० ( Late Educational Minister, Kashmir) बनारस ।
५. श्रीमान् कुँवर रवीन्द्रनारायणसिंह एम्० ए० एल्० एल्० बी० बनारस,
६. महामहाध्यापक श्रीमान् पण्डित पञ्चानन तर्करत्न महोदय, बनारस ।
७. महामहोपाध्याय, महामहाध्यापक श्रीमान् पं० अन्नदाचरणतर्कचूड़ामणि, मानसरोवर, बनारस ।
८. म० म० महामहाध्यापक श्रीमान् पण्डित पद्मनाथ भट्टाचार्य एम्० ए० काशी ।
९. श्रीमान् रामलाल काञ्जीलाल एम्० ए० इस्कायर, प्रोफेसर, संस्कृतकालेज, श्रीनगर, काश्मीर ।
१०. महामहोपाध्याय श्रीमान् पण्डित हाथीभाई शास्त्री, जामनगर, काठियावाड़ ।
११. महामहोपाध्याय श्रीमान् पण्डित फणिभूषण तर्कवागीश महाशय, बनारस ।

१२. महामहोपाध्याय श्रीमान् पण्डित हरनारायण शास्त्री हिन्दू कालेज दिल्ली ।
१३. श्रीमान् पं० हरिवल्लभ ठाकुर प्रधानाध्यापक, हरिहराम्बा राजविद्यालय अमावां।
१४. श्रीमान् पण्डित गोपालशास्त्री दर्शनकेशरी, दर्शनविद्यालय, लक्ष्मीकुण्ड, बनारस।
१५. ,, ब्रह्मचारी गिरिजाप्रकाश जी महाराज बी० ए०, बनारस।
१६. ,, लौटूसिंह जी गौतम एम० ए० प्रोफेसर, क्षत्रियकालेज, बनारस।
१७. ,, डा० कुलभूषण हेल्थ आफिसर श्रीनगर काश्मीर।
१८. ,, पं० रामबहोरी सुकुल एम्० ए० क्वीन्स कालेज, बनारस।
१९. ,, ज्योतिषसुधाकर आयुर्वेद महोपाध्याय पं० एम्० आर० भट्ट एम० ए०।
२०. ,, पण्डित विजयानन्द त्रिपाठी, साहित्यरञ्जन भदैनी, बनारस।
२१. ,, पं० केदारनाथ शर्मा एम्० ए० एल्० टी० प्रधानाध्यापक सनातनधर्म स्कूल, बनारस।
२२. श्रीमान् पण्डित अम्बिकादत्त उपाध्याय शास्त्री एम्० ए० हेड् पण्डित सेन्ट्रल हिन्दू स्कूल बनारस।
२३. श्रीमान् पण्डित श्रीनारायण त्रिपाठी बी० ए० सेन्ट्रल हिन्दूस्कूल, बनारस।
२४. ,, ,, अवधेशप्रसाद द्विवेदी (काव्यतीर्थ बनारस)
२५. ,, ,, गोविन्दशास्त्री दुगवेकर साहित्यभूषण बनारस।
२६. ,, स्वामी ब्रह्मानन्दजी गिरि पी०, एच्० डी०, वेदान्त-शिरोमणि, बनारस।
२७. ,, पण्डित मदनमोहन शास्त्री महामहोपदेशक, बनारस।
२८. ,, ,, गोपालचन्द्र वेदान्तशास्त्री, बनारस।
२९. ,, ,, बालमुकुन्दद्विवेदी ऋग्वेदमहाविद्यालय शतरञ्जीमहाल कानपुर।
३०. श्रीमान् पण्डित राधिकाप्रसाद शास्त्री प्रो० सनातनधर्म .लेज कानपुर।
३१. ,, ,, तारामोहन भट्टाचार्य, बनारस।
३२. महामहाध्यापक पण्डितराज बुलाकीरामशास्त्री विद्यासागर सुपर्वाइजर संस्कृतविभाग, राजपण्डित किशनगढ़ स्टेट, ( राजपूताना )।
३३. श्रीमान् महोपाध्याय पण्डित रेवाशंकरशास्त्री मेघजी D. L. संस्कृतपाठसाला गुलालवाड़ी बम्बई।
३४. श्रीमान् पण्डित जानकीशरण त्रिपाठी, साहित्यभूषण बनारस।
३५. ,, बाबू रामदास गौड़ एम्० ए० बनारस।
३६. ,, पण्डित अयोध्यासिंह उपाध्याय हरिऔध ( कविसम्राट् ) बनारस।
३७. ,, ,, वंशीधर कविरत्न केदारघाट बनारस।
३८. ,, ,, हारानचन्द्र आयुर्वेदाचार्य जंगमवाड़ी, बनारस।
३९. ,, ,, विमलाकान्त तर्कतीर्थ भिषग् शिरोमणि, कलकत्ता।
४०. श्रीमान् कविराज ज्योतिश्चन्द्र भट्टाचार्य आयुर्वेदाचार्य।
४१. श्रीमान् पण्डित लालचन्द जी वैद्यशास्त्री।

४२. ,, ,, लक्ष्मीनारायण सांख्यतीर्थ ।
४३. ,, ,, ताराचरण भट्टाचार्य साहित्याचार्य पण्डित भूषण ।
४४. ,, ,, जानकीनाथ काव्यतीर्थ ।
४५. ,, ,, पुरुषोत्तम जी वैद्य आयुर्वेदाचार्य ।
४६. ,, ,, रामदेवद्विवेदी व्याकरणाचार्य ।
४७. ,, ,, रामप्रिय पाठक साहित्याचार्य ।
४८. ,, ,, बालगोविन्द जी शर्मा वैद्य
४९. ,, ,, जगन्नाथ प्रसाद वाजपेयी आयुर्वेदाचार्य ।
५०. ,, ,, वामदेवजी शास्त्री साहित्याध्यापक हि० वि० वि० ।
५१. ,, ,, शिवकुमार शास्त्री त्रिपाठी काव्यतीर्थ ।
५२. ,, ,, दुर्गादत्त शास्त्री ( आयुर्वेदाचार्य ) ।
५३. ,, ,, कमलकृष्ण स्मृतितीर्थ ।
५४. ,, ,, सरयू प्रसाद पाण्डेय ( द्विजेन्द्र ) आयुवद शास्त्री विशारद, साहित्यरत्न ।
५५. ,, ,, सभापति उपाध्याय व्याकरणाचार्य प्रधानाध्यापक बिड़ला विद्यालय काशी ।
५६. श्रीमान् पण्डित विन्ध्येश्वरी प्रसाद शास्त्री धर्माध्यापक हिन्दूस्कूल काशी ।
५७. ,, ,, गौरीनाथपाठक साहित्याचार्य, सस्थापक शारदा पुस्तकालय अगस्तकुण्ड, बनारस ।

---

नोट—इस विश्वविद्यालयके सब परीक्षा पाठ्यग्रन्थ निम्नलिखित पते पर मिल सकते हैं:—

मनेजर—
भारतधर्म्म महामण्डल आफिस
जगतगंज, बनारस

# निवेदन ।

सविनय निवेदन है कि, भारतधर्ममहामण्डल और उसकी संयुक्त-संस्थाओंकी छपाई और पुस्तक-बिक्रीका सब काम 'भारतधर्म सिण्डिकेट लिमिटेड' नामक कम्पनीको दिया जाता है। यह कम्पनी शत्रुओं द्वारा मुकद्दमेके झगड़नमें पड़ गयी है। अदालतकी आज्ञासे उसका कारोबार बन्द है। हमारे मासिकपत्रों, पुस्तकों आदिका मसाला उसके कार्यालयमें बन्द है। अदालतका फैसला होते ही सब काम फिर शुरु हो सकेगा। अतः निवेदन है कि, इससे सम्बन्ध रखनेवाले सज्जनोंको जो कष्ट हो रहा है, उसके लिये क्षमा करें। और अब जिनको पुस्तकोंकी जरूरत होवें निम्नलिखित पते से पत्र भेजें।

आफिसर-इन-चार्ज,
**श्रीभारतधर्म महामण्डल,**
जगतगंज, बनारस कैण्ट।

# सूर्योदयः ।

एकादशे वर्षे } भाद्रस्य पूर्णिमा सं० १९९२ { तृतीय-संख्या

## सम्पादकीया अभिप्रायाः ।

स्वामि-पूर्णानन्दमहोदयाः ।

एतेषामिह विश्वनाथपुर्यां भाद्रे मासि अलईपुरस्थ-निजमठे आकस्मिकः शरीरपातः समजनीति श्रुत्वेदमनभ्रवज्रपातं केषां हि सनातनधर्मिणां तज्ज्ञान विदुषां च हृदयं शोकसन्तप्तं न स्यात् । ते सन्यासिन आसन् त्यक्तैषणात्रया इति तेषां कृते शोकसन्तापस्तु नैव कर्तव्यः, नापि च ते शोच्याः सन्ति । यतो हि विरक्तमनसां काश्यां त्यक्तदेहानां परोपकारैकव्रतानान्तेषां नैःश्रेयसपदप्राप्तौ कियान् प्रयासः । शोच्यास्तु इदानीं ते संस्कृतज्ञा विद्वांसोऽन्ते-वासिनश्च सन्ति, येषां कृते तेषां जीवनमासीत् । ते हि आजमगढ़मण्डलान्तर्गत-मऊनाथभञ्जनप्रभृतिप्रदेशेषु बलियामण्डले गोरक्षपुरे च बहुत्र भ्रमणं कुर्वन्तः सनातनधर्मोपदेशञ्च ददतः संस्कृतविद्यालयानां प्रतिष्ठापनं कृतवन्त सन्ति । तेषा-मिदमेव ध्येयमासीद् यद् यथायथा संस्कृतभाषाप्रचारो भविष्यति, तथा तथा देशे धर्मस्य सद्भावस्य भारतीयसंस्कृतेश्च सुरक्षा भविष्यतीति । अनेनैव दृढ़संकल्पेन संस्कृतविद्यालयान् प्रतिष्ठाप्य तेऽस्मिन् प्रदेशे साधु संस्कृतभाषाध्ययन-व्यवस्थां दृढ़ीकृतवन्तः सन्ति । ते हि निर्भीका वक्तार आसन् । सनातनधर्मव्याख्यानावसरे कुमार्गगामिनोऽत्यर्थं भर्त्सयन्ति स्म । किं बहुना "निर्मानमोहा जितसंगदोषा इति गीता-पद्यस्य जागरूकोदाहरणीभूतास्ते आसन् ।

# धार्मिकपरीक्षा ।

श्रीमन्तः पाठकमहानुभावाः !

अ० भा०संस्कृत विश्वविद्यालयस्य परीक्षानियमावली मुद्रिता सती सर्वत्र सूर्य्योदयेन सहैव प्रेषिता । श्रीमतां पार्श्वेऽपि सोपस्थितैव स्यात् । सम्प्रति सर्वेषामेव भारतीयां प्राक्तनीं संस्कृतिं संरक्षितुं तत्पराणां विज्ञानामिदं परमं कर्तव्यम् विद्यते । यत् सर्वत्र भारते 'धार्मिक्याः शिक्षायाः प्रचारः सर्वथा समेधितः स्यादिति । पश्यन्तु, उपेक्षितधर्मभावा अनीश्वरवादप्रधाना चार्वाकसिद्धान्तसम्भृता साम्प्रतिकी शिक्षा पाश्चात्यवात्यानुन्ना विज्ञानाभासरेणुभिः भारतीयानन्धान् कुर्वती प्रतिगृहं प्रविष्टा विद्यते । यया हि नहि केवलमिंग्लिशकलाशालाध्यायिन एवान्तेवासिनः, प्रत्युत संस्कृतच्छात्रा अपि भारतीयां संस्कृतिं स्वार्यर्षिमहर्षि प्रणीत-धर्म-मर्य्यादा श्चोपेक्ष्य सर्वथा पाश्चात्यसभ्यताश्रद्धाजुषो जायन्ते । तेषां निरोधो न केवलं शास्त्रवचसां प्रामाण्योपन्यासेनैव सम्भवति । किन्तु शास्त्रवचोभिः सह सन्तीदानीं सविज्ञानयुक्तीनामप्युपन्यासस्य प्रयोजनानि । येन च श्रवणमननोपेताः सर्वेऽपि भारतीयाः स्वधर्मज्ञानं दृढं सविज्ञानं सप्रमाणं सयुक्तिकञ्च सम्पादयन्तः स्वयं धैर्य्यजुषः स्वधर्मे श्रद्धां बिभ्रीरन् । अन्यांश्च तत्प्रतिपन्थिनो मार्गे संस्थापयितुं समर्थाः सम्पद्येरन् । स्ववर्गीयानपि तत्र दृढश्रद्धाभाजो विदधीरन् इति महर्षीणामपि सतर्कस्यैव धर्मज्ञानस्य सम्पादने निर्देशो दृश्यते । तथा हि—

"आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ।
प्रत्यक्षञ्चानुमानञ्च शास्त्रञ्च विविधागमम् त्रयं सुविदितं कार्य्यं धर्मशुद्धिमभीप्सता"

इत्यादि वाक्यकदम्बैः प्रतीयते यद्धर्मज्ञान-दार्ढ्याय प्रत्यक्षानुमानशास्त्राणि समुदितान्येव दण्डचक्रचीवरन्यायेन कारणतां व्रजन्ति । न तु तृणारणिमणिन्यायेन व्यस्तानीति बहुसम्मतः पन्थाः । ततश्च शास्त्रज्ञानेन सहानुमानप्रतिनिधिभूतसविज्ञान युक्तीनां प्रत्यक्षस्थानीयानामितिहासकथाप्रभृतिदृष्टान्तानाञ्च ज्ञानमावश्यकं धर्मज्ञाने इति सर्वैरेव सहृदयैः स्वीकरणीयम् । सत्यप्येवं व्यतिकरे सम्प्रति सर्वोपयोगिन्या धर्मशिक्षाया एव सर्वत्रैव संस्कृतेंग्लिशकलाशाला-कुमारशाला-कन्याशालाप्रभृतिषु अभावो विद्यते । सर्वाङ्गसम्भृतायास्तु कथैव का ? इति विमृश्यैव भारतीय-सर्वधर्म-सभाप्रतिनिधिभूतायाः श्रीभारतधर्ममहामण्डलाख्याया धर्मसंस्थायाः संचालकैरयं धार्मिको विश्वविद्यालयः प्रतिष्ठापितः । यतश्चेयं धार्मिकी परीक्षा प्रतिवर्षं महतायोजनेन सर्वत्रैव भारतवर्षे भवति ।

हिन्दीभाषाभिज्ञाः परीक्षार्थिनो धर्ममर्मज्ञा भवेयुरिति । धर्मग्रन्थाश्चैवंभूता 'धर्मविज्ञान' प्रभृतयः पाठ्यपद्धतौ सन्निवेशिताः सन्ति । येषामध्ययनेन पूर्वोक्ताः सर्वा अपि सामग्र्यः प्रत्यक्षानुमानशास्त्रस्वरूपाः । दृष्टान्त-युक्तिनिचयाप्तवाक्यानीति यावत् एकत्रैव सम्भृता उपलभ्यन्ते । येषां ग्रन्थानामध्ययनेन मन्दप्रज्ञोऽपि धर्ममर्म्मज्ञो भूत्वा सदसि वाक्पाटवेन सहैव उपर्य्युक्त-सर्वकर्तव्यपरायणो भवितुमर्हति ।

किं बहुना अ० भा० संस्कृतविश्वविद्यालयीयेयं परीक्षा सम्प्रति सर्वैरेव भारतीयैः समुत्तरणीया स्वीयाश्छात्राश्चोत्तारयितुं प्रेरणीयाः । यतश्च स्यात्पुनर्भारतीयसंस्कृति-संरक्षणसमादरः । सर्वे साम्प्रतिका पाश्चात्यविज्ञान-वात्या-धूलिकषायित-नयना मार्गे संस्थापिताश्च स्युः । सर्वथा सम्बर्द्धमानश्च धर्ममर्य्यादोपेक्षाभावोऽपसृतः स्यादिति । ताश्च सर्वा अपि परीक्षा अस्मिन् अप्रैल मासि १५ पंचदश तारीकातो भाविन्य स्तदर्थ मावेदन-पत्राणि च दिसम्बरमासावधि-कार्य्यालयतो ग्राह्याणीति सम्प्रत्येव सूचयामः । अग्रे च सूर्योदयस्य प्रकाशने दीर्घविलम्बसम्भावना प्रतीयते । यतो वै विशेषाङ्को हि बृहदाकारो भविष्यतीत्यत्र नास्ति सन्देहलेशः । अतश्च 'सूर्योदय' ग्राहकैस्तदङ्कस्य कृते त्वरया कार्यालये पत्रप्रेषणे कष्टोऽपि नाश्रयणीय इत्यपि पूर्वमेव निवेदयामः ।

---

# श्राद्धविज्ञानम् ।

श्रीमन्तः पाठकमहानुभावाः ! १९९२ वैक्रमाब्दे आश्विनमासस्य प्रथमसौरतिथौ मंगल वासरीये 'आज' पत्रे पं० श्री आशेश्वरझामहोदयस्य श्राद्धविषये 'पितृपक्षे श्राद्धं कथं कर्तव्यं भवतीति' शीर्षकात्मको लेखो मुद्रितोऽस्ति । तत्रत्यो हि विषयो गम्भीरो विद्यते तस्य विस्तृतं विवरणन्तु कदाचिदिह सूर्य्योदये समयान्तरे प्रकाशयिष्यामः । सम्प्रति तान् आर्य्यसमाज प्रवर्तकस्वामिदयानन्दमहोदयानुगान् वयं हितबुद्ध्योपदिशामो यत्ते यदि स्वामिदयानन्दमहोदस्य सत्यं [illegible] न्ति चेत्तदा तत्पत्रं पठित्वा तस्य खण्डनं कुर्वन्तु । अथवा सत्यं कुतोऽप्याश्रयणीयमिति स्वीयनियमत एवाद्यारभ्य आर्य्यसमाजे पुनः श्राद्धप्रतिष्ठां समारभन्ताम् । एवमुपेक्षयोपयोगिनः कर्तव्यस्य त्यागस्तु न वरम् । तच्च कर्तव्यमपि एतादृग् विद्यते येन भारतस्य महद् गौरवं समेधते ।

इह तदीयं वक्तव्यमहं किञ्चित् संक्षिपामि । यद्यपि तत्राशास्त्रीयमपि बहु विद्यते भारते यो हि वैदिको धर्मः प्रचलितोऽस्ति, स हि विज्ञानमूलको विद्यते । तत्र श्राद्ध-

विज्ञानं निरूपयन् स ब्रूते यदि श्राद्धस्य सर्वथा त्यागो भवेत् तर्हि सृष्टिचक्रमेव विलुप्तं स्यात् । अतो वै भारतीयाः प्राचीना महर्षयो विज्ञानस्यान्तस्तले प्रविष्टा आसन् ते हि सृष्टिचक्रस्य सर्वमपि विज्ञानं साधु विदन्तिस्म । वेदे हि श्राद्धतत्त्वस्य विधानं अद्भुतविज्ञानसम्भृतं विद्यते । तथाहि चन्द्रलोकतोऽष्टाविंशतिभागो रेतसः पुरुष शरीरे प्रविश्य तिष्ठति । येन च पुरुषो भार्य्यया सह सम्पृक्तः सन्तानं जनयति । मरणकाले स महानात्मा चन्द्रलोके एव गच्छति । चन्द्रलोके यो हि अम्भः प्राणो विद्यते । स एव अष्टाविंशतिमंशान् रेतसि प्रयच्छति । ते एव अंशाः पितृणशब्दे नोच्यन्ते । त एवांशाः पुनः श्रद्धामार्गेण चन्द्रलोके प्रेष्यन्ते । एतद्धि श्राद्धवाच्यं विद्यते । श्रद्धामार्गस्य सम्बन्धो हि मध्याह्नकाले एव पृथिव्या सह भवतीति मध्यान्हे श्राद्धानुष्ठानविधिः शास्त्रे विहितोऽस्ति । मध्याह्नकाले सूर्य्यस्य सुषुम्नानाड्याः साहाय्येन एव कश्चिद्रश्मिश्चन्द्रलोकतः पृथिव्यामायाति येन सह पितृ-प्राणा अपि व्याप्तास्तिष्ठन्ति । स एष रश्मिरितः श्रद्धया मृतप्राणिने समर्पितं यवतण्डुलपिण्डं सलिलं तत्र समर्पयति । पिण्डे यवतण्डुल-तिलादीनामेवोपयोगो यद्भवति तत्रापि विज्ञानमिदं विद्यते । सोमस्य यवेन सह घनिष्ठः सम्बन्धः । सोमस्य च सूक्ष्मा नदी उत्तरतो दक्षिणस्यां दिशि प्रवहति याश्च क्षेत्रगत-धान्यं विशेषतो गृह्णाति । अतस्तत्र सोमभाग आधिक्येन विराजते । अत एव धान्यस्यैव पिण्डे प्राधान्यमित्थं हि यवेऽपि सोमप्राधान्यं ज्ञेयम् ।

आश्विनकृष्ण प्रतिपत्तोऽमावास्यां यावत् श्राद्धकालस्यापि तत्र विशेषेणैव विज्ञानं विवृतं विद्यते । झामहोदयो ब्रवीति—यद् यो हि रश्मिरन्यदा मध्यान्ह काले उपरिभागे गच्छन् भवति । स हि आश्विनकृष्णप्रतिपत्तोऽमावास्यां यावत् पृथिव्यामेव व्यापृतस्तिष्ठति । तेनैव सह व्याप्तःपितृप्राणोऽपि पृथिव्यामेव व्याप्तो भवति । अस्मिन् काले यस्य अष्टाविंशतिभागस्य रेतसः कृते स पितृप्राणः चन्द्रलोके अम्भःप्राणेन सहायको विद्यते । तमेव पूरयितुं स प्राणः स्व-स्व-परिवार-वर्गे पर्यटति । तदानीं ये हि कुटुम्बिनस्तर्पणश्राद्धादि कृत्यं कुर्वन्ति तेनाप्यायितः स प्रसीदति । ये च पुत्राः स्वपित्रे स्वमृतपरिवाराय पिण्डादिकं वितरन्ति ततो रेतसो भागं गृहीत्वा चन्द्रलोकस्थितायाम्भःप्राणाय दत्वा स्वीयं ऋणशोधनं करोतीत्यादि बहु विस्तरेण तत्र झामहोदयेन विवृतं विद्यते । येषामुत्कण्ठा स्यात्ते तत् 'आज' पत्रं गृहीत्वा पठन्तु ।

## स्वर्गस्थाः कविराजधर्मदासमहोदयाः।

इह काश्यां निजभवने चरकाचार्य्याणां कविराज-धर्मदासमहोदयानां भाद्रशुक्लनवम्यां ( १९९२ वै० ) नेत्राङ्कनवाब्जमिते वैक्रमे चतुःसप्ततिवर्षावस्थायां कैलाशवासोऽभूत्।

एतेषां कविराजमहोदयानां जन्म १९१८ विक्रमीयाष्टचन्द्रनवभूमिते सम्वत्सरे आसीत्। आयुर्वेदशिरोमणीनां गंगाधरसेनाचार्य्याणामिमे प्रधानशिष्या आसन्। आयुर्वेदे इमे सिद्धहस्ताः पीयूषपाणयोऽद्वितीया विद्वांसोऽभूवन्। एतेषां' चरकसंहिताज्ञानन्तु असाधारणमासीत्। कापि चरकटीका तैर्निर्मिताऽस्तीति श्रूयते। हिन्दूविश्वविद्यालयीयायुर्वेदविभागस्येमे प्रधानाध्यापका आसन्। एतेषां चिकित्साप्रणाली अद्भुतप्रभावशालिनी चासीत्। असाध्यानपि रोगिण इमे निजचिकित्सापद्धत्याऽनायासेनैव नीरुजः कुर्वन्ति स्म। किं बहुना एतेषामाकस्मिक-वियोगेन सम्प्रति 'आयुर्वेदविज्ञानराशिर्विलुप्तः' इत्येव वक्तुम्पार्य्यते।

एतेषां प्रधानशिष्याः श्रीमन्तः पण्डितसत्यनारायणशास्त्रिप्रभृतयः प्रख्याता महान्त आयुर्वेदविद्वांसः सन्ति। यैरवश्यमेषां चिकित्सा-पद्धतिरिह काश्यां सर्वथा समुज्जीविता विद्यते। तेषामात्मजाः श्रीमन्तो भूपेन्द्रनाथकविराजगणपतिमहोदया अपि सम्यक् चिकित्साकर्मणि प्रख्याताः सन्ति। तेषां चिकित्साऽपि अमोघैव भवतीति बहुशः प्रसिद्धिः श्रूयते।

अस्तु, कविराजधर्मदासमहोदयानां कैलासवासेनायुर्वेदज्ञानां महती हानिः संजाता। काशीपण्डितमण्डली तु तच्छोकनिमग्ना भृशं तद्वियोगसन्तापमनुभवति। श्रीकाशीविश्वेश्वरात्तेषामात्मनः चिरशान्तिं तत्परिवारस्याभ्युदयञ्चाभ्यर्थयामहे।

---

## स्मृत्यङ्कः।

श्रीमन्तः सूर्योदयपाठकाः! गताङ्केऽस्माभिर्निवेदितमासीद् यदग्रिमोऽङ्कः श्रीस्वामि दयानन्दमहाराजस्य स्मृत्यङ्को भविष्यतीति। परन्तु अद्यावधि विदुषां महोदयानां तत्सम्बन्धे स्मृति-लेखा नैवोपस्थिता नापि च तत्सम्बन्धीयावश्यकान्या एव सामग्र्योऽधुनापि सम्भृता जाता इति स्मृत्यङ्के सम्प्रति विलम्बं विलोक्य पाठकानां लेखकानाञ्च सम्मानरक्षाबुद्ध्या भाद्रमासस्याङ्कः प्रकाश्यते। अग्रे सम्भृतास्वखिलास्वपि स्मृत्यङ्क-विशेषसामग्रीषु सोऽङ्कः विपुलाकारः

शीघ्रमेव प्रकाशितो भविष्यति । तदर्थं सततं प्रयत्नो विधीयते यच्छीघ्रमेव सर्वापि स्मृत्यङ्कसामग्री सुसम्पन्ना स्यादिति ।

## देवभाषापरिषदः प्रस्तावाः ।

अस्माकं पार्श्वे विलम्बेनोपस्थितं देवभाषा परिषदो विवरणम् इति ततः कियत आवश्यकान् प्रस्तावानेव 'सूर्योदय' पाठकानां पुरतः संस्थापयामः ।

एतद्वर्षीयं श्रीदेवभाषापरिषदोऽधिवेशनं छपरामण्डलान्तर्गतसिवान-नगरेऽभूत् । तत्र काशीस्था मोदफलपुरीयाः छपरामण्डलीयाश्च बहवो विद्वांसः समुपस्थिता आसन् । वार्षिक विवरणपाठादि-कृत्यानन्तरं अधस्तनाः प्रस्तावाः सर्वसम्मत्या तत्र स्वीकृता अभूवन् । तेषां स्वरूपमविकलमेवेहोद्ध्रियते । तथाहि—

१—प्रस्तावः—देवभाषा एव राष्ट्रभाषा भवेदिति प्रस्ताव विषये 'पं० श्रीरामनारायणदत्तपाण्डेयः शास्त्री, पं० श्रीकपिलदेवपाठकः काव्यतीर्थः, श्री आर० एस० नारायण स्वामी, पं० श्रीरामरत्नोपाध्यायः सांख्यरत्नम्, श्रीकमलेश-चक्रवर्त्ती बी० ए० काव्यरत्नम्' इत्यादयो महानुभावा ओजस्विभाषणम् अदुः ।

२—प्रस्तावः—हिन्दुसभ्यता, हिन्दूसंस्कृतिः, हिन्दुधर्मश्च राष्ट्रभाषया संस्कृत-भाषया सहाविच्छेदभावेन संलग्ना अत आर्यजातेः कृते संस्कृतभाषाध्ययनं निजास्तित्वरक्षणाय परमावश्यकम् । अतः परिषदियं प्रस्तौति यद्भारतीयविद्या-लयेषु प्रत्येकबालकस्य प्रत्येक-बालिकायाश्च कृते संस्कृतशिक्षणमनिवार्यं भवेत् ।

३—प्रस्तावः—संस्कृतभाषाया अवज्ञां दृष्ट्वा परिषदियं व्यथामनुभवति । तथा विभिन्नप्रान्तीयराजकीयविश्वविद्यालयसमूहस्य स्वायत्तशासनशील-म्युन्स-पलेटी-डिस्ट्रिक्टबोर्डविभागस्य चाधिकारिणः प्रार्थयति यत्ते निजवार्षिकायव्य-यनिर्धारणसमये संस्कृतभाषाया उन्नत्यै प्रचाराय च यथेष्टमर्थं व्यवस्थापयेयुः ।

४ प्रस्तावः—संस्कृतभाषायाः प्रवर्त्तमानह्रासनिराकरणार्थं यच्छपराप्रति-निधिमण्डलं छपरानगरे समागतेन बिहारोत्कलशिक्षामन्त्रिमहोदयेन १९३३ तम-वर्षीयदिसम्बरमासे मिलितमासीत् तत्सम्बन्धे परिषदियं बिहारोत्कलशिक्षा-विभागाधिकारिणां ध्यानमाकर्षति प्रार्थयति च शीघ्रतां विधातुम् ।

इमे च किल सर्वे प्रस्तावाः सभ्यैरैकमत्येन स्वीकृताः ।

अनन्तरं देवभाषा एव 'राष्ट्रभाषा भवितुं योग्या' इति प्रस्ताव विषये विविधपूर्णा बहवो लेखाः पठिता अभूवन् ।

ततः परं मोदफलपुरमहाविद्यालयस्याध्यापकानां पण्डितश्रीयमुनाप्रसाद-त्रिपाठिमहोदयानां श्रीवैद्यनाथप्रसाद बी० ए० महोदयानां च संस्कृतगौरवविषयकं सारगर्भितं व्याख्यानमभवत् ।

---

## सर्वतन्त्र-स्वतन्त्र-षड्दर्शनाचार्य्य पण्डितराज-श्रीपद्मनाभ-शास्त्रिभ्यः

## सम्मानपत्रप्रदानम् ।

श्री १०८ श्रीमज्जगद्गुरूणां श्रीवैष्णवाचार्याणां प्रतिवादिभयङ्कराणां श्री मदनन्ताचार्य्यस्वामिनां सभापतित्वे सनातनधर्मावलम्बिनां हिन्दूनां परिषदेका श्रीवेङ्कटेश भगवतो भव्यमन्दिरे भाद्रपद कृष्णनवम्यां प्रकाण्डपण्डितेभ्यः काशी थे-भ्यः श्रीपद्मनाभ शास्त्रिभ्यः सम्मानपत्रप्रदानार्थं मोहमय्यां समजनि । परिषद्यस्यां माननीयाः पं० श्री रमापतिमिश्राः, रायबहादुर श्री परांडे न्यायाधीशाः, विल्सन कालेज प्रोफेसर श्री भार्गवशास्त्रिणः, श्री वीरशंकर शास्त्रिणः व्याकरण-साहित्याचार्य्याः, पण्डित श्री मुनिचन्द्रजी न्यायाचार्य्याः, पं० श्रीनिरीक्षणपति व्याकरणाचार्य्याः, पं० श्री आशुतोष भट्टाचार्य्यन्यायाचार्य्याः, श्री मनुभाई चन्द्रविद्यानन्द पण्ड्या एम० ए० एल० एल० बी० सोलिसिटर, श्री मगनलाल खखर जे० पी० यू०, अच्युताश्रमस्वामिनः, श्रीमोतीराम कल्याणजी शास्त्रिणः विद्यासागराः, व्या० बा० श्रीधनंजय मुरारिपांधि महाशयाः सनातनधर्ममार्तण्ड-धर्माचार्य्य तर्कालंकार-श्रीरेवाशंकरमेघजी पुरोहित शास्त्रिणः अन्ये, च सहस्रशो विद्वांसः सद्गृहस्थाश्च समुपस्थिता आसन् ।

काशीस्थ श्रीभारतधर्ममहामण्डल,-संस्कृतसाहित्य समाज,-परिव्राजक महामण्डल-जामनगर,-राजकोट प्रभृति प्रसिद्ध धर्मसंस्थाभ्यः सम्मानसमर्थक तडित्पत्राण्यपि समागतान्यासन् ।

चिराय सनातनधर्मकार्ये संलग्नानां सर्वदर्शनशास्त्रे प्राविण्यवतां, 'त्यागेनैके अमृतत्वमानसुरिति' वचनानुसारं सर्वस्वव्यवहारमपहाय धर्मरक्षामेव स्वकर्तव्यं मन्यमानानां पण्डितराज श्रीपद्मनाभशास्त्रिणां सम्माननिमित्तं तेषां विविधधर्मकार्यदक्षतादर्शकानि विद्वद्व्याख्यानान्यभूवन् ।

संहतिः कार्यसाधिकेति नयेन सर्वैः संघीभूयोपस्थितानां धर्मापत्तीनां प्रतिकारोऽवश्यं विधातव्यः, ईदृशानां च धर्मसेवकानां स्वकार्यदार्ढ्यार्थं समेधनीयः

समुत्साहः सम्मानपत्रप्रदानादिकेन विधिनेति सर्वेषां व्याख्यानानां सारांशः ।

अन्वर्थस्वनामभिः प्रतिवादि-भयंकरैः श्री मद् नन्ताचार्य्यवर्यैस्त्विदं प्रतिपादितं यदस्माभिर्न केवलं मानपत्रप्रदानमेव कर्तव्यं, किन्तु—एषां धर्मकिङ्कराणां कार्यमार्गे साहाय्यमपि प्रदाय सदनुकरणमपि विधातव्यमिति ।

मोहमयीस्थाः प्रायः सर्वेऽपि विद्वांसः समुपस्थिता आसन्नस्य परिषदि ।

यत्सम्मानपत्रं तत्र वितीर्णं तदन्यस्मिन् अङ्के सत्यवसरे मुद्रितम् भविष्यति ।

---

# वेदपुराणयोरेकवाक्यता।

श्री दीनानाथ शर्मा सारस्वतः शास्त्री।
( मुलतानस्थ—स० ध० कालेजाध्यापकः )

क्रमागता

वेदविषयेऽन्यविधविसंवादो निशम्यताम्—ऋग्वेदादिसंहितानां मन्त्रसङ्ख्यायामेव बहवो मतभेदाः। अनुवाकाऽनुक्रमण्यनुसारम् ऋग्वेदमन्त्राः १०५८० मन्यन्ते, छन्दः सङ्ग्रहाऽनुसारं १०४०२, गायत्र्यादिगणनाऽनुसारं १०१४२, सायणाचार्य्याऽनुसारम् ईषदधिकं दशसहस्रम्, स्वामिदयानन्दमते १०५८९, पं० शिवशंकर ( आर्यसामाजिक- ) मताऽनुसारं १०४०२, सर्व्वाऽनुक्रमणिका भूमिकायां १०४४२, सर्व्वानुक्रमणी-विवरणकार-पं० जगन्नाथमतेन १०४५२, चरण-व्यूहटीकाऽनुसारं १०४७२, सत्यव्रतसामश्रमिमतानुसारं बालखिल्यमेलने १०५२२ एवन्तु १०४४२, वर्त्तमानगूवेदसंहिताऽनुसारञ्च १०४४० मन्त्राः, 'आर्य्य डायरी' मतेन १००८९ मन्त्राः॥ एवमथर्व्ववेदे ( वैदिक प्रेस अजमेर ) सूक्तानां संख्या ७३१, सायणभाष्ये तु ७५९, मन्त्रसङ्ख्या उभयोरेव ५९७७ अन्यत्र मुद्रिताऽथर्व्ववेदे मन्त्रसङ्ख्या ५९३७, सातवलेकरमतेन ७०० सङ्ख्या, शेषमन्त्रा अस्मिन् ऋग्वेदादितो गृहीताः, स्वामिहरिप्रसाद-वैदिक-मुनिमतेन ६००, 'आर्य डायरी'-मतेन ६००० आसन्ना अथर्व्वमन्त्राः॥ यजुर्व्वेदस्य मन्त्रसंख्या यजुःकल्पतरौ १९७५, स्वा० दयानन्दमते १९७५, सातवलेकरमते १४००, पं० शिवशंकर-काव्यतीर्थमते ९८७ शिष्टाः ९८७ ऋग्वेदस्य, स्वामिहरिप्रसादमते १०००, 'आर्यडायरी'–मतेन १९७४॥ सामवेद-मन्त्र-सङ्ख्या तुलसीरामस्वामिमते १८७३, वैदिक प्रेस अजमेर पुस्तके १८२४, अकाराद्विवर्णक्रमाऽनुसारम् १८९३, जीवानन्द-विद्यासागर-मुद्रिते—१८१८ शिवशंकरमते ७८ शिष्टा ऋग्वेदतो गृहीताः, प्राणशंकरत्रिवेदमते २१९, सातवलेकरमते ७०, सायणमते केवलसामवेदीयमन्त्राः ५४ अन्ये ऋग्वेदतो गृहीताः, प्राच्यात्य विद्वन्मते ७५, स्वामिहरिप्रसाद वैदिकमुनिमते ७०; 'आर्य्यडायरी'-मतेन १५४३ साममन्त्राः। हं हो! कियान्मतभेदोऽल्पसंख्याकमन्त्रवतामपि वेदानां मंत्रसंख्यायाम् आर्य्यसामाजिकानामपि परस्परम्। इमामपि सीमानमतिक्रम्य यदा ✕ केचिदार्य

सामाजिकसज्जना , ते अथर्ववेदे कुन्तापसूक्तं, सामवेदे आरण्यकपर्व्व महानाम्न्यार्चिकञ्च, ऋग्वेदे बालखिल्यं ( दृश्यतां 'वेदसर्व्वस्वस्य प्रथमभाग' ) च प्रक्षिप्तं मन्यन्ते, बालखिल्यञ्च ऋग्वेदे सायणाचार्येणाऽपि न व्याख्यातम् । शुक्ल यजुर्वेदे च क्वचिद् २ ब्राह्मणभागवचनानाम् ( यजु १९, १२, २४।१, ३०।५ इत्यादिसूक्ते ) प्रक्षेपं सर्व्वाऽनुक्रमणीकारोऽपि पुष्णाति, कृष्णयजुर्व्वेदे 'ब्राह्मण' मिश्रणन्तु स्पष्टमेव । एभ्योऽप्युन्नतिमिता × केचन जना येऽथर्व्ववेदे भूतप्रेत पिशाचादिमणिमन्त्रौषधाऽभिचारादिकर्म्मनिरूपणं सनातनधर्म्मस्थ-सकलसिद्धान्तमण्डनञ्च दृष्ट्वा तदर्व्वाक्तनतां गुप्तरूपेण मन्तुं सन्ति प्रवृत्ताः । तदीयपाश्चात्यदशकाण्डानि त्वर्व्वाचीनानि परिशिष्टानि वा 'वैदिकमुनि' रपि मन्यते ।

इतश्च बह्व्यो वेदशाखा लुप्तास्सन्ति, या अद्यत्वे न प्राप्यन्ते । यदि नियतसङ्ख्याकस्य— ( अल्पपरिणामकस्या- ऽपि ) वेदस्य भूयिष्ठरक्षायामपि तदीयेदृशी दुरवस्था, तदाऽनियतसंख्याकेषु बहुपरिणामकेषु वा उपपुराणोपपुराणभागभागिषु पुराणेषु यदि क्वचिदेवं दृश्यते; तर्हि वेदाऽनुकूलेषु तेषु किमाश्चर्य्यम् । मध्यकाले वेदस्याऽऽदर्शपुस्तकमेकमेव मिलितं 'जर्म्मनी' मुद्रितम्; तथाऽपि पाठभेदस्येदृशी दशा; यदि पुस्तकान्तराण्यपि अमेलिष्यन्; तदावश्यं प्रकरण-क्रमभंगोऽप्याशास्यमानोऽभविष्यत् । किञ्च पुराणेषु प्रक्षिप्तता स्वेच्छाऽनुसारन्न भवितुमर्हति । यदा किलोपक्रमोपसंहाराऽभ्यासोपपत्त्यपूर्वता-फलाऽर्थवादादिशाणेन घर्षणे कृते, पुराणनियतपरिणामतो व्यत्यासे दृष्टे च प्रक्षिप्तता शिद्धयेत्तदैव प्रक्षिप्तता साधयितुं शक्येति प्रागुक्तम् । परं तत्राऽप्यस्माकन्नाऽधिकारो यत्तं क्षेपकं पृथक् कुर्व्वीमहि । यानि क्षेपकवचनानि तत्र; तान्यपि पुराणोक्तवचनानां पुष्ट्यर्थं वा स्पष्टताऽर्थं वा प्रायस्सन्ति । कानिचिच्च तत्तत्पुराणे पुराणान्तर-वचनानि उपपुराणवचनानि वा तत्र तत्र मिश्रितानि । अमरकोषेऽद्यत्वे क्षेपकपद्यानि सन्ति, किमेतेन तदीय दुष्टता जाता ? प्रत्युत तेषां ततो निष्कासनमेव हानिकर्तृ स्यात । प्रत्युताऽहन्तु अभिलषामि, यद् अमरकोषेऽन्येऽपि श्लोकाः क्षिप्येरन् , येनाऽमराऽप्रोक्तपर्य्यायवाचकानां पूर्तिः 'गागर में सागर; इति भणितिश्च सफलीस्यात्, येनाऽनेनैकेनैव कोषेण सर्व्वकोषकृत्यं निस्तरेत् । केवलं क्षेपकचिन्हमात्रं देयं स्यात् । एवं पुराणेष्वपि क्षेपकवचनानि लाभदाय-

योजयितुं सुशकान्येव । वस्तुतस्तु सर्व्वपाठभेदयुक्तमेव पुराणं मान्यम् वेदेऽपि यत्र तत्र पाठभेदा वृत्ताः सन्त्येव । अस्तु— ।

कथनस्येदमेवाऽभिप्रेतम्, यत—सन्दिग्धवचनानां तात्पर्य्यंज्ञातुमुपक्रमोपसंहारयोर्दर्शनस्याऽवश्यमावश्यकता भवति, नतु केवलम् एकं द्वे त्रीणि वा पद्यानि प्रकरणान् पृथक् कृत्वा निदर्शनेन तेषा-मप्रमाणताऽश्लीलता वा विज्ञसमाजे समादृता स्यात् ।

अत्रेत्थमवसेयम्—

'स्वकीयाञ्च सुतां ब्रह्मा विष्णुदेवः स्वमातरम् ।
भगिनीं भगवाञ्छम्भुर्गृहीत्वा श्रेष्ठतामगात्,

—भविष्यपुरा० प्रतिसर्ग खं० ४, अ० १८ श्लो० २७

एतदादिकश्लोका प्रकरणात पृथक् कृत्वाऽपठितजनताया अग्रे यदा स्थाप्येरन् ( यथा चाऽद्यत्वे स्थाप्यन्ते छद्मसद्मभिरव्वीभिः ), तदा तेषामापाततो विरुद्धाऽर्थ ासनमश्लीलता वा प्रतीयते । सर्व एव वक्तुं प्रवृत्ता भवन्ति पुराणानाम द्रष्टारो विद्वांसोऽपि; यद्धन्त ! पुराणेषु देवानामित्थं श्रेष्ठता ? बत !!! परं यदाऽस्य सर्व्वमुपक्रमोपसंहारात्मकं प्रकरणं प्रदर्श्येत, तदा छलिनामाक्षेपकाणां मुखभंगो भवति, यथा—

'चतुर्द्धा प्रकृतिर्देवी गुणभिन्ना गुणैकिका ।
एका सा प्रकृतिर्माता गुणसाम्यात् सनातनी । २३ ।
सत्वभूता च भगिनी, रजोभूता च गेहिनी ।
तमोभूता च सा कन्या, तस्यै देव्यै नमो नमः । २४ ।
बहवः पुरुषा ये वै निर्गुणाश्चैकरूपिणः ।
चैतन्या ज्ञानवन्तश्च लोके प्रकृतिसम्भवाः । २५ ।
अलोके पापजाः सर्वे वेदब्रह्मसमुद्भवाः ।
या तु ज्ञानमयी नारी वृणेद् यं पुरुषं शुभम् ।
कोऽपि पुत्रः पिता भ्राता स च तस्याः पतिर्भवेत् । २६ ।
स्वकीयाञ्च सुतां ब्रह्मा, विष्णुदेवः स्वमातरम् ।
भगिनीं भगवांञ्छम्भुर्गृहीत्वा श्रेष्ठतामगात् । २७ ।

एतदुपक्रमोपसंहारे श्राविते सति ज्ञातम्भवति—कीदृशी प्रकृतिः सुतापदवाच्या कीदृशा च भगिनीमात्रादिशब्दवाच्या, ब्रह्मविष्णुशिवानां च किंगुणवती प्रकृतिः । वृथाऽश्लीलता ततः पलायते । परं 'बाढो भद्रं न पश्यति' इति नयेन कपटपटव पुराणस्य चिरत्नाः सपत्नाः कथमेतत् कुर्वन्तु नाम । एवमेव 'स्वसुर्यो जार उच्यते' ऋ० ६।५५।४ अत्राऽपि यदि पूषदेवताकं प्रकरणं न दृश्येत; तर्ह्यर्थस्याऽनर्थः सम्पद्येत । एवमेव प्रकरणे सर्व्वथोपेक्षिते – शतमदीनाः स्याम, यजुः ३६।२४ अत्र मौहम्मदानां 'मदीना' इत्यस्य, 'ईशावास्यमिदं' । यजुः ४०।१ अत्र ईसामसीहस्याऽपि च वैदिकता स्यात् । एवमेव 'नेन्द्रो अस्तीति नेम उ त्व आह, क ईं ददर्श कमभिष्टवाम' ऋ० ८।१०० (८९)।३ इदं मन्त्रमात्रमेव दृश्येत यदि, तर्हि प्रत्येष्यते, यद्-वेद इन्द्रस्याऽभावमेव मन्यते, यदा च –'अयमस्मि जरितः पश्य मेह विश्वा जातान्यभ्यस्मि मह्ना' ऋ० ८।१००।४ अयं तदनन्तरो मन्त्र पठ्यते, तदैव प्रतीयते, यद्-वेद इन्द्रस्याऽभावं न मनुते, किन्तु भावमेव ॥ एवमेव वादिनो मनुस्मृतौ नियोगं (९।५९-६०) श्रावयित्वाऽमे तत्खण्डकानि – 'नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः । अन्यस्मिन् हि नियुञ्जाना धर्म्मं हन्युः सनातनम्' मनु ९।६४ 'नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः' मनुः ९।६५—इत्यादि प्रमाणानि निह्नुवते । एवञ्च उपक्रमोपसंहारेऽश्राविते

'वैश्यकर्म्म च यो विप्रो लोभमोहव्यपाश्रयः ।
ब्राह्मण्यं दुर्लभं प्राप्य करोत्यल्पमतिः सदा ॥
स द्विजो वैश्यतामेति वैश्यो वा शूद्रतामियात् ।
स्वधर्म्मात् प्रच्युतो विप्रस्ततः शूद्रत्वमाप्नुयात् ॥

ब्रह्मपु० २२३।१६-१७ ।

# श्रीरामचरितशिक्षावलिः।

बाल्ये तु कौशिकमुनेर्मखविघ्नकार-
दुर्दान्त दैत्यदमनीय समुद्यतोऽभूत्।
प्रस्तूयते जगति रामनरः स सर्वैः
प्राप्नोति कीर्तिमतुलां हि परोपकारी।

( १ )

सीतास्वयम्बरसमागतराजवृन्दं
न्यक्कृत्य चन्द्रधर-चाप-विभञ्जनेन।
रम्या विदेहतनया किल पर्यणायि
वीर्यप्रधानपुरुषः सफलत्वमेति

( २ )

राज्याभिषेकमनु काननवासवार्त्तां
श्रुत्वा मुदं न च विषादमवाप धीरः।
एतादृशो जगति को नु सहिष्णु रासी-
ल्लोकोत्तरं हि चरितं शुचिमानसानाम्

( ३ )

मातुः पितुश्च वचनप्रतिपालनाय
प्रेमाकुलानुजसुपत्निसमं प्रसन्नः।
त्यक्त्वा सुखानि नरपालकुलोचितानि
आगाद्वनाय गुरुवाङ् नहि लङ्घनीया

( ४ )

वन्यामहो-मुनिमतंगविशिष्टशिष्या-
मन्विष्य भिल्लकुलजां करुणाकरेण।
आस्वादितान्युपहृतानि तया फलानि
प्रेम्णः परं किमपि वस्तु वरं न लोके

( ५ )

प्राप्तं दशाननहृतां मिथिलेशपुत्रीं
सख्यं विधाय सहसापदि वानराणाम्।
लब्ध्वा च तामगमयन्निजराजधानीम्।
किं किं न सिध्यति नरस्य समूहशक्त्या

( ६ )

यो वै पुलस्त्यकुलरत्नविभीषणस्य
त्राताऽभवन्नवरः शरणागतस्य।
लंकाधिपत्यमददत्सुसमीक्ष्य चैनम्
धर्मो ह्ययन्तु शरणागतपालकानाम्

( ७ )

सर्वे स्वधर्मनिरताः सुखिनो नराः स्यु-
र्विप्रदेवतोन्नतिपराश्छलपापहीनाः।
निर्वैरिणः श्रुतमिदं रघुवीरराज्ये
चैतादृशो हि नृपतिः परिसेवनीयः

पण्डित विनायकराव भट्टस्य (छत्रपुरम्)।

---

## मधुरालापः

ले०—केदारनाथत्रिपाठी ( गोलास्थः ) [ क्वींस-कालेज, काशी ]

अथानिलैः कम्पित-सुप्रसूने, मन्दैस्सुगन्धैस्सुखदैः कदम्बे।
विराजमानो नवनीतचौरो, गोविन्दनामा विजयं करोतु॥

[ नारायण मुकुन्द गोविन्दास्त्रयोऽभिन्नहृदयाः सुहृदः सन्ति ; प्रातःकाले ते स्वस्वगृहान्निर्गत्यैकीभूय धार्मिक-नैतिक-सामाजिकादिविषयोपरि समालपन्ति ] ।

उषःकालिकोऽयं कालः । कुमुदिन्यो रमण-रमणसुखमनुभूय प्रियसहचरी निद्राया अङ्कमाविविशुः । अरविन्दवनं क्षणदा-क्षण-शयनं विधाय किमपि लापार्थमुद्यतो भवति । शयन-सुखमनुभवन्ति पेचकाः । सानन्दाः कोकाः समभवन् । रजनीनायको निशीथिनी-रतिश्रमं दूरीकर्तुमनाः शयनागारमारुरोह । भगवान् भास्करोऽपि विश्रामानन्तरं प्राचीगवाक्षमार्गेण रजनीरमणीरतिसुप्तान्-जनान् पश्यति ।

[ एतस्मिन्रमणीये समये तरङ्गिण्याः कूले निकुञ्जे नारायणमुकुन्दौ परस्परवार्तालापेन माधुर्य समवायसमवायितेन हृत्तन्त्रीं सुखयतः ]

नारायणः--मित्र मुकुन्द ! सम्प्रति सर्वश्रेष्ठस्या आर्यजातेरवस्था यादृशी न तादृशी कस्या अपि जातेः ।

मुकुन्दः—वयस्य ! किमधिकेन ; सर्व एव सदाचाराचरणमांगलिकार्यान्वयसमुल्लसिताः सानातनिकीं परिपाटीं परित्यज्य पेरिससभ्यतां स्वीकुर्वन्ति, ( भारतवर्षोऽपि पेरिसस्स्यादित्यभिलषन्ति )

नारायणः—मित्र ! ते विविधान् नियमान् विधातुमीहन्ते, विधवा-विवाहादौ राजकीयनियमो भवेत्तत्र विषये इत्यपि वाञ्छन्ति ।

मुकुन्दः—विधवा-विवाहं प्रयतन्ते ; पुनरपि सर्वेषां सर्वत्र विवाहस्स्यात्-अर्थात्—विवाह-विषये जातिरेव नापेक्षिता ।

नारायणः—जातिस्तु कुत्रापि नापेक्षिता; अपि कण्टकायते सा तेषां मार्गे ।

मुकुन्दः—अधुनैव गान्धि-महाशयस्य पुत्रस्य देवीदासस्य राजगोपालाचारि-नामधेयस्य विप्रकुलदोषाकरस्य कन्यकया सह परिणयोऽभूत् । यो हि सहृदय हृदयाब्जे चन्द्रहासायते ।

नारायणः—एतेन वर्णाश्रमि-जनतायां समुत्पन्नः कोलाहलो महान् । दुःखं वितरति खलु वार्तेयम् ।

मुकुन्दः—सत्यम् ।

नारायणः—जर्मनदेशे भारतवर्षमनुकृत्य "आर्यानार्यविवाहविच्छेदको नियमोऽपि निबद्धः ।

मुकुन्दः—श्रूयते ।

नारायणः—राष्ट्रास्सर्वे भारतवर्षस्य सभ्यतामनुकुर्वन्ति; किन्तु खेदा-वसरो यदत्रत्या जनाः पेरिस-सभ्यतामेव।

मुकुन्दः—हा धिक्, धिक् तानीदृशा ये।

नारायणः– किं कथयामि गान्धि-महाशयं, राजनीतिज्ञोऽपि कृतवानेवम्।

मुकुन्दः—प्रिय मित्र नारायण? गान्धि-महाशयो नीति-शास्त्रे न हि चतुरः। सोऽपि पेरिस- सभ्यतायाः पूजकः।

नारायण.—वयस्य मुकुन्द! एवमाचरणेन वर्ण-दूषका भविष्यन्ति, तदा राष्ट्रस्य महती हानिः।

मुकुन्दः—नहि शङ्कासन्देहलेशः। प्रतिपादितम् भगवता तत्रभवता मनुना निर्झरनि सरणशीलेन पद्येन—

यत्रैते हि परिध्वंसा जायन्ते वर्णदूषकाः।
राष्ट्रिकैः सह तद्राष्ट्रं क्षिप्रमेव प्रणश्यति॥

नारायणः—पूर्णावतारेण वृन्दावन-विहरणपरायणेन योगीन्द्रवर्येणापि

संकरो नरकायैव कुलघ्नानां कुलस्य च।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रिया॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः।
उत्सायन्ते जातिधर्माः कुलधर्माश्च शाश्वताः॥
उत्सन्न-कुलधर्माणां मनुष्याणां जनार्दन।
नरके नियतं वासो भवतीत्यनु शुश्रुम॥

मुकुन्दः—नागतवान् गोविन्द इदानीम्।

नारायणः—केनापि कारणेन भवितव्यम्; गन्तव्यं तत्र।

[द्वे मित्रे गोविन्द-गेहम् गत्वा तारस्वरेणोचतुः।]

ना० मु०—हे मित्र गोविन्द! आगच्छ शीघ्रम्। रक्त-रश्मिभिस्तुङ्गगिरि शृङ्गान् पादपाग्रभागान् खालंकारचन्द्रचुम्बनशीलाट्टालिकाश्च मण्डयति भगवान् कमलिनीवल्लभः।

[आकर्ण्य वचो गोविन्द शयनादुत्थाय तयोरन्तिकमागत्य ताभ्यां पृष्ट-स्समस्त मुदन्तजातम् प्राचकथत्]

गोविन्दः—किमपि रमणीयतममुद्यानं संविभ्राजते। सारस-कारण्डव-चक्रवाक-राजहंस-मल्लिकाक्ष-मण्डूरवाकुलेऽत्रत्ये सरसि कुमुदिनी कामिनीव मलयपवनान्दोलितपरभृतिकीरालिकुल-पीपी-कलकलरवव्यापृतरसालकिसलयरम-

णीयतममञ्जरीमकरन्दा वाद्नोन्मादिनोऽलिकुलानाह्वयतिस्म । उदुम्बर कोविदार शारद-मालूर-किंशुक-कोली नीपार्जुनपूति-काष्ठ-शोभाञ्जन-मधुशिग्रु- शम्याक-जंभल-वञ्जुल-करकादिपादपश्च परभृतरुतेनापूरितमासीत् । यूथिका-जयन्ती- हेमपुष्पिका-मालती-मल्लिका भूकमलचाम्पेयोत्थित सौरभ सुरभित-समीरो मन्दं मन्दं वातिस्म । विभ्रमा ससंभ्रमा चन्द्र-चन्द्रिका रजनीसुखमनुभवतिस्म । पञ्चशर शरव्यतया मुग्धा प्रमुग्धा माधवी भगवन्तं विषम शर मनङ्गं समालिङ्गितुं संव्याकुलाऽऽसीत् । लवंगलतिका वारांगनेव मधुकर-समुदाय मात्मसाद्विदधाति स्म ।

एवंभूते सुमनोहरे मनोहरे समये यामिन्या मेतस्यां रमणीयतमायां काऽपि भुजंगमवेणी धराकुरंगनयना सहस्रदला विन्वधराधरा श्री जननी समुद्गत विशदरत्ना मण्डनामण्डिता कमनीय-कान्ति-कलित कलेवरा चामीकरकलश कुचविनम्राऽभिरामा विधातुर्धातुः प्रथमा सृष्टि रिव षोडशवर्षदेशीया बाला मन्दगत्या राजहंसं लज्जयन्ती भ्रमति ।

आकृत्या संलक्ष्यतेऽस्या इयं पुरातनकालीनसभ्यसमाजसमभिनन्दित-सुन्दर धर्मसद्भावा भावेनावधीरणामापन्ना निवासमभिलषन्ती चन्द्रचन्द्रिका समुल्लसित वेपेनसमीरेण संमिश्रितरागेण "क्व स्थानापन्ना भवामि" इति समालपतीव ।

एतस्मिन्नन्तरे "हे मित्र गोविन्द ? आगच्छ शीघ्र" मित्याविप्रेम गर्भित-स्वातिवेदुवाक्यकदम्बकमाकर्ण्य परित्यजामि भगवत्या निद्रादेव्या अङ्कं ।

---

# निवेदनम् ।

बहूनां ग्राहकाणां कार्य्यालयेऽस्मिन् सूर्य्योदयस्य दशमवर्षीयैकादशद्वादशाङ्कयोः कृते पत्राणि समागतानि । तत्र सर्वत्रैव तौ अंकौ सहैव प्रेषितौ । येषां पार्श्वे नोपस्थितौ स्यातां ते अक्टुबर मासस्य १५ पञ्चदशतिथिं यावत् कार्य्यालये सूचयित्वांकोपलब्धिं कर्तुमर्हन्ति । अस्माभिः पृथक्पत्राणि तेषां पार्श्वे व्ययसङ्कोचात् न प्रेष्यन्ते । सूर्य्योदयस्य विलम्बवशात्तेषां महोदयानां व्यर्थमेव प्रतीक्षणावसरो जात इत्यस्माकमस्ति महान् खेदावसरः ।

कार्य्यालय व्यवस्थापकः ।

# भट्टमहाभागानां समाधिः ।

( १ ) ले०—'अन्तर्यामी' ।

'रत्नाकर' सम्पादकैर्भट्ट श्री मथुरानाथ शास्त्रिभिः 'अहो साहसम्' इति लेखस्य स्वपत्रेऽप्रकाशन-विषये 'रत्नाकरे' ३।२ समाधिः कृतः। तत्रेदं निवेदनम्—यदि सत्यं तैरसौ लेखः 'प्रकाशयितु मैष्यत' ; मयैव किल 'रभसोत्तेजितेन' सोऽयं लेखः 'सूर्य्योदये' प्रकाशितः, तर्हि तु सत्यं मम रभस एव। परं मया चिरकाल-प्रतीक्षणेऽप्यमुं लेखं तत्र प्रकाशित मनिभाल्य अन्यदेवाऽनुमितम्। तदेतद्, यद्-अयं लेखस्तैरस्वीकृत एव, यतो यदा भट्टमहाभागानामेव प्रायः प्रत्यङ्कं लेखद्वयं लेखत्रयं वा 'रत्नाकरे' तिष्ठति, तेन मयाऽनुमितं यत्—तेषां पार्श्वेऽन्यदीय लेखानां न्यूनताऽस्ति। न्यूनतायामपि यत् तैरयं लेखो न प्रकाश्यते, किन्तु स्वलेखै 'रत्नाकर' स्तुन्दिलः क्रियते, तेन मदीयोऽसौ लेखस्तै र्न स्वीकृत इत्यनुमानस्याऽवसर आसीदेव। अन्येयमपि शंकोपस्थिता यद् 'रत्नाकरः' सामयिकमत एव शीघ्र प्रकाशनीयमद्याऽपि लेखं यदद्याऽपि न प्रकाशयति; कदाचन तल्लेखप्रकाशनेन स स्वलघिमानं बुध्यमानः स्यात्। पश्चादस्य सामयिकस्य लेखस्य यातयामता मा भूदिति तस्य लेखस्य 'सूर्योदये'-नाऽपि सम्बन्धमाकलय्य तत्रैव प्रकाशनाय प्रेषित इत्यपि 'रभसोत्तेजनायां' बीजम्। यद्यपि 'प्राप्तमात्रा' एव सर्व्वे लेखा लेखकानां न प्रकाश्यन्ते, तथापि सामयिकास्तु यथासम्भवं तत्कालमेव प्रकाश्यन्ते, अन्यथा पश्चात्तेषां वैरस्यं स्यात्। सामयिकता चाऽस्य सद्यो 'रत्नाकार' मुद्रितलेखस्याऽपहा-रप्रदर्शने आसीत्। तदुत्तरन्तु पाठकानामपि विस्मृतौ, कालातिपाते च जाते वैरस्यं भवति-इति 'भुक्तभोगा' विजानीयुः।

अग्रे श्रीमन्तः प्रकाशकमहोदयाऽभिमुखतः समादधति, यद्—'नाऽसौ 'सूर्य्योदय' स्य सर्वा अपि संख्याः प्रतिक्षणमक्ष्णोर्नर्त्तयति, नाऽपि सम्पादक एव सर्वसूक्तीः कण्ठस्थोकुरुते' इति। तत्रेदं निवेदनम्—यदा श्रीमत्प्रकाशकैः 'अहो साहसम्' इति 'सूर्य्योदये' १।२३ अन्यदीयलेखाऽपहार उद्घुष्टः; तर्हि तच्चिरकालमुद्रित-पुस्तकं किं तैः 'प्रतिक्षणमक्ष्णोर्नर्त्यतेस्म' ? श्रीमद्भिरेव 'भट्टमहाभागैः' प्रथमवर्षीय

(१) श्री 'सूर्योदय' सम्पादकाः प्रणम्यन्ते ।

कृपया इमं लेखं 'सूर्योदये' शीघ्रं प्रकाशयानुगृह्णन्तु ।

भवदीयः—लेखकः ।

'रत्नाकराऽष्टमांऽके' 'श्री' पत्रद्वितीयवर्षीय-प्रथमसंख्यामुद्रितस्य 'अस्माकं मातापितरौ' इति लेखस्य पुरातन 'रत्नाकराद्' अपहारः सूचितः; प्रत्युत—'विशेषतश्च अधुनैव प्रचलितानां पत्राणां पक्षे नैतत्प्रतिष्ठायै' इति 'श्री' पत्रप्रकाशकः श्रीमद्भिरप्यधिक्षिप्तः; तत् किं श्रीमन्तोऽपि 'रत्नाकर' स्य दशवार्षिकीः सर्वाः संख्याः प्रतिक्षणमक्ष्णोर्नर्तयन्तिस्म ? तं लेखं वा 'कण्ठस्थीकुर्वन्तेस्म' ? अथवा 'श्री' सम्पादक एव 'अस्माकं मातापितरौ' इति प्राचीनलेखं कण्ठस्थीकर्तुं बाध्य आसीत् ? यदि भवद्भिरमीभिश्च स्व 'दीर्घस्मृति' प्रख्यात्यै तल्लेखाऽपहारनिदर्शने पराक्रान्तम्, तर्ह्यत्राऽपि तदेवोपालम्भे बीजं शक्यते कल्पयितुम् ।

यदा किल 'प्रकाशक' महाभागपार्श्वे 'सूर्योदय'-पत्रमपि प्रारम्भादेव याति, तदा १।२३ संख्यायां भीषणरूपेणोपालभमानैस्तैस्ते ते लेखाः कुतो न दृष्टाः स्युः ? चिरमुद्रित म० म० श्रीहरनारायणविद्यासागरस्य कविता यदि तदक्ष्णोर्नृत्यति' तर्ह्यल्पकालमुद्रिता कविता यदि तदक्ष्णोर्न नृत्यति, तर्हि किं तेषां स्मृतेर्दोषः ? तत्र मनोऽनियोगस्य वा कारणम् ? नाऽऽद्यः—चिरकालिकी तु स्मृतिस्तिष्ठति, अल्पकालिकी तु न—इति केयं व्याप्तिः ? यदि द्वितीय-कारणं मनोऽनियोगस्येति, तत्तु १०मवर्षीय 'सूर्योदय' स्य २५८ पृष्ठे २७ पङ्क्तौ तस्मिन्नेव लेखे मयाऽप्युपक्षिप्तम्, भट्टमहाभागैस्तत्र कस्तावन्नव्यतोन्मेषः कृतः ?

अग्रे भट्टमहोदया नवीनोपालम्भसृष्ट्यौ विस्मयन्ते—नाऽयं नाम नवीनोपालम्भः । प्रागीदृगपहारोपालम्भसृष्टिः 'सूर्य्योदये' १।२३ म० म० श्री गि० श० महाभागैरेव प्रारब्धा ततो भवद्भिर्भट्टमहाभागै 'रत्नाकरे' ११८ 'अस्माकं मातापितरौ' इत्यपहारेण 'श्रियाः' प्रकाशकोऽधिक्षिप्तः । ततो यद्यस्माभिस्तेषामुपालम्भकानामेव स्मृतौ त्रुटिप्रदर्शनायाऽन्यदीयाऽपहारदर्शनेऽल्पे शब्दा उल्लिखता अपि; तर्हि केयं नवीनता नाम ? अथवाऽयमुपालम्भो नाऽऽसीत्, किन्तु तत्राऽऽश्चर्य्यप्रदर्शनं कृतमासीत्तेषां स्मृतौ ।

किञ्च—'अमुं लेखं न प्रकाशितवन्तः । इति 'सूर्य्योदय' स्थलेखान्ते लेखश्च न 'रत्नाकर' सम्पादकेषु भवत्सु कलङ्काऽङ्कनाय, प्रत्युत स्वोपरि आपतिष्यत्कलङ्क-दूरीकरणाय । अर्थाद्—यद्ययं लेखः 'सूर्योदये'ऽपि प्रकाशेत—इतश्च 'रत्नाकरे'ऽपि प्रकाशेत, तर्हि 'रत्नाकरे' ११८ प्रकाशितायाः—'अन्यपत्रेषु प्रकाशितचरं लेखं संस्कृतरत्नाकरस्य पाठकेभ्यो वयं नोपहर्तुं कामयामहे, (यद्यपि 'रत्नाकरे' एतद्विरुद्धताऽपि दृष्टा) ये एकेनैव लेखेन सर्वपत्राणामुद्धारं वाञ्छन्ति ते रत्नाकराय क्षमां दद्युः ।

इत्यादिभवत्सूचनाया विरुद्धमभियोगोऽस्मासु न प्रवर्त्तेत । तैश्च ज्ञायेत यदयं लेखो 'रत्नाकरे' अप्रकाशनाऽनुमानेनैव 'सूर्योदये' प्रेषितो न तूभयत्र यौगपद्येन प्रेषित इति ।

भट्ट महोदयानां भ्रमो न तिष्ठेदितीमाः पङ्क्तय उपनिबद्धा अस्माभिः आशासे त एतेनाऽवगतार्थाः सन्तुष्येयुरिति कृतमन्तर्गडुना विस्तरेण ।

———:•:———

# काश्या विश्वेश्वर प्रार्थना ।

(ले०:—श्री गदाधर विद्याभूषण महामहोपाध्यायः (इच्छापुरम गंजाम)

काशीपुरेश ! चिरमात्म-समाधिमग्नो ।
माभूः, कलंकितमितो निजनाम पश्य ।
तिष्ठत्यपि त्वयि विभौ भुवि विश्वनाथे
विश्वे तवैष भृतको नितरामनाथः ॥१

अन्तर्वणं दहति दुःखदवानलो मे
हंसः कुकायकुहरे परिपच्यतेऽसौ ।
गंगाधर स्त्वमिति देव निवेदयामि
निर्वापयाशु करुणामय वारिपूरैः ॥२

आपद्घनाघनघटाघनभीति-वर्षै-
श्चिन्तावितान सरितः परितः सृजन्ति ।
श्रीविश्वनाथ ! विनतोचित-पक्षपातैः
वार्तिं निवारय च तारय मामनाथं ॥३

व्योभूदिशां पतिभिरप्यनिवार्यकष्टैः
पिष्टं न मां करुणया यदि तारयेथाः ।
विश्वप्रभो त्वदितरः कतमो मम स्यात्
त्राता मदन्य इह कस्तव तारणीयः ॥४

भागीरथीभरमणो भुजगाधिपो वा
स्याच्चेन्निशम्य रुदितानि विबोधये त्वां ।

रत्नाकराम्बर-रसातल माश्रितास्ते
नाथ ! स्वयं झटिति जागृहि पाहि भृत्यं ।।५

भारं निरीक्ष्य मम दुःख-धरा-धरस्य ।
नैवार्हसि त्वमपि वञ्चयितुं परोक्षात्
नक्तं-दिवं तवदृशो ननु गोचरोऽहं
वेदाः प्रमाण मिह जाग्रति विश्वमूर्त्ते !।।६

पाषाणलिंग-वपुषस्तव निष्ठुरत्वं
दैन्यं न सोढु मलमाकलय प्रभो मे ।
एतद् यदीक्षण-पथं क्षणमेव गच्छे-
द्दम्भोलि रप्यचिर मम्भसि पर्य्यवस्येत् ।।७

मा मां स्मर स्मरपरं स्वगतिं स्मरारे
हालाहलं जिगिलिष स्तवकेन शान्तिः ।
दुःखाश्रुभि र्निपतीतै श्चरणे मदीयै
मूर्ध्नीन्दु दिव्यसरितावपि तप्स्यतोद्धे ।।

दुःखोदितानि यदि मे सहसे सहस्व
किन्त्वग्रतो जगदधीश्वर चिन्तयैतत् ।
आक्रोशवागसदृशा चरणे क्षणात्ते
सह्या भवेत्तव न वा जगदम्बिकायाः ।। ८

एतां तव स्तवमयीं नवरत्नमालां
निर्दोष ! भव्य-गुणवर्ग ! निसर्गरम्यां ।
भक्त्यार्पयामि सुमवत् कुसुमाकराय
प्रीत्या गृहाण सुमुखो भव विश्वनाथ !।।१०

इति किल कविना गदाधरेण
प्रविरचिता नवरत्न-मालिकेयं ।
स्तुतिकर-चिर-दुःख-शोक-हन्त्री
जगति भवेज्जगदीश्वरप्रभावात् ।।११

# आधुनिकविमर्शकसमीक्षा

ले०, पं०, घण्डकोटोपनामा, सुब्रह्मण्यशास्त्री
गोदावरीमण्डलीयनरेन्द्रपुराऽभिजनः।

अस्तीदानीं लोके ग्रंथविमर्शकानां संख्या दीर्घतमा। एते प्रायशः सर्वविषयेष्विव विमर्शनव्यापारेऽपि विदेशीयाननुकुर्वन्ति। केचित् वेदान्, केचित् स्मृतीः, केचित् पुराणानि, केचित् प्राचीनकाव्यपद्धतिं च, नानाभंगीभिः स्वैरमितस्ततश्चालयन्ति विनैव संप्रदायसिद्धं विज्ञानं। अविदित्वैव ते स्वीयां शक्तिमशक्ये कर्मणि प्रविशन्तीति महच्चित्रमेतत्। एतेन च कुविमर्शनेन न केवलमेते स्वयमेव नश्यन्ति। किं तु ये किल किंचिज्ज्ञा भूत्वा विजिज्ञासवो भवन्ति तेषामुत्पाद्य बुद्धिभेदं विनाशयन्ति धार्मिकीं प्रवृत्तिं।

सांप्रतिकाः केचन विमर्शकंमन्या अनाघ्रातवेदपरिमला अपि अनादिनिधनस्याऽपि भगवतो वेदस्य जन्मकालादिनिर्वचनं कुर्वन्ति। अयमृग्वेदकालः, तत्राऽप्यन्यस्संहितासमयः, अपरो ब्राह्मणकालः इत्यादि बहु कथयन्ति। स्वमतप्रतिकूलवाक्यानि प्रक्षिप्तानीति प्रकटयन्ति। क्वचित्क्वचिदर्थान्तरमुपन्यस्य अवैदिकं स्वीयं मतं द्रढयितुमभिलषन्ति। एतादृशानेवाऽधिकृत्य भगवान् वेदव्यास उवाच।

बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति॥ इति,

केवलवैयाकरणानां केवलमीमांसकानान्तु अस्म्येवाहं दुर्विज्ञेया, अपि तु ये पदवाक्यप्रमाणपारावारपारीणास्त एव मदीयं वास्तवं रूपं द्रष्टुमर्हन्तीति स्वयमाह भगवती वाग्देवता ऋग्वेदीय सरस्वतं सूक्ते।

उतत्वः पश्यन्न ददर्श वाचं। उतत्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः॥ इति॥

किंच विदितसकलशास्त्राणामपि सद्गुरु-मुखात् वेदरहस्यार्थमजानतां महामहिम्नो वेदस्य मुख्यं तात्पर्यं दुर्विज्ञेयमिति यजुर्वेदीय-नृमेध-परुच्छेप संवादादवगम्यते। किमुत आबाल्यादाङ्लभाषाऽभ्यासिनां श्रुतिस्मृति-सदाचारविमुखानां दुर्विज्ञेयमिति।

केनचित्पाश्चात्यानुकारिणा वाल्मीकीयं रामायणं विमृशता 'रामो भीमपराक्रमः' इति वाक्यस्य रामो भीमसेनतुल्यपराक्रमविशिष्टः, इत्यर्थमभिधाय रामस्य भीमौपम्येन पाण्डवकथाप्रतिपादक-महाभारतस्य रामायणनिर्माणकालात् प्राक्तनत्वं निरणायि।

कश्चन मेधावी भागवतं विमृशन् तत्र ' घोषाङ्गनाः, इति पदमवलोक्य अविदित्वा च तत्पदस्य आभीरनार्य इत्यर्थं 'तत्समये ग्रामटिकासु ग्राम्यस्त्रीणामेव घोषा ( हिन्दीभाषायां, परदा, ) आसीत्किल, न नगरेषु, न विदग्धानां, इत्यभाणीत् ।

अयि पाठकमहाशया । पश्यत अस्य विमर्शकस्य पण्डित्यपाटवं । एतादृशा एवाधुना ग्रन्थविमर्शकाः शास्त्रविमर्शकाश्च । भारतदेशीयं सकलमपि वाङ्मयं विमर्शयन्ति च एतैरेव राजकीया मासि मासि चतुश्शतं पञ्चशतं वा वेतनं दत्वा ( अहो सकलविद्याजन्म-भूमेर्भारतदेशस्येदृशी दुर्दशा हा ! कष्टम् )

विदेशीयानामास्माकीनग्रन्थविमर्शने किंवा प्रयोजनमस्तीत्यत्रोच्यते । ते खलु न सहन्ते परोन्नतिं, सर्वथा सर्वविषयेऽपि स्वीयामेवोन्नतिमाकलयन्ति । कलाकौशलस्य, विज्ञानस्य, नागरिकतायाः, सुखस्य, धनस्य, भोग्यजातस्य च, किंबहुना सर्वस्याऽपि सारवस्तुनो जन्मभूमिः स्वीयो देश इति तेषामाग्रहः । विदितमेवैतत्सर्वेषाम् यत् यतः प्रभृति ते देशमिममागच्छन्तिस्म, तदाऽरभ्य एतावत्पर्यन्तं स्तोकं स्तोकमास्माकीनं वाङ्मयं विज्ञानं च भोग्यवस्तु च संगृह्य स्वीयं देशं नयन्तीति ।

नीत्वा चाऽत्याश्चर्यकारिणीमतिप्राचीनां सर्वप्रकारां भारतीयोन्नतिं विदित्वा तामसहमानाः तद्बोधकग्रन्थेषु विपरीतदृष्ट्या प्रकल्प्याऽसदर्थं निकृष्टतामप्रामाण्यं मिथ्यात्वं च असद्धेतुप्रदर्शनेन प्रचारयितुमुद्यता अभवन्, भवन्तिच साम्प्रतमेतत्तेषां स्वोत्कृष्टतासंपादनप्रवणानाम् कृते भारतीयानां तावद्यमुद्यमो गर्ह्यतमः । एते देशान्तरीयशिक्षादोषदूषितमानसास्सन्तो विस्मृत्य स्वीयामुन्नतिं मातृभाषायाः मातृभूमेश्चावनतिमापादयन्तः एवं व्रज, एवं कुरु, एवं वद, इति शासकैरादिष्टाः पशुकपिशुका इव शिरांसि चालयन्तो यथाशासनं व्रजन्तः कुर्वन्तो वदन्तश्च आबाल्यादाचरमश्वासं पारतन्त्र्यतप्ततैलकटाहोदरे मज्जनोन्मज्जन संतापमनुभवन्ति। नेहाऽस्ति ह्रीः, अमुत्र न भीः, उभयत्र न श्रीरेतेषाम् । हन्त कदा कथं कुत एतेषां मानसेषु परिवर्तनं भवेत् ।

अघटित-घटनापटीयसी खलु भगवतस्सकलचराचरगुरोरखिलबुद्धिप्रेरकस्य परमेश्वरस्य शक्तिः । स एव शरणं मस्माकं । विदधातु सद्बुद्धिप्रदानेन सर्वस्याऽपि लोकस्य मंगलं सर्वमंगलासहायः ॥

[ कस्यापि वेदसमालोचकस्य मतखण्डनं कृत्वा प्रेषयन्तु लेखकमहोदयाश्चेत्सहर्षं प्रकाशयाम इयन्तु भूमिकैवास्ति । सं० ]

---

# प्रतिवादपत्रम् ।

विदितमस्तु महानुभावानाम्—गतवर्षे आश्विन पूर्णिमायां प्रकाशितं सूर्य्योदयपत्रं मया-स्यामेव ज्येष्ठामायां दैवादवलोकितम् पठितंच तत्र रसूलपुरे पण्डित-सम्मेलन-शीर्षकलेखनम् । तत्र सूर्य्यपुरवास्तव्येन श्रीभगवत्प्रसाद पाण्डेयेन पदकप्रदानविषयक-लेखो यथार्थमनवधार्य्य स्वमनसैव लिखितः येन सभोपस्थितानां व्याकरणादिपुष्टाचार्य्याचार्य्यपरीक्षोत्तीर्णविदुषां मनसि संक्षोभः संजातः । अतः सर्वेषां यथार्थवार्ता-विज्ञापनाय निवेदयामि । मया तु साहित्य-कला-कौशल-पूर्वक-कवितायाम् उत्साह-सम्पादनाय व्याकरणातिरिक्त विषय एव सर्वाणि पदकानि प्रदत्तानि तत्र श्रीशोपनाम्ने ईशदत्तपाण्डेयाय स्वर्ण पदकं प्रथम-श्रेण्याम् काशीनाथ-शिवनाथ-शर्म्मणे रजत-पदकद्वयं द्वितीय श्रेण्याम् सूर्य्यपुर-वास्तव्याय सरस्वती दत्त शर्मणे रजतपदकं तृतीय श्रेण्यां नाट्य-कलायां तु रघुपतिसिंह वर्म्मणे रजतपदकं श्रेणी-विभागं विनैव । अतो लेख व्यति क्रम-निरशनाय मम सम्मतं विनाग्रिमवर्षतो लेखो न प्रकाशयितव्य सभाविषयको लेखः प्रत्युद्गमहमेव भवत्सविधे प्रेषयामि येन विदुषां समाजे व्यतिक्रम-जनितः क्षोभो माभूत् अन्येषां वस्तुतः सभा-कार्य्य-विवरण ज्ञानं च भवेत् इति प्रार्थना ।

भुवनेश्वर प्रसाद नारायणसिंह ।

प्रोप्राइटर रसूलपुर स्टेट ।

———

सन् कर्मकाण्डज्योतिर्विषयोरनुभववान् विद्वान् भवेत् । द्वयोश्छात्रावासाधिष्ठात्रोः प्राच्यनव्यक्रीडा-निपुणयो सेना व्यायाम ( ड्रिल ) मल्लसंग्राम ( कुश्ती ) यष्टि-कासंचार-तरणोपदेश-दक्षयोः, यौ गृहस्थावतिचत्वारिंशद्वर्षवयस्कौ स्ताम् । एतादृशां भजनोपदेशकानां, ये "हारमोनियमा" ख्यवाद्येन कथा वाचयितुं लब्धप्रागल्भ्या भवेयुः, सनातनधर्म सिद्धान्त-साधने प्राप्तप्रतिष्ठाश्च स्युः । एतादृशानां महोप-देशकानां, ये सनाततधर्मोपदेशैर्जनतां रञ्जयन्तः, ऋषि कुलार्थमन्नार्थ-संग्रहं कर्तुं शक्नुवन्तु इति ।

प्रार्थना पत्राणि प्रमाणपत्रैः सत्रा, सम्भवं चेत्सचित्राणि प्रहितव्यानि । तेषां प्रार्थनापत्रेषु विशेषमवधानं दास्यते येषां सनातन-धर्मशिक्षालय-कार्यानुभवो ज्ञास्यते, सनातनधर्मिण एव द्विजाः ( ब्राह्मण क्षत्रिय वैश्याः ) पत्राणि प्रहिण्वन्तु । पत्राणि अक्टूबर मासस्य पञ्चदशतारिकां यावदवश्य मागन्तव्यानि, वेतनं योग्यता पेक्षमिति ।

व्रजनाथशर्मा गोस्वामी ( राय साहब )

अवैतनिक प्रधानमन्त्री-ऋषिकुल ब्रह्मचर्य्याश्रमस्य, हरिद्वारस्थस्य ।

—:o:—

* यतो धर्मस्ततोजय *

* सिद्धपुरब्रह्मचर्याश्रमस्थो हरिशङ्करच्छात्रः *

इह खलु भारते युगप्रभावात् पाश्चात्य-शिक्षावशाच्चानेके प्रत्याघाता भवन्ति सनातन-धर्मोपरि । यत्र खलु प्रिय-धर्मार्थी सुतवित्तदारान् न गणयन्तः प्रियप्राणान् त्यजन्तिरम भारतीयाः । साम्प्रतं तु धर्म एवास्माकं प्राण-विनाशक इति तन्नाशार्थमेव प्रयतन्त्याधुनिकाः सुधारकाः । त एव धर्मज्ञानशून्योच्छृंखल स्वतन्त्रोन्मादवशादीश्वरस्य धर्मस्य चास्तित्वनाशार्थं यतन्ते । प्रलपन्ति च धर्मेणेश्वरेण च जगतो नाशः कृतः । तद्वशाच्च भारतवर्षस्य पारतन्त्र्यं‌आगतम् । तत्प्रभावेण च दुःखग्रस्ताः सञ्जाता भारतीयप्रजाः ।

नात्र सन्देहो यद् स्वार्थकामलोलुपदाम्भिकैः पुरुषैः कामक्रोधादिवशाद्ध-र्मापर्यनाचारः कृतः क्रियते च । मानप्रतिष्ठाधनमदान्धा दुर्बलान् कृषिकारान् भृत्यादींश्च पशुवत् पीडयन्ति । किन्त्वत्र निश्चयेन प्रतीयते यदीश्वरस्य धर्मस्य च नायं दोषः । परन्तु प्रायसु सनातनधर्माभावादीश्वरास्थाभावाच्च दोषा वर्द्धिता । यदि सर्वव्यापकनित्यशुद्धानन्दघनेश्वर-सत्तायां विश्वासः सनातनधर्मे

च लोकानां प्रवृत्तिश्चेत्तर्हि पाखण्डादिदोषवृद्धिर्न स्यात्। किन्तु तेषु दोषेषु सनातनधर्मह्रास एव प्रधानं कारणम्। अधर्मप्रतापादेव पवित्रो भारतदेशः पराधीनः प्राणिनश्चाल्पायुषो जाताः। भूकम्पादिदैवशक्त्यैव प्राणिनो दुःखग्रस्ताः सन्तो वस्त्रान्नं विनैव प्राणान् त्यजन्ति। तदुक्तं शास्त्रे 'धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः' हतो धर्मः स्वहन्तारमेव हन्ति रक्षितश्च रक्षति'। हन्त साम्प्रतं पाश्चात्यशिक्षापण्डिता न्यायान्यायमविचार्य्यैव धर्मस्येश्वरस्य चातथ्यां निन्दां कुर्वन्ति।

पुरा येषां भारतीयानां पूर्वजाः शास्त्रवेत्तारः सनातन-धर्मज्ञाश्चासन् साम्प्रतं तेषामेवान्वयप्रकाशकाः पुत्राः पाश्चात्य-संस्कृतिप्रभान्वितदूषितशिक्षावशात् सनातनधर्मं न जानन्ति। अतस्तैरेव विचार्य्यताम्। यदस्माकं पूर्वजाः प्रकाण्ड-धर्मप्रचारका विगतस्पृहाश्चासन्। धर्मार्थं तैर्महानुभावैर्दुःखानि सोढानि। देशार्थं धर्मार्थं च केन प्रकारेण तैः प्राणा अर्पिताः। तथाचोक्तं तैः। धर्मान्न प्रमदितव्यम्। सदा सर्वत्र सनातनधर्मस्यैव जयो जातः। तदुक्तं भारते यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः॥ यत्र श्रीकृष्णस्तत्रैव श्रीर्विजयो भूतिश्चावश्यं भवति। यत्र धर्मस्तत्र श्रीकृष्णः। अतो धर्म एव सर्वेषामुन्नतिकारको हितकारकश्च धर्मलक्षणम्प्रोक्तं महर्षिणा कणादेन। यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः। येन संसारोन्नतिर्मोक्षप्राप्तिश्च भवति स धर्मः। महर्षिणा वेदव्यासेनाप्युक्तम्।

> धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः।
> यस्स्याद्धारणसंयुक्तः स धर्म इति निश्चयः॥

तथाच मनुष्ये यदा मनुष्यत्वधर्माभावस्तदा तु स पशुसमानतां व्रजति। तमेव लक्ष्यीकृत्य भर्तृहरिणोक्तम्।

> धर्मो हि तेषामधिको विशेषो
> धर्मेण हीनाः पशुभिः समानाः।

अतो निश्चीयते सनातनधर्मोऽवश्यं सेवनीयः सर्वैः। धर्मज्ञानस्य पश्चाद्‌ प्रतीयते यद्धर्मसेवनं तीक्ष्णासिधारासमानमतस्तदर्थं संस्कृत-विद्यावश्यकता वश्यं भवति। साम्प्रतं पाश्चात्य-विद्यायाः प्रचारप्राबल्यं वर्ततेऽतस्तत्प्रभावेण सनातनधर्मसदाचारं प्रत्यप्रीतिर्भवति, स्वधर्मे यथाकथञ्चित् श्रद्धा वर्तते सापि विचली भवति। अतो धर्मस्य शुद्धरहस्यप्रदर्शिकायाः संस्कृतविद्यायाः प्रचारोऽवश्यमावश्यकः। धर्माचरणेन शान्तिसंतोषतितिक्षादिगुणानां विकासः प्रस्फुटो भवति, नान्यथा। अतः सनातनधर्मपरायणैः सर्वैर्भवितव्यम्। विशेषेण धर्माचार्या धर्मरक्षणार्थं कटिबद्धाः सन्तो विनयादिगुणैस्सह धर्मतात्पर्यं वेद-

यित्वा धर्ममार्गतत्परान् जनान् कुर्यु स्तदैव भारतस्य विजयध्वजः सदा सर्वत्राग्रेसरो भविष्यति । ईश्वराश्रयेण धर्मप्रवृत्या च सर्वाः प्रजा दुःखोन्मुक्ताः सत्यः परमं सुखं प्राप्स्यन्ति ।

---

## काव्योपदेशामृतप्रवर्षि शरद्वर्णनं भट्टिकाव्ये

[ ले०:—रामोदार शर्मा, आ० इ० प० छात्रः, जी० बी० बी० कालेज, बलिगांव वास्तव्यः ]

नाविदितं काव्य-कुञ्ज-कुसुमचयन परायणानां संस्कृतसाहित्यारविन्दमधुमत्त-मधुपानां विपश्चिताम् यन्निर्मितं भट्टिकाव्यं व्याकरणबोधकरणाय न तु साहित्य सेविनां रसिकधुरन्धराणां सहृदयानां मनोरञ्जनाय ।

मन्यन्ते केचित्पण्डित-प्रवराः कविता-कामिनी-प्रणयिनः यदस्तीदं काव्यं कर्कश-दुराप-दुर्बोध-शब्दसनाथम् । आसीद्भट्टिः केवलं वैयाकरणः । न तु सहृदयः काव्य-रच यिता । उदीरितं साहित्यदर्पणे 'वाक्यं रसात्मकं काव्यम्' । सर्वे नेश्वराः कवीत्युपाधिना स्वात्मानमलंकरणे। तेनैव सुकविना भाव्यम् यस्य हृद्देशे कल्पना-कालिन्दी कलकलनिनादेन प्रवहति । वर्त्तन्ते च यस्य काव्येऽउपमा-प्राचुर्य्यं शब्दमाधुर्य्यं, भाव वैशद्यं रसात्मकं वर्णनं करुणारसप्रवाहादयः । आसीदयं कविः व्याकरण-वैचित्र्यसंदर्शन एवाधिककृतोद्यमः न तु काव्यरसोत्पादने । परन्तु यत्र तत्र कल्पनोड्डानकरुणश्रृंगाररसास्तित्वं सम्प्राप्यते । द्वितीयसर्गस्थं शरद्वर्णनमधीत्य त्वस्माकम्मनांसि जायन्ते आसादितसम्मदानि साहित्य-सरिता मधुर-प्रवाह प्लावितानि । अत्र श्लोकेष्वस्माभिः प्राप्यते कवितावैशिष्ट्यं "कवयः किं न पश्यन्ति" इत्युक्तिः याथार्थ्यं भजन्त्यासाद्यते भट्टिपदे । वर्णितानि शरत्सम्भवानि विविधानि वस्तूनि काव्यरसरञ्जितानि । इयन्तु साधारणी वार्त्ता यच्छरदागमे वनस्पतयः सरांसि नद्यः, प्रहनक्षत्रादीनि च शोभाश्रियं भजन्ते। तडागेषु कमलदलानि विकसितानि जायन्ते । भ्रमराश्चापि तेषामुपरि इतस्तत उड्डीयमाना जायन्ते । प्रथमं कीदृशं वर्णनमिति विषयीक्रियतेऽत्र श्लोकश्चाप्युद्ध्रियते ।

तरंगसंगाच्चपलैः पलाशै-
ज्वालाश्रियं सातिशयं दधन्ति ।
सधूम-दीप्ताग्निरुचीनि रेजु-
स्ताम्रोत्पलान्याकुलषट्पदानि ।

उपमाऽत्र कीदृशी निभाल्यते। कमलानि कम्पितानि तरंगसहवासात्तडागे प्रतीयन्ते तानि सस्मितान्येव। कृष्णवर्णाः भ्रमराः तैस्सह विराजमानाः। रक्तकमलानां कृष्णभ्रमरैस्सह सहवासोऽतिशयां शोभामादधाति। अत एव भान्ति भ्रमराधिष्ठितरक्तकमलदलानि ज्वालायुक्ता धूमराजिसनाथा अग्नय इव। पुनश्च प्रदर्शयत्ययं श्लोकः कवि-काव्य-कौशलम्।

निशातुषारै र्नयनाम्बुकल्पैः
पत्रान्तपर्य्यागलदच्छबिन्दुः
उपारुरोदेव नदत्पतंगः
कुमुद्वतीं तीरतरु र्दिनादौ।

अनुभूतिरियं सुषमा-प्रकृति-पर्यवेक्षणस्य। स्थावराः कीदृशाः सहानुभूतिप्रदर्शका भवन्ति, इति निगदितमस्त्यस्मिन्श्लोके।

उषःकालः। समतीता रजनी। तडागजलं कुमुदिनीसनाथम्। कूजद्विहगः तीरतरुः। वृक्षपत्रस्थितहिमकणपतनम् कविरुत्प्रेक्षते यत्तीरतरुः चन्द्रविरहविधुरायाः कुमुदिन्या दयते अत एव रोदनं करोति उच्चस्वरेण।

यथा रोदनकाले जनानां जंगमानामश्रूणि पतन्ति नेत्रकोणेभ्यः। तथैव तत्पादपस्यापि पत्रकोणेभ्योऽश्रुवद्धिमकणाः पतन्ति अहो! किमिदम्? वृक्षस्यापि रोदनम्? चन्द्रः कुमुदिनीनायक इति लोकप्रसिद्धिः। अत एव यादृशी मलिना वैक्लव्यमुपगता जायते प्रोषितपतिका नायिका, कुमुदिन्यपि स्वप्राणवल्लभे दृष्टिपथव्यतीते सति तथैव मोहापन्ना संकुचिता वा भवति।

अतो रोदिति भृशं स्वरेण दयार्द्रचेताः सततपरहितपरायणः तीरतरुः अन्तेवासिनीं कुमुदिनीं दैन्याश्रितामवलोक्य।

अत्र वर्णितं कविवरेण यत्तरुरपि मनुष्यवद्दयाशीलो लब्धप्रज्ञश्च भवति। अत्र पादपपत्राणि नेत्रकोणैस्सहोपमीयन्ते। तुषारकणा अश्रुबिन्दुभिस्सहोपमीयन्ते। विहग-ध्वनिस्तु जन-रोदनस्वरसाम्यमुपैति।

पुनरपि ग्रामीणाः कृषकाः कीदृशं सरल-जीवनं नयन्ति इति वर्णितमस्त्यस्मिन्नधःश्लोके।

वियोगदुःखानुभवानभिज्ञैः
काले नृपांशं विहितं ददद्भिः।
आहार्य्यशोभारहितैरमायै-
रैक्षिष्ट पुंभिः प्रचितान् स गोष्ठान्॥

शरदि कृषकाः स्व स्व क्षेत्रे स्वेषां स्वेषां गा रक्षन्ति, तेषां निरीक्षणाय

पोषणाय चापि तत्रैव गोष्ठ-निर्म्माणं विधाय तिष्ठन्ति। ते कृषकास्तु सरलचित्ताः न तु कपट क्रीड़ा-दक्षाः। ते त्वनुसारिणः शास्त्रानुमोदितमार्गस्य। ते न राज-द्रोहिणः। ददति ते उचितं राज्यकरं काले आगते। ते न मण्डिताः सन्ति लैवेण्डर फुलेल-तैलादिभिः, यथेदानीन्तना युवका अङ्गरागीय-योगङ्कुर्वन्तो वर्त्तन्ते नक्तन्दिनम्। अद्य तु बहूनां नवजनानाङ्कालः स्वात्मनः सुन्दरीकरण एव गच्छति, परन्तु कुत आयाति सौन्दर्य्यं स्वास्थ्य-रिक्त-तुण्डेषु। सौन्दर्य्यन्तु व्यायामतो जायते। ते कृषकाः कुङ्कुमाद्युपयोग-रहिताः कृत्रिम शोभा विहीनाः किन्तु मनोहर वपुषः सुस्वास्थ्येन केवलम्। कीदृशो ग्राम-जीवनोत्कर्षः।

इत्थं वर्णितं शरत्सौन्दर्य्यं भट्टि-कविना। यदधीत्य तु निमज्जति पाठकानां चेत आनन्दोदधौ।

---

## पूर्वोत्तरमीमांसयोर्लेखकाः।

(ले०—कुरुक्षेत्रीयः पं० छज्जूराम शास्त्री विद्यासागरः)।

भगवतो वेदव्यासस्य शिष्येण जैमिनिमुनिना कर्मकाण्डस्य प्रचाराय पूर्वमीमांसादर्शनं प्रणीतम्। यत्र मन्त्रब्राह्मणात्मकेभ्यो वेदेभ्यः कर्माणि संकलितानि अत्र कर्मणैव जगत उत्पत्तिर्मोक्षश्चेति प्रतिपादितं जैमिनिना। तद्यथानुश्रूयते—

"पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन"

"रमणीयचरणा रमणीयां योनिमापद्येरन् कपूय-रणाः कपूयामिति।

"कर्मणा जायते नश्यति भयाभयसुखानीत्या द श्रुतिषु।

कर्मकाण्डस्यैव प्रचाराय रामायणभारतभागवतादीनि प्रवृत्तानि अस्य दर्शनस्य शाबरभाष्यं श्रीहर्षकृतस्य लिंगानुशासनकोषस्य व्याख्याता भट्ट-दीतस्वामिसूनुः श्रीशबरस्वामी विक्रमीयाष्टमशतके रचितवान्। शंकराचार्येण स्वीयभाष्ये शबरस्वामिनो नाम गृहीतमिति स्मर्तव्यम्। अयं हि शबरस्वामी वेदार्थस्याद्वितीयो ज्ञाता मन्यते। तद्यथानुश्रूयते—"सहस्रं शाखा अर्थतो वेद शबरः" इति। तदनन्तरं कर्मकाण्डस्यैव प्रचाराय जयमंगलग्रामवासी तैलंगभट्टवंशे श्वरपुत्रः चन्द्रगुणागर्भजः श्रीकुमारिलभट्टो विक्रमीयाष्टमशतकप्रारम्भे श्लोकवार्तिकं तन्त्रवार्तिकं च ग्रन्थं निर्मितवान्। अनेन जैनद्वारा लुप्तस्य वैदिक धर्मस्य पुनः प्राणप्रतिष्ठा कृता यदुच्यते—

"कुमारिलमृगेन्द्रेण हतेषु जिनहस्तिषु।

विप्रत्यूहमवर्धन्त श्रुतिशाखाः समन्ततः॥ इति॥

प्रभाकर-मण्डनमिश्र-मुरारिमिश्र-पार्थसारथि प्रभृतयोऽस्यैव महात्मनो भट्टपादस्य शिष्या आसन्निति शृणुमः। अनेन विक्रमीय-षष्ठशतक-वर्ति-कालिदास-महाकवेः—"सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इति पद्यार्धं स्वग्रन्थे उद्धृतं तस्माद्ये महात्मानः कालिदासं भोजसमकालीनं मन्यन्ते ते भ्रान्ताः। प्रभाकरमतस्य सारमुद्धृत्य शालिकनाथविदुषा 'प्रकरणपञ्चिका' विहिता। एवं मीमांसकशिरोमणिना मण्डनमिश्रेण 'विधिविवेकग्रन्थः'। पार्थसारथिना च "शास्त्रदीपिका" ग्रन्थो निर्ममे। ततो विक्रमीय-वस्वंकवसुवत्सरे वर्तमानेन सर्वतन्त्रस्वतन्त्रवाचस्पतिमिश्रेण 'तत्वविन्दुः' विक्रमीयचतुर्दशशतकमध्यवर्तिना माधवाचार्येण "जैमिनीयन्यायमाला" गागाभट्टेन विक्रमीयषोडशशतकमध्यभागे—"भाट्टचिन्तामणिः" आपदेवेन विक्रमीयसप्तदशशतकपूर्वभागे-"मीमांसान्यायप्रकाशः" लौगाक्षिभास्करेण विक्रमीयसप्तदशशतकमध्यभागे—"मीमांसार्थसंग्रहः" खण्डदेवेन विक्रमीयसप्तदशशतकोत्तरभागे—"भाट्टदीपिका" भट्टशंकरेण-"मीमांसासारसंग्रहः" निर्ममे। पूर्वमीमांसाऽनीश्वरवादिनी मन्यते। अत एव श्लोकवार्तिकादौ प्रक्षेपदं जगत्कर्तुरीश्वरस्य खण्डनमुपलभ्यते। परन्त्वसावीश्वरानंगीकारः पूर्वमीमांसकैः प्रौढ़िवादमुद्रयाऽवतारितो न खलु विवक्षितोऽस्ति। कथमन्यथा सर्वे मीमांसाग्रन्थकाराः-स्वस्वग्रन्थेषु ईश्वरविषयकं मंगलमाचरितवन्तो यदीश्वरवादिनस्ते न स्युः।

"विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे॥

इतिश्लोकवार्तिके भट्टकुमारिलः।

"वासुदेवं रमाकान्तं नत्वा लौगाक्षिभास्करः"।

इत्यर्थसंग्रहे लौगाक्षिभास्करः।

"यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम्।
प्राप्यते तमहं वन्दे गोविन्दं भक्तवत्सलम्॥

इति न्यायप्रकाशे आपदेवः।

'भावं जैमिनिर्विकल्पामननादित्यादि ब्रह्मसूत्रेषु जैमिनि-मतस्मरणात्प्रथमं जैमिनिना पूर्वमीमांसा रचिता तदुत्तरं भगवता वेदव्यासेनोत्तरमीमांसा (वेदान्तदर्शनं) इति सर्वानुमतः पन्थाः। वेदेभ्यो ब्रह्मण उपासनाज्ञाने उपादाय जीवब्रह्मैकत्वप्रतिपादनार्थमयं प्रयासः। सर्वेषां दर्शनानां मूलसूत्रमुपनिषत्सूपलभ्यते यत्र तत्र। पूर्वोत्तरमीमांसयोः समानतन्त्रत्वं मन्यते सर्वैरपि। तद्यथा विज्ञानभिक्षुराह" जैमिनीये च वैयासे विरुद्धांशो न कश्चन।

श्रुत्या वेदार्थविज्ञाने श्रुतिपारंगतौ हि तौ" ।

अत एवैतयोरुपरि नन्दराज्योत्पन्नेनोपवर्षपण्डितेन—

काचित्समुदिता वृत्तिर्निरमीयतेति श्रृणुमः । उत्तरमीमांसायाः वेदान्तदर्शनस्योपरि सर्व प्रथमं शङ्करावतारेण श्रीशङ्कराचार्येण शारीरक भाष्यं निर्मितं यत्र—

'ब्रह्मसत्यं जगन्मिथ्या जीवो ब्रह्मैव नापर' इति सम्यक्साधितम् । केनचित्शंकराचार्यशिष्येण शारीरकभाष्यसारबोधिनी अद्वैतमञ्जरीनाम्नी वेदान्तसूत्रवृत्तिरपि तस्मिन् समये अतिहृदयंगमा लिखिता । ततो रामानुजभाष्यं, माध्वभाष्यं, निम्बार्क भाष्यं, अणुभाष्यमिति वैष्णवसाम्प्रदायिकं भाष्यचतुष्टयं जातम् । नीलकंठस्य शैवभाष्यं च षष्ठम् । एतेषां षण्णां भाष्यकाराणां मतस्य सारं मया बहुविस्तरेण 'षड्दर्शनपरिचये' ग्रन्थे लिखितस्तत्तत्रैव करोहत्य निरीक्षणीयम् । शारीरकभाष्यस्य चतस्रो व्याख्या अतितरां प्रसिद्धाः सन्ति । तत्र शंकराचार्यस्यैव शिष्यस्य पद्मपादाचार्यस्य 'पंचपादिका' प्रथमा । तोटकाचार्यापरनाम्न आनन्दगिरे "न्यायनिर्णयाख्या" द्वितीया । सर्वतन्त्रस्वतन्त्रवाचस्पतिमिश्रस्य "भामत्याख्या" तृतीया विक्रमीयषोड़शशतक-मध्यवर्तिनो गोविन्दानन्दस्य— 'रत्नप्रभाख्या' चतुर्थी । शारीरकभाष्यमुपजीव्य मण्डनमिश्रशिष्येण सर्वज्ञात्ममुनिना हृद्यैः पद्यैः "संक्षेपशारीरक" नामा ग्रन्थो व्यरचि । यस्योपरि मधुसूदनस्वामिव्याख्या जागर्ति । तदनन्तरम् कवितार्किक-श्रीहर्षमिश्रेण प्रतिवादिविजयार्थं "खाद्यखण्डनं" निरमायि । यद्विषये तेनोक्तम्—

धीरा यथोक्तमपि कीरवदेतदुक्त्वा ।
लोकेषु दिग्विजय कौतुकमातनुध्वम्' ।

यस्य समयो विक्रमीयैकादशशतकम् भागवतटीका-श्रीधरीकर्तुः श्रीधरस्वामिनो गुरुणा चित्सुखाचार्येण विक्रमीय-त्रयोदशशतके 'चित्सुखी' ग्रन्थो रचितो यत्र न्यायमतखण्डनादिकं खाद्यखण्डनमुपजीव्यैव कृतम् । ततो विद्यारण्यापरनाम्ना माधवाचार्येण "पंचदशी" ग्रन्थो विहितो यस्य समयो विक्रमीय चतुर्दशशतकम् । तदनु मधुसूदनस्वामिना विक्रमीय षोडशशतके 'अद्वैतसिद्धि' ग्रन्थो रचितः । यद्विषये तेनोक्तम्—

"अबाधेन मुनिना मधुसूदनेन संगृह्य शास्त्रनिचयं रचितातियत्नात् बोधाय वादिविजयाय च सत्वराणामद्वैतसिद्धिरियमस्तुमुदे बुधानाम् ।

एवं सदानन्द व्यासेन विक्रमीयषोडशशतकपूर्वार्धभागे "वेदान्तसारः" संगृहीतः । प्रकाशानन्दस्वामिना विक्रमीयषोडशशतकमध्यभागे—'वेदान्तमुक्तावली' रचिता । धर्मराजाध्वरीन्द्रेण विक्रमीयषोडशशतकस्योत्तरभागे—'वेदान्तपरिभाषा'

विहिता। उत्तरमीमांसायां ज्ञानकाण्डस्य प्राधान्यं रक्षितम्। तद्यथानुश्रूयते 'ज्ञानादेवतु कैवल्यम्' 'ऋतेज्ञानान्न मुक्ति' रित्यादि। वयन्तु ब्रूमः—

"उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथैव ज्ञान-कर्मभ्यां प्राप्यते परमं पदम्। अत एव द्वयोरपिमीमांसयोरधिकारिभेदात्सार्थक्यमिति शम्।

---

# ❀ श्रीराम सुहृद् निषादराजः ❀

[ ले० श्रीरामोपनामा लक्ष्मीनारायण द्विवेदी साहित्यशास्त्री ]

—— o —— ——

इदं किल नाविदितमस्ति प्रेक्षावतां यच्छ्रीरामसखं निषादाधिपतिं गुहं चण्डालं मृगघातिनं च मन्यन्ते सचक्षुषोऽपि साम्प्रतम्। तत् किमयं वस्तुतश्चण्डालो मृगघात्येव वाऽऽसीत्? जीवारामोपाध्यायेनापि स्वनिर्मितायां वाल्मीकीय रामायणस्यादिसर्गस्य टीकायां चण्डालत्वेन लिखितोऽयम्। अथान्येनाप्याचार्येण "निषादो मृगघाती स्याद्" इति वैजयन्ती प्रमाणेन मृगघातित्वेनोक्तः।

अत्रेदं वक्तव्यम्—द्वेधा वर्ण-संकरजातयः स्मृतिषूक्ताः। आनुलोम्यात् प्रातिलोम्याच्च। तत्र वर्णानुलोम्येन जात्यानुलोम्येन संकीर्णानुलोम्येन चोत्कृष्ट जातीयपुरुषादपकृष्टजातीय-नारीषु जाता अनुलोमजाः, तद्विरोधेन च प्रतिलोमजाः। तत्र ये वर्णानुलोम्येन जातास्तेषामेकतमो निषादः। अयं पारशवापर पर्याय उच्यते। तथाहि मनुः—

> अनन्तरासु जातानां विधिरेष सनातनः।
> द्वयेकान्तरासु जातानां धार्म्यं विद्यादिमं विधिम्॥ १० ।७॥
> ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते।
> निषादः शूद्र कन्यायां यः पारशव उच्यते॥ १० ।८॥

ततोऽयं ब्राह्मणपुरुषेणोढायां शूद्रकन्यायां जातो निषादः। ऊढत्वं च याज्ञवल्क्येन स्पष्टीकृतम्, तथाहिः—

> विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्।
> अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा॥
> वैश्या शूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।
> वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः॥ इति

अध्यायः १ श्लो० ९१, ९२.

विन्नासूढासु—इति श्री विज्ञानेश्वरः । वशिष्ठ एवं शूद्रवर्णमाहात्म्याद्देशेऽध्याये:—

एकान्तर द्व्यन्तर त्र्यन्तरानुजाता ब्राह्मण क्षत्रिय वैश्यै रवच्छिन्ना अम्बष्ठा निषादा भवन्ति । शूद्रायां पारशवः पारयन्नेव जीवन्नेव शवो भवतीत्याहुः, शव इति मृताख्या "एतच्छावं यच्छूद्रस्तस्माच्छूद्र समीपे तु नाध्येतव्यम्" इति ।

एतस्याजीविकामाह मनुः "मत्स्य घातो निषादानाम्" इति दशमेऽध्यायेऽष्ट चत्वारिंशे श्लोके ।

अथायं निषादो नाम कैवर्तानां नौकर्मजीविजाति-विशेषाणां जनकः । तथाह मनुरत्रैव चतुस्त्रिंशेः—

निषादो मार्गवं सूते दासं नौकर्म जीविनम्

कैवर्तमिति यं प्राहुरार्यावर्त-निवासिनः ॥ इति ॥

सोऽयं दासः कैवर्तापर पर्याय एव धीवरत्वेन लोके स्मर्यते । यः सर्वेषां वर्णानां गृहेषु जलभरणकर्म सम्पादयति । पात्र संमार्जनादि सेवाकर्म करोति । सर्वथा पात्रे समितश्चेति तदुत्पादकस्य निषादस्य चण्डालत्वेन पात्रे निरवसित-त्वात् श्रीरामस्य भगवतो मर्यादा पालकस्य कथं सखित्वं स्यात् ।

नन्वस्ति चण्डाल जातिर्निषादः ? 'निषाद श्वपचौ, इत्यमरोक्तेः, 'निषादी-श्वपच स्वरौ-' इति त्रिकाण्ड शेषवचनात्, इति चेत् सत्यम्, इतर एवैष श्वप चाख्यो निषादः । यश्च पारशवाख्यो निषादः सोऽप्यन्यः । तदुक्तं मेदिनीकारेण-"निषादः स्वर "भेदे स्याच्चण्डाले धीवरान्तरे, इति ।

आस्तां तावच्चण्डालोऽपि राम सख इति माऽऽग्रहः कारि । रामायण-स्थ प्रकरण विरोधात् । निषादराजस्य गुहस्य निघ्नत्वे शतशो नौकर्मजीविन आसन् ते च सर्वेऽस्य सजातीया आसन्

श्रीमद्रामायणेऽमी पर्यायत्वेन 'दाश' इत्युक्त । इत्यनुपदं दर्शयिष्यते दाशः, कैवर्तः, धीवर इति नामान्तराणि धीवर जातेः । तथाहि अयोध्या काण्डे एकोन नवति

* श्रीसरस्वत्यै नमः *

# सूर्योदयः ।

## ( स्वामि-दयानन्दस्मृत्यङ्कः )

एकादशे वर्षे } आश्विन-कार्तिक-मार्गशीर्ष-पूर्णिमाः सं० १९९२ { ४-५-६ सं०

## सम्पादकीया अभिप्रायाः ।

### ब्रह्मभावमुपेताः श्रीस्वामिदयानन्दमहाराजाः ।

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥

पाठक महानुभावाः !

विदितमेव श्रीमतां यद् ब्रह्मीभूताः स्वामिदयानन्दमहोदया योगयुक्ताः संन्यासिन आसन् । येषामूर्ध्वगतिः स्वाभाविकी । स्वामिपादैरनवरतं ३०-३२ त्रिंशद्द्वात्रिंशद्वर्षपर्यन्तं धर्म-जाति-स्वदेशसेवां निरालसभावेन विधाय प्रायः ५५ पञ्चपञ्चाशद्-वर्षायुषि श्रीशिवपुर्यां ( काश्यां ) [स्वीयाऽध्यात्मगुरुचरणारविन्द-योरन्तिके श्रावण्याममायां मङ्गलवारे नेत्राङ्काङ्कचन्द्रे वैक्रमेऽब्दे ( ३० जुलाई १९३५ ई०) प्रातः १० वादनसमये प्राप्तं स्वस्वरूपेऽवस्थानम् । यद्यपि प्राणिमात्रस्येयं "जातस्य हि ध्रुवो मृत्युः" स्वाभाविकी गतिः । तथापि प्रोक्तस्वामिसदृशानां कल्याणकारिणां महापुरुषाणामितो लोकान्तरगमनेन देश-जाति-धर्म विषयेषु याऽसामान्या क्षतिर्भवति सा खल्वपूरणीयास्ति ! श्रीभारतधर्म-महामण्डलस्य तु सर्वांशतस्ते केन्द्रस्वरूपा आसन् । अतः सम्प्रति तद्वियोगे श्रीभारतधर्ममहामण्डलः कीदृशमभावमनुभवति तत्तु स एव जानाति, नास्य वर्णनं शब्दैः कर्तुं शक्यते। पुनश्च सनातनधर्मावलम्बिन एवानुभवन्ति कीदृशी क्षतिस्तेषां कार्यक्षेत्रे वर्तते । मधुर-

सारगर्भवक्तृतया पुस्तकपुस्तिकारचनया तथा स्वदेशस्य बहुषु धर्मकार्येषु सहायताद्वारा तै र्यैः सत्पुरुषार्थः सम्पादितः स कुत्रेदानीं लब्धुं शक्यः ?

श्रीस्वामि-महोदया जन्मना बंगजातीया उत्तमब्राह्मणकुलजा आसन्। तेषां पितृदेवा अध्यापका आसन्। स्वपितृशिक्षयैकविंशतितमे वर्षे बी० ए० परीक्षायामुत्तीर्णाः। पूर्वजन्मसञ्चितसुकृतानुसारेणाऽध्ययनानन्तरमेव तेषां वैराग्यं प्रादुर्बभूव। अतस्तेषां निवृत्तिमार्गेऽभिरुचिः संजाता। ततस्ते सद्गुरोरन्वेषणं चक्रुः। स्वमित्रद्वारा श्रीभारतधर्ममहामण्डलस्याऽधिष्ठातॄणां श्रीमत्पूज्यपादानां श्री १०८ स्वामिज्ञानानन्दमहोदयानां परिचयं प्राप्य शीघ्रं काशीं तद्दर्शनार्थं समाययुः। तेषु देशसेवाभावस्तु प्रागेव प्रादुर्भूतः। तदनुसारं शीघ्रमेव स्वदेश्यान्दोलनकार्यभारो गृहीतः। किन्तु स्वगुरोरुपदेशात्तैर्ज्ञातं यत् स्वधर्मरक्षां विना स्वजातेः स्वदेशस्योद्धारो भवितुं नार्हति। तदैव स्वमनसि स्वधर्मसेवा कर्तव्येति निर्णीतमेवं यावज्जीवनं तामेव धर्मसेवामकुर्वन्। श्रीगुरुदेवैस्तु प्रथमदर्शनसमये ते पाणिग्रहणसंस्कारं कर्तुमुपदिष्टाः। परन्तु तत्र "प्रवृत्तिं कर्तुमनाः" अयन्नास्तीति ज्ञात्वा ब्रह्मचर्यदशायामेव संन्यासदीक्षा दत्ता। ततः प्रभृति विनश्वरशरीरपरित्यागपर्यन्तं कायेन वचसा मनसा च तैः सम्यग्ब्रह्मचर्यमरक्षि।

श्रीस्वामिपादेषु अहङ्काराङ्कुरो नोद्भवेदेतदर्थं श्रीगुरुदेवैस्ते माधुकरीं भिक्षां कर्तुमाज्ञापिताः। तदाचरणं कुर्वद्भिस्तैः कतिपयवर्षपर्यन्तं तीर्थेषु भ्रमणमकारि। यतस्ते क्रमेण नित्यानित्यवस्तुविवेकेहामुत्रफलभोगविरागशमदमादिसाधनसम्पन्नाः सञ्जाता मुमुक्षुत्वं तु तेषु प्रागेवाऽऽसीत्। इत्थमधिकारिणो भूत्वा ते श्रीभारतधर्ममहामण्डल-महायज्ञस्य प्रथमं ऋत्विक्स्थानं तदनन्तरमध्वर्युपदमलङ्कृतवन्तः। एतस्मिन्समये तैर्यथाविधिसांख्ययोग-कर्मो-पासना-ज्ञानमीमांसोपनिषद्-गीताद्यनेकग्रन्थाःश्रीगुरुदेवसकाशात्सम्यगधीताः। यद्यपि संन्यासग्रहणकाले तेषां बी० ए० श्रेण्यामधिगतं संस्कृतस्य परिमितं ज्ञानमासीत्। किंतु भारतधर्ममहामण्डले सम्प्रविश्य संस्कृत-भाषायाम् एतादृशीं प्रवीणतां ते प्राप्तवन्तो यदनेकहोरायावद् धाराप्रवाहेण संस्कृतभाषायामेव व्याख्यानमदद्ुः। एवं संस्कृतभाषायां लेखा अपि तैर्लिखिताः। विना राष्ट्रभाषा (हिन्दी) ज्ञानं राष्ट्रसेवा दुर्लभेति मत्वाऽल्पेनैव समयेन तस्यामप्येतादृशं ज्ञानं तैः सम्पादितं, यत् तेषां समये सनातनधर्मस्योपरि न कोऽपि राष्ट्र भाषायां व्याख्याता तेषां समकक्ष आसीत्। धर्मव्याख्यातृषु तेऽग्रगण्या अभवन्, यतो हिन्दीभाषाभाषिप्रान्तेषु सर्वत्रैवं भावो जनानां हृदयेषु समुत्पन्नो यत् स्वामिपादानामागमनानन्तरमेव सभायाः कार्यमारम्भणीयमिति। तेषां कार्यक्रमानुसारेणैव सर्वत्र महोत्सवानां तिथयो निर्धारिता

अभूवन् । केषाञ्चिदन्तर्दृष्टिसम्पन्नानामियमपि धारणाऽऽसीत् यद् "आर्यसमाज-प्रवर्तकाः श्रीस्वामिदयानन्द सरस्वती महाभागाः तद्रूपेण गतावतारस्य त्रुटिनिवारणार्थमवतीर्णा" इति ।

बंगाल—विहार—सिंध—पञ्जाब—संयुक्तप्रान्त—मध्यप्रान्त—मध्यभारत-राजपूताना—गुजरात—महाराष्ट्रादिप्रान्तेषु परिभ्रम्य सर्वत्र प्रान्तीयमण्डलानि विरचय्यानेका भारतधर्ममहामण्डल-शाखाः संस्थापिताः । श्रीमहामण्डलद्वारा संस्थापितोपदेशकमहाविद्यालये श्रीस्वामिपादैर्व्याख्यानशिक्षा समधिगता, तस्या उन्नतिरपि तैरकारि ! तस्मिन्विद्यालये तेषां नेतृत्वेऽनेके विद्वांसो धर्मवक्तारश्च समभवन्, ये खलु सम्प्रति सनातनधर्मक्षेत्रे धर्मोपदेशार्थं प्रचरन्ति धर्मप्रचारं च कुर्वन्ति । दीर्घकालपर्य्यन्तं श्रीस्वामिपादाः तस्य विद्यालयस्याऽध्यक्ष-( Principal ) कार्यं सञ्चालितवन्तः ।

स्वामिपादैर्यथा वाणीद्वारा स्वधर्मजाति-देशसेवा सम्पादिता तथैव लेखनीद्वाराऽप्याश्चर्योत्पादिका सेवा कृता । ते सिद्धहस्तलेखका आसन् । कलायामस्यामपि श्रीगुरुदेवशिक्षाद्वारैव ते कुशलाः संजाताः । यस्य कस्यचिल्लेखस्याभ्यर्थनायामाप्तायामवश्यं लेखं दत्तवन्तः । न कोऽपि निराशो भूत्वा निर्गतः । ते हि स्वलेखन्याः कदापि कृपणतां न दर्शितवन्तः । एकदा श्रीगुरुदेवैराज्ञापिताः, यदेको धार्मिको विश्वकोषो निर्मातव्यो विद्यते, तदा तदाज्ञानुसारेण तैः "धर्मकल्पद्रुम" नामा ग्रन्थो व्यरचि । तत्राधिकांशस्तु तेषामेव, परन्तु मौलिको भागस्तु कियान् श्रीगुरुदेवाज्ञया लिखितो विद्यते । दर्शनभाष्यरचनासमये श्रीगुरुदेवानां लेखकरूपेण तैः साहाय्यमकारि । संन्यासाश्रमरहस्यस्यैवं प्रेषमन्त्रोपरि टीकाकरणेऽपि तैः साहाय्यमकारि । श्रीगुरुदेवाऽऽज्ञानुसारेण सम्प्रति संन्यासधर्म पद्धतिं लिखितुं ते समारब्धवन्तः । किन्तु तेषां पञ्च प्राणा महाप्राणे विलीना इति स ग्रन्थोऽपूर्णो विद्यते । किंत्वाशास्महे स शीघ्रमेवावशिष्टांशेन सह पूर्णीभूय संन्यासगीतया सह धार्मिक-जनताहृदयं मोदयिष्यते ।

हिन्दी-बंगला-आंग्ल भाषास्वपि तै र्बहवो ग्रन्था विरचिता ये प्रकाशिताः सर्वमान्या विद्यन्ते !

श्रीस्वामिपादैः संस्थापितास्वनेकसंस्थासु कर्णपुरस्य ( कानपुर ) सनातनधर्मकालेजनाम्नी संस्था विशिष्टतयोल्लेखनीया विद्यते । कर्णपुरस्य सनातनधर्मकामर्सकालेजसंस्था सनातनधर्मिणां बहुमूल्या सम्पत्तिर्वर्तते । श्रीमतां भारतभूषणधर्मालङ्काराणां भारतविख्यातप्राड्विवाकानां ( एडवोकेट ) एम० एल० सी० संयुक्त-प्रान्तीय-परिषत् सदस्यानां रायबहादुर श्रीविक्रमाजीतसिंहमहोदयानां महता प्रयासेन संप्रति कर्णपुरनगरं सनातनधर्मावलम्बिनां प्रधानकार्य्यक्षेत्रं सम्पन्नं

विद्यते । धर्मसभा-प्रान्तीयमण्डलातिरिक्त-कालेजद्वारा तथा हाईस्कूलद्वारा तत्रत्यं विद्योन्नतिकार्यं सनातनधर्मकालेजसंस्थयैकलघुविश्वविद्यालस्य स्वरूपं धृतमस्तीति दृश्यते ।

तत्र सनातनधर्मशिक्षाया विशेषप्रबन्धो विद्यते । तस्मिन्नेव नगरे श्रीस्वामिपादैः संस्थापितः श्रीमत्या भागीरथ्याः तीरे एको योगाश्रमोऽप्यस्ति । यत्र तैर्नियतरूपेण धर्मशिक्षाऽदायि । कर्णपुरधर्मकेन्द्रव्यवस्थापने श्रीस्वामिपादानामेव परमपुरुषार्थ आसीत् । द्वितीय उल्लेखनीयविषयस्तु तेषां मेरठनगरधर्मसभाया उन्नतिकरणं वर्तते । तत्र चिकित्सालयसंस्थापनं ततः समस्तप्रान्ते विना मूल्येनौषधवितरणं तन्निमित्तं कार्यकर्तॄणां निर्वाचनमित्यादि सर्वमेव तेषां सुकृत-कर्मयोगफलमिति । अधुनैव तैः श्रीकाशीपुर्यां चौकाघट्टे शिवमन्दिरस्य जी-र्णोद्धार एवं विन्ध्याचले स्वपरमगुरूणामाश्रमस्य संस्कारोऽकारि । आर्यजाते रेकमात्रमुद्रणकार्यालयस्य ( पब्लिशिंग हाउस ) भारतधर्मसिण्डिकेटलिमिटेड-संस्थाया इमे प्रतिष्ठातार आसन् । एवं शास्त्रप्रकाशनसमितिस्तु तेषामेव सत्कृतिफलमस्ति । तत्र स्वार्थिकर्मचारिणामाक्रमणतो या एका धर्मविघातिनी विपत्तिः सम्पतिताऽस्ति । सम्प्रति तत्संस्थायास्तद्विपत्तितो रक्षणार्थं तै ब्रह्मभवनात्-प्राक् 'सत्यरक्षकफण्ड' इतिनाम्नैकः कोषः स्थापितस्तत्र सर्वतः प्रथमं १०००) एकसहस्रमुद्रासाहाय्यं दत्वाऽन्यान्सहायकानपि प्रोत्साहितवन्तः । इत्थं ते सर्वत्र धर्मकार्येषु अग्रेसराः सञ्जाताः । निःशङ्कं ते निःसङ्गसंन्यासिन आसन् । त्यागे एव तेषामादर आसीत् । दारैषणा-पुत्रैषणा-वित्तैषणालेशोऽपि तेषु नाऽऽसीत् । अवस्था धर्मानुसारं या लोकसंग्रहार्थं लोकैषणाऽऽसीत् साऽप्यन्तिमकालात्प्राग्विलीना ।

श्रीस्वामिपादा मतभेदरहिता नेतारः सनातनधर्मस्याऽसन् । एवं सर्वमत-मतान्तरेषूदारभावा अप्यासन् । श्रीमद्भिःस्वर्गस्थैःस्वामिश्रद्धानन्दमहोदयैः सार्धं यादृशी लोकसेवा श्रीस्वामिपादैः कृता, तादृश्येव श्रीगान्धीमहोदयानां सभा-पतित्वे महामनसां श्रीमत्पण्डितमदनमोहनमालवीयमहोदयानामध्यक्षतायां, श्रीमतां डा० श्रीभगवानदासमहोदयानां सभानेतृत्वे तथा राजसत्ताद्वारा नियुक्तसंस्थासु लोकसेवा सम्पादिता । स्वधर्मारूढाः सन्तोऽपि सदैवाऽचिन्तयन् कथमस्माकं सनातनधर्मस्य रक्षा तथाऽऽर्य्यजातिश्चिरञ्जीविनी स्यात् । साम्प्रतं सनातनधर्मणा-मेवमार्य्यावर्तस्य च दौर्भाग्येनैतेषामविनाशिविग्रहोत्पादकसंस्काराणामवसानं सञ्जातम् । प्रायः द्वित्रिवर्षतस्तेषां वपुर्हृदयशूलरोगेणाऽऽक्रान्तमासीत् । देहावसान-पर्य्यन्तं प्रणवजपस्तैः सततमकारि । रुग्णावस्थायामपि न कदापि धर्मसंग्रामात्प्रत्या-वृत्ताः । विकरालकलिकालेऽस्मिन्नवश्यमशक्यं महात्मनामेतादृशानामुद्भवनम् ।

वयं सनातनधर्मावलम्बिनस्सज्जनान्सानुनयं निवेदयामो यत्ते श्रीस्वामिपादानां सिद्धान्तमनुसृत्याऽवशिष्टं तदीयं धार्मिकाध्यात्मिकं संस्कृतविश्वविद्यालयादिकार्यं पूर्णतां नयेयुरिति।

श्रीस्वामिपादानां देहावसाने श्रीभारतधर्ममहामण्डलेन किं किमकारि, तस्य संक्षेपेण वर्णनमित्थं विद्यते।

तेषां जीवने श्रुत्युक्तयोर्वैराग्यसंन्यासज्ञानसंन्यासयोर्द्वयोर्लक्षणं प्राप्यते स्म। वेदोक्तसंन्यासदीक्षानुसारेण तैः क्रमेण प्रथमावस्थायां कुटीचकस्य द्वितीयायां च बहूदकसंन्यासस्य ग्रहणं परिपालनं च कृतम्। ते ज्ञानवैराग्य-निष्णाता आसन्। गृहस्थाश्रमे नाममात्रतोऽपि सम्बन्धस्तेषां नासीत्। गुरु-मुखाज्ज्ञानादर्शनशास्त्राणामुपनिषदाञ्चाध्ययनमकुर्वन्। प्रेषमन्त्रस्य तात्पर्यज्ञानार्थं ते श्रीगुरुदेवस्य एकासाधारणमानचित्रलेखने सहायकाः सञ्जाताः। चित्रमिदं भारतधर्ममहामण्डलस्थपुस्तकालये वर्तते। मुमुक्षवो जनाः संन्यासिनश्च तच्चित्र-मवलोक्याधीत्य च कृतकार्या भविष्यन्ति। बहूदकधर्मानुसारं तेषामन्त्येष्टिक्रिया (गंगाप्रवाहादिसमस्तक्रिया) सुसम्पादिता। शरीरत्यागानन्तरं द्वितीयदिनतो द्वादशदिवसं यावत् अनेकब्राह्मणद्वारा पृथक् पृथग् ऋग्वेद-यजुर्वेद-दशोपनिषद्-भगवद्गीता-संन्यासगीता-श्रीस्वामिपादरचितभाष्ययुक्तभगवद्गीतानां पारायण-मेवं रात्रौ श्रीमद्भागवतमहापुराणस्य पारायणं समापादि। प्रथमदिनतो दशम-दिवसपर्यन्तं प्रतिदिनं संन्यासपद्धत्यनुसारेण विदुषा गृहस्थशिष्येण तर्पणमप्य-कारि। एकादशेऽहनि तेनैव गृहस्थशिष्येण पार्वणश्राद्धमप्यकारि। तदपि संन्यास-पद्धत्यनुसारेणैव संजातम्। द्वयोर्वासरयोर्विद्वांसो ब्राह्मणा भुक्तवन्तः। तेषु सर्व-वेदीया ब्राह्मणा आसन्। द्वादशे दिवसे ब्राह्मणद्वारा नारायणबलिदानानन्तरं त्रयोदशानां यतीनामाराधनं कृत्वा तेभ्यो भिक्षा दत्ताः। त्रयोदशदिवसेऽपि तथा विद्वद्ब्राह्मणै भोजनं कृतम्। चतुर्दशेऽह्नि श्रावणमासस्य सोमवारपतनात्प-ञ्चदशदिने पञ्चदश-द्राविड-विद्वद्ब्राह्मणानां भोजनमभूत्। इत्थं श्रीभारतधर्म-महामण्डलस्योद्योगेन श्रीकाशीविश्वनाथान्नपूर्णादानभाण्डारस्य व्ययेन तथा तेषां पूज्यपादगुरोरपारकृपया च श्रीमहामण्डलभवने श्रीमहामण्डलयज्ञमण्डपे सुप्रसिद्धसंन्यासिनां विद्वद्ब्राह्मणानां च परामर्शानुरूपं सर्वमपि पुण्यकार्यं सुसम्पन्नमिति।

# विनम्रनिवेदनम्।

अयि पाठकप्रवराः !

भाद्रमासाङ्के प्रकाशित सूचनया श्रीमतां ज्ञातमेवास्ति यदस्मिन् स्मृत्यङ्के सर्वश्रेणिस्थानां साधुमहात्मनामुपकारधिया तदीयधार्मिकाभ्युदयसंवर्द्धनसमीहया तथा चतुर्थाश्रमस्थानां सर्वेषामेव साम्प्रदायिकानां संन्यासिनामाध्यात्मिकोन्नतिभावनया चैको निबन्धग्रन्थोऽपरश्च पद्धतिग्रन्थः सम्पूर्णः प्रकाशितो भविष्यतीति विचारोऽस्माकमासीत्। ग्रन्थरत्नद्वयञ्चेदं सर्वविध-संन्यासिसमीक्षणीयं संन्यासाश्रमस्थ-कुटीचक-बहूदक-हंस-परमहंसाख्य-चतुर्विधसंन्यासिनां पार्थक्येन विस्तरशोऽनुष्ठेयविधानशालि, मुमुक्षुजनोपकारि, मोक्षाधायक-कर्तव्यविधायकं विद्यते। यद्धि चतुर्थाश्रमीयमावश्यकं सर्वविधशास्त्रीयं विधानं यत्र यत्र युगे युगे श्रुतिस्मृतिपुराणेतिहासाङ्गोपाङ्गग्रन्थेषु भिन्नभिन्नस्थलेषु विस्तृतं विच्छिन्नं विद्यते, तदेवैकत्र सङ्कलितं कृत्वा सर्वजनसौलभ्यं विधाय सरलतया क्रमोपसम्पन्नमिह ग्रन्थरत्नद्वये निबद्धमस्तीति संक्षिप्तोऽस्य परिचयः। यो हि ग्रन्थरत्नयोश्चानयोरधस्तान्निबद्धाभिर्विषयक्रमसूचिकाभिः स्फुटमेव भविष्यतीति।

सम्प्रति "श्रेयांसि बहुविघ्नानि" इति प्राचीनाभाणकनियमतो दैववशादियमस्माकं समीहा सर्वांशतः सम्पूर्णा न जाता, यदस्मिन्नेव स्मृत्यङ्के वयं सम्पूर्णमेवेदं ग्रन्थरत्नद्वयं प्रकाशयितुमसमर्था जाता इति। परन्तु सर्वथा सोत्साहाः सत्सङ्कल्पसन्नद्धा वयं परमेश्वरं प्रार्थयमाना आशास्महे यदग्रेऽन्यस्मिन्नङ्केऽवश्यमेतदीयं परिशिष्टमंशं प्रकाशयितुं साधनसम्पत्तिसम्पन्नं स्ववसरमस्माकं स प्रदास्यतीति।

अस्तु, तदिदानीं निबन्धग्रन्थात्मिकायाः संन्यासगीताया अर्धाधिको भागो यावानद्यावधि मुद्रितो विद्यते, संन्यासधर्मपद्धतेरपि भागोऽद्य यावानस्माकमग्रे मुद्रितस्तिष्ठति तावद्भागविशिष्टाभ्यामेवाभ्यां ग्रन्थरत्नद्वयाभ्यां विलम्बभयाद् वयं पाठकप्रवरान् संसेवितुमुपतिष्ठामहे। आशास्महे चावश्यमेव ते महोदया अस्माननुग्रहीष्यन्तीति। परिशिष्टांशश्च त्वरितमेव प्रकाशितो भूत्वा सर्वेषामेवोपाश्रये द्रुतमेव गमिष्यति। येषां पार्श्वे केनापि कारणेन नोपस्थितं स्याचै र्ग्राहकानुग्राहकैः सहायकैः संरक्षकमहोदयैरन्यैश्च सर्वैरेव तदिच्छुकैः साधुमहात्मभिरिह कार्य्यालये पत्रं सम्प्रेष्य विना मूल्यमेव सोऽङ्को लब्धुं शक्यत इति विनम्रं विज्ञापयामः।

संन्यासगीतायाञ्च द्वादश अध्यायाः सन्ति येषाञ्च विषयक्रमसूची निम्नस्था विद्यते।

## संन्यासगीता।

(१) महर्षि-समागमः। (२) साधारण-धर्मनिरूपणम्। (३) दान-तपोधर्म-निरूपणम्। (४) कर्मोपासनाज्ञाननिरूपणम्। (५) कालधर्म-निरूपणम्। (६) संन्यास-धर्मनिरूपणम्। (७) कुटीचक-धर्म-निरूपणम्। (८) बहूदक-धर्म-निरूपणम्। (९) हंस-धर्म-निरूपणम्। (१०) परमहंस-धर्म-निरूपणम्। (११) जीवन्मुक्त-विज्ञान-निरूपणम्। (१२) आत्मस्वरूप-निरूपणम्। इति।

संन्यासधर्मपद्धतौ च बहवोऽत्युपयोगिनो विषयाः सन्ति। येषां सूचिका क्रमशः प्रकाश्यते।

## संन्यासधर्मपद्धतिः।

### तत्रस्थ-विषयाणां क्रमसूचिका।

### कुटीचकः।

१—सर्वव्यापको धर्मः। २—मानवधर्मः। ३—संन्यासधर्मः। ४—कलि-घर्ज्य प्रकरणम्। ५—यतिधर्ममौलिकरहस्यम्। ६—ब्रह्मचर्यवानप्रस्थसमस्या। ७—पद्धतिग्रन्थस्यावश्यकत्वम्। ८—संन्यासदीक्षाक्रमः। ९—गायत्रीपुरश्चरण-विधिः। १०—प्रायश्चित्तप्रयोगः। ११—कुटीचकसंन्यासः। १२—श्राद्धाङ्ग-तर्पणम्। १३—अष्टौ श्राद्धानि ( देवश्राद्धं, ऋषिश्राद्धं, दिव्यश्राद्धं, मनुष्य-श्राद्धं, भूतश्राद्धं, पितृश्राद्धं, मातृश्राद्धं, आत्मश्राद्धञ्चेति। ) १४—संन्यासो-पकरण-शोधनम् ( दण्ड-कमण्डलु-कौपीनसहितम् )। १५—महासङ्कल्पः। १६—गणपतिपूजनं, पुण्याहवाचनञ्च (कलशस्थापनं, पूजनञ्च) १७—मातृका-पूजनम्। १८—नान्दीश्राद्धम्। १९—ब्रह्माञ्जलिकरणं, ब्रह्मयज्ञश्च ( सक्तुप्राशनं, अब्भक्षणम् ) २०—सावित्रीप्रवेशः ( विधुराणां विधिः ) २१—अग्निस्थापनादि ( गृह्याग्नेः पुनःसंधानं, लाजाप्रोक्षणञ्च )। २२—ब्रह्मान्वाधानम्। २३—प्रात-र्होमः। २४—वैश्वदेवः। २५—आग्नेयस्थालीपाकादयः। २६—प्रणवादिपुरुष-सूक्तविरजाहोमश्च। २७—समारोपः। २८—निष्क्रमणादि ( आशीर्वादः, बन्धु-विसर्जनम्, एषणात्यागः, जलाभिमन्त्रणम्, अभयदानम् प्रार्थना च) २९—प्रेषोच्चा-रादि ( दण्ड-कमण्डलु-ग्रहणम्)। ३०—गुरुप्रार्थनादि (अभिषेकः, शान्तिपाठश्च)

३१—हृदयालम्भो नामकरणादयः ( योगपट्टः ) । ३२—प्रणवोपदेशः साधनोपदेशश्च । ३३—आचारोपदेशः । ३४—अग्निहोत्रिणां विधिः । ३५—आतुर संन्यासः ।

### बहूदकः ।

३६—बहूदकसंन्यासव्रतग्रहणम् ( गुरुप्रार्थना गुरोरनुग्रहश्च ) । ३७—बहूदक-संन्यासाधिकारप्राप्तिः । ३८—स्नान-संकल्पादि ( दण्ड-रहस्यम् ) ३९—हवनादि गायत्रीप्रवेशश्च, वाचनिकः प्रेषः । ४०—हृदयालम्भः ( सरहस्यः ) । ४१—इष्टोपदेशः साधनोपदेशश्च । ४२—आचारोपदेशः ।

### हंसः ।

४३—हंससंन्यासाधिकारप्राप्तिः । ४४—शिखासूत्रत्यागरहस्यम् । ४५—हंससंन्यासव्रतग्रहणम् (शिखासूत्रहवनं, नूतनलिंगधारणं, अभिषेकः, शान्तिपाठश्च ) । ४६—प्रणवप्रवेशः प्रेषमन्त्रनिदिध्यासनञ्च । ४७—साधनोपदेशः । ४८—आचारोपदेशः ।

### परमहंसः ।

४९-परमहंसः ५०- सर्वसाधारणानां संन्यासविधिः आचारो विचारश्च ।

---

## विलम्बकारणम् ।

अस्माभिस्तु अस्य स्मृत्यङ्कस्य प्रकाशने एतद्धि चिन्तितमासीद् यद् सर्वथा देशधर्म्म-सेवापरायणानां हिन्दुजातिगौरवसमेधनतत्पराणां यावज्जीवं सनातनधर्मसंरक्षणविचक्षणानां साम्प्रतिकवैज्ञानिक-युगेऽपि धर्मकल्पद्रुम-धर्मविज्ञान-गीतार्थ-चन्द्रिकार्य्यगौरवप्रभृति-सर्वोत्कृष्ट-ग्रन्थरत्नप्रणयनेन सर्वथा सनातन-धर्म्ममर्यादा-सम्वर्द्धकानां धर्मशून्यपाश्चात्याधिभौतिकविज्ञानविलुलितबुद्धीनां मानवानाममृतशलाकयेव चक्षुरुन्मेलकानां किं बहुना स्वजीवनार्पणेन हिन्दुजातेः परमाभ्युदयाधायकानां सर्वस्वत्यागेन सर्वजनीन-मङ्गलमातन्वतां श्रीस्वामि दयानन्द-संन्यासिमहापुरुषाणां योऽयं समुचितं समुपयोगि च स्मृत्यङ्कं सम्पादयितुं सर्वतोऽस्मान् पर्याप्तमात्रायां यथेष्टं समधिकं साहाय्यं सहानुभूतिश्च समुपलब्धे भविष्यत इति । परन्तु एवम्भूतेयं हिन्दुजातिरिदानीं स्वकर्तव्यमार्गतः विचलिता परिभ्रष्टा च विद्यते ।

( अवशिष्टं ७७ पृष्ठे द्रष्टव्यम् )

# शोकोच्छ्वासः ।

[ प्रणेता—पं० श्रीदीनानाथशर्मा शास्त्री सारस्वतः । ]
( मुलतानस्थ—स० ध० कालेजाध्यापकः )

जनानामानन्दं प्रतिपलममन्दं स्ववचनै—
वितन्वन् गम्भीरः सततमतिधीरश्च सुतराम् ।
निजाऽऽर्हन्तीवित्तः सुकृत-कृतचित्तः स मतिमान्
दयानन्द-स्वामी शमनपथगामी समभवत् ॥ १ ॥

पुरीयं हाऽमोकेऽभवदहह ! शोके नतिमती
हहा ! जाता दीना विरहपरिलीनाऽत्र जनता ।
अभूद्धर्म्मोऽनाथः परिहृतसुगाथः प्रचुरशुक्
सभाऽत्रत्याऽशर्म्मा त्रुटिततमममर्म्मा समजनि ॥ २ ॥

श्रीमन् ! धर्म्मरहस्यबोधनकरं 'श्रीधर्म्मकल्पद्रुमं'
तादृक्षानितराँश्च निर्म्मितवता सद्-ग्रन्थराशीन् यथा ।
नृणां यद् भवता व्यधायि सुमहाँश्चाभस्तथा वर्द्धिता
श्रद्धा, तेन भवानभूद् भृशतयाऽस्मद्धन्यवादाऽऽस्पदम् ॥ ३ ॥

नास्तिक्यप्रसृतौ परैर्यदपरैः प्रच्छन्नबौद्धैरहो ?
अर्व्वाचीनजनैरदूषिषत यत् प्राच्या विचाराः क्वचित् ।
सद्वैज्ञानिकयुक्तिभिः पटुतया वाचंयमस्तान् भवान्
कुर्व्वन्, धर्म्मपरोऽपरो दृढमतिः श्रीशङ्करोऽभासत ॥ ४ ॥

भावत्की भृशयोग्यताऽथ विदिता सल्लेखशक्तिश्च सन् !
श्रीमद्भारतधर्म्ममण्डलमभूत् त्वद्बीजतः ख्यातिमत् ।
श्रित्वा कर्णपुरीययोगभवनं 'श्रीधर्म्मविज्ञानकं'
सद्-ग्रन्थं विरचय्य सर्व्वजनतां धर्म्माऽनुरक्तां व्यधात् ॥ ५ ॥

तस्यैतादृशधर्म्ममर्म्मविदुषः श्रुत्वा वियोगं तव
दूनाः सर्व्वजना जनार्दनमनोवृत्तिं विभाव्येदृशीम् ।
किञ्चित्ते प्रतिकर्त्तुमक्षमतया कैवल्यमाशासते
श्रीशस्त्वां स्वसरूपतामुपनयन्नद्वैतकारी भवेत् ॥ ६ ॥

——o——

# " हा विधे ! "

( ले०—पं० श्रीधनेशदत्तमिश्रः ( दिनमणिः ) "काव्यतीर्थः,"
अध्यापकः इरिडयन-हाई-इङ्गलिश-स्कूल, पटना )

अहो नु श्रीभगवतो करुणावरुणालयस्य कीदृशी खलु नैसर्गिकस्थितिः। अत्र केचिद्धसन्ति, केचिच्च रुदन्ति। प्रातःस्मरणीय कपिल-कणाद-गौतम प्रभृतीनां चरितं स्मरन्तु ! ते हि सर्वेषां मानवानां मानस-मुकुरे धर्म्मस्य परिभाषामखरडप्रेरणोपदिशन्तः वीतरागा एवात्मनीनं जीवनं यापितवन्तः। किमधिकमाकलयामः। अद्यत्वे पूज्यपादानां स्वर्गीय-श्रीस्वामि-दयानन्दानामाकालिकं मृत्युमाकर्ण्य केषां सज्जनानां नितरां न चेतश्चेखिद्यते ? अयं हि भगवदंशमासाद्य साक्षाद् धर्म्ममूर्त्तिरेवासीत्। हा दैव ! सनातनधर्म्म-सूर्य्यो हि अस्तं गतः। सकलास्सनातनधर्म्मावलम्बिनो भारतीया अनाथाः संजाताः। धिङ्गत्समाजे तु वज्रपातो जातः।

अयं हि वङ्गप्रदेशीयः, बाल्ये वयसि मातृपितृस्नेहवञ्चित आसीत्। अध्ययनकालेऽपि महता कष्टेनात्मनीनं जीवनमनैषीत्। आजन्म ब्रह्मचर्यव्रतमनुपालयता पुनः संन्यासाश्रमोऽङ्गीकृतः। अयं हि यथाऽङ्गल भाषायां निपुणस्तथैव संस्कृतभाषायामपि प्रकाराडपरिडत आसीत्। सदसि अस्य महात्मनो व्याख्यानपीयूषमापीय केषां सज्जनानां नितरां न प्रसीदति स्म मनः ? किं पुनरस्य महात्मनो प्रखरशेमुषी-चमत्कारं रचना-चातुरीञ्चावलोक्य सर्वे धीमन्त आश्चर्यान्विता अभवन्। किमधिकमहो ! "धर्म्मकल्पद्रुमः, गीतार्थचन्द्रिका, शास्त्रचन्द्रिका, आचार-चन्द्रिका, परलोकरहस्यम्, आर्यगौरवम्, इत्यादीन् धर्म्मग्रन्थान् समीक्ष्य आर्यजातीनां गौरवविशेषोऽद्यापि संलक्ष्यते।

अयं हि श्रीभारतधर्म्ममहामराडलप्रवर्त्तकपूज्यपाद श्रीस्वामि-ज्ञानानन्द महाराजस्य प्रधानशिष्यः। अस्य भगवतो "नवाबगंज, कानपुर" इत्याख्ये श्रीसनातनधर्म्मब्रह्मावर्त्तमहामराडलाख्या संस्था अद्यत्वेऽपि सकल-भारतीयानां पुरतो दरीदृश्यते। ततो मुख्यतः सनातनधर्म्मस्य प्रचारो भवति।

कार्यक्षेत्रेऽवतीर्य "धर्म्म संस्थापनार्थाय" इत्यादेशमनुपालयन्त आत्मनीनं जीवनं सफलितवन्तः। सर्वथा तेषां मनोऽभिलषिता धार्मिक-संस्कृत-परीक्षाऽऽस्माभिरिह सर्वत्र जगति प्रचारयितव्येति तेषां चरणयोर्भक्ति पुष्पाञ्जलिं वितीर्य्य विरम्यते।

# शोकोच्छ्वासः ।

[ लेखक —पं० श्रीधैर्य्यनाथ झा शास्त्रिणः काव्यतीर्थाः,
श्री बलदेवसहाय सं० महाविद्यालय नयागंज कानपुर । ]

दयया दयनीयभारते सततं भक्तजनातिसेवनात् ।
परमेश्वरकृष्णकस्य वै स्वजनारिष्टविनाशिनो विभोः ॥ १ ॥
अतिसंकटदग्धमानसैः परमानन्द इहास ईदृशः ।
स मनुष्यशरीरधारको दययाऽनन्द इति स्मृतो बुधैः ॥ २ ॥
स हि वेदपुराणमण्डले स्मृतिधर्मार्थकलादिकौशले ।
निपुणो निजधर्मकर्मविद्भगवत्पूजनदत्तमानसः ॥ ३ ॥
सुविधाय सुखं स्वधर्मिणां निजविद्याबलसाधनादिभिः ।
विरचय्य गृहं स्वधर्मिणां पठनार्थं च मनोऽनुकूलकम् ॥ ४ ॥
निजधर्मप्रतापवान् कृती परमं प्राप्य यशो जनोदितम् ।
शुभमासतिथावहो हहा ! स दयाऽनन्द इतो दिवं गतः ॥ ५ ॥

---

# श्रीमद्दयानन्दाः, तेषां विविधा धर्मसेवा च ।

श्रद्धालुश्चन्द्रकान्तशाण्डिल्यः शास्त्री ।
( सह० सम्पा०-"हितकारी" मुल्तान )

साम्प्रतिके समये धर्मो नितान्तं ह्रासं भजते, इति नागोचरं धर्मविज्ञनेभ्यः । प्रत्यक्ष-विज्ञानयो र्लीनमनस्का जना धर्मे निरादरभावा अजायन्त । श्रीस्वामिचरणा धर्मग्लानिं मनसाऽसहमानाः सन्तः, प्रभुपदानुरक्ता अपि धर्मप्रसाराय विज्ञानं प्रत्यक्षं चाश्रित्य धर्मक्षेत्रे कर्मक्षेत्रे चावातरन् ।

"उपदेशकर्माणः सन्यासिनः" इत्याशया नागताः श्रीपादाः । तेषां वर्तमानजनेषूपदेशप्रचारकारणं खलु धर्मग्लानिजन्या मानसिकी पीडैवासीत् । नोऽसत्यमिदम्, यत् प्रत्यक्ष-विज्ञानोपजीविषु धर्मविमुखता दावानलोपमा सती विस्तारं समवोढ । परन्तु श्रीचरणा मेघायमानाः सन्तः प्रत्यक्ष-विज्ञान-तोयं मुञ्चन्तः धर्महानिवनाग्निमुपशमयितुमुदाञ्चन् ।

वर्तमानः समाजो विज्ञानप्रत्यक्षोपजीव्यपि साहित्योपासकश्चास्ते । श्रीचरणाः साहित्यकर्म-मर्म-विदोऽपि अस्मिन् कर्मणि औदासीन्यं नप्राकटयन् ।

अपितु साहित्यक्षेत्रं विस्तारयन्तो विज्ञानप्रत्यक्षं साहित्येऽपि नामुञ्चन्। तेषां यं विषयमाश्रित्य लेखनी अचलत् तं विषयमन्वेषणपूर्वकमपूर्णयत्। यथा कोऽपि वीरः यां दिशं भजति तामसिना अवीरां करोति, तथैव श्रीचरणानां लेखनी यत्राऽपि प्रसृता तत्रैव अपूर्णतां व्यनाशयत्।

केचन अल्पज्ञाः समाजजनाः स्वागमीय-प्रमाणापेक्षया वैदेशिकानि प्रमाणानि महामूल्यानि मन्यन्ते। तेभ्यः श्रीस्वामिमहोदयाः आङ्गलभाषामयानि प्रमाणानि पुरस्कृत्य साहित्यक्षेत्रे चरणमस्थापयन्।

श्रीचरणानां मनसि उद्विग्नता न शशाम। लेखनी-कार्यं कुर्वाणा अपि उपदेशेषु वाग्वज्रैः मूर्खजनान्तर्गताज्ञानगिरीन् अभिन्दन्। इति।

उपदेशप्रिया जना अपि अनल्पा आसन् सन्ति च। श्री श्रीस्वामिमहोदयास्तेषां मनस्तृषां सम्यक्तयाऽशान्तयन्। यदि श्रीस्वामि-चरणानां उपदेश- विचार-जाह्नवी चिरकालमुपदेशतरङ्गै रस्रविष्यत्तर्हि मनागतधर्मग्लानी-पङ्कः सत्यतो नाशमवश्यमगमिष्यत्।

साधारणा जना ब्रुवते, यत् श्रीमद्दयानन्दा मृता इति, इति तेषां भ्रमः। यद्यपि शरीरविच्छेदं श्रयमाणाः श्रीमद्दयानन्दमहोदयाः प्रत्यक्षतः दृष्टेरगोचरतां गताः, तथापि तेषां ग्रन्थेषु तेषामाकृतिः, हृदयम्, यशःशरीरम्, व्याख्यानपरिपाटी च निहितान्येव। श्रीमद्दयानन्दाः कर्तव्यपथे चलन्तः शरीरममुञ्चन्, इति नास्ति खेदः। ओम् अयमस्ति खेदोऽवश्यं यच्छ्रीमद्दयानन्दा यादृशीं धर्मसेवामकुर्वन्, सा सर्वथाऽल्पैव। अस्माकं चेतो ग्रन्थैरेभिर्न पूर्यते। अधुना पर्यन्तं साकाङ्क्षमेवास्ति।

अस्तु, तेषां यशःशरीरममरोपमममरमाप्रलयं भवतु। तेऽन्यामाकृतिं समर्प्य गता इति न संशयः। वयं धर्मविज्ञानं धर्मकल्पद्रुमं चोत्थाय कथयामो यदिमे श्रीमद्दयानन्दचरणा इति। एषु ग्रन्थेषु श्रीमतामुद्देशः, कर्तव्यं, धर्मप्रसारश्चास्ति।

अस्तु, अस्मद्दिशातः श्रीमद्दयानन्दात्माने सन्तोषः, धर्मप्रचारप्रसन्नता च यातु, तद्दिशातोऽस्मान् धर्मरक्षणक्षमत्वाशीरायातु। इति।

अनन्तरं मामकानि इमानि श्रद्धासुमानि श्रीचरणेभ्य उपहृतानि मामपर्णं कुर्वन्त्विति

# स्वामिपादानां ब्रह्मीभावात्सनातनधर्महानिः ।

(डा० स्वामी ब्रह्मानन्दसंन्यासी पी० एच० डी० शास्त्री, वेदान्तशिरोमणिः, काशी ।)

"सृजति तावदशेषगुणाकरं पुरुषरत्नमलङ्करणं भुवः ।
तदपि तत्क्षणभंगु करोति चेदहह ! कष्टमपंडितता विधेः ॥"

श्रीमन्तः पाठकप्रवराः ।

अद्य श्रीमतां पुरः किञ्चिल्लिखितुं नैवोत्सहते लेखनी, चेतश्चित्करोति, गात्राणि गरिमाणमासादयन्ति, करोऽपि कम्पमाश्रयति, नयने नभोनभस्याश्रयमातन्वाते । सत्येवं लेखसामग्रीसम्पत्तिसमुपद्रुते को हि स्थिरबुद्धिः किमपि वक्तुं लिखितुं वा प्रभवतीति पुनरुक्तिकरणमेवैतत्कारणकथनम् ।

अहो ! क्वासौ महात्मा सर्व-समाज-सम्प्रदाय-समानमान्यः सनातनधर्मैक संरक्षको विश्वविदितैकवाग्मी अविरलमधुरवाग्धाराप्रवाहको धर्मविज्ञानविमर्शी साम्प्रतिकपाश्चात्यजडविज्ञान-वात्याविकलीकृतनयनानां पण्डितंमन्यानां इंग्लिश-शिक्षादीक्षादीक्षितानां भारतीयानां स्वीयाध्यात्मिकधार्मिकमर्म्मविवेचक-विज्ञानकर्पूरशलाकाञ्जनेन चक्षुषामुन्मेलयिता परःशतानाममूल्यानामावृद्धबालं सनातनधर्मश्रद्धासमेधकानां धर्मविज्ञान-धर्मकल्पद्रुमप्रभृतिग्रन्थराशीनां रचयिता श्रीभारतधर्म-महामण्डलस्य मन्त्रीत्वमाशरीरवियोगमावोढा गुरुभक्ति प्रवणो बालस्वभाववत् कामक्रोधलोभमोहमदमात्सर्यादिरहितः संस्कृत-हिन्दी-बंगला-इंग्लिश-प्रभृति भाषाराशिषु समानाधिकारधारी सनातनधर्मस्याऽऽजी-वनसेवकः संस्कृतच्छात्रैकसत्यसहायकस्तेषु धार्मिकशिक्षाविस्तारप्रयो-जकः संस्कृतशिक्षापरिष्कारको धर्ममयैकजीवनः, किं बहुना सर्वदा सर्वथा भारतेऽस्मिन्नद्भुतधर्मजागर्तिजनकः श्री १०८ श्रीमान् स्वामी दयानन्द-महोदयो विद्यते ? श्रावण्याममायां १० दशवादनावसरेऽविमुक्तवाराणस्यां श्री-भारतधर्ममहामण्डलभवने ब्रह्मीभावमुपेत्य पञ्चपञ्चाशद्वर्षीयावस्थायामेवासारं संसारं सर्वथाहासीदिति को विश्वसिष्यति ! कथमेवमेवाकस्मात् स्वपोषपुष्टां कान्हपुरस्थादिसनातनधर्मकालिजप्रभृतिधर्मसंस्थां सहसोपेक्षिष्यत इति । केन स्वप्नेऽपि चिन्तितमासीद् ।

अरे ! कुटिलकरालकलिकाल ! कथं कवलितस्त्वयाऽकाले तादृशो धर्म-प्राणो दयालुर्दीनानुकम्पको विज्ञानराशिरनेकभाषाभिज्ञो धर्मसाम्राज्यसमेधको विज्ञानगगनविचरणैकधीरो व्याख्यानवीरोऽनुपमगभीरो भारतरत्नैकहीरो दया-नन्दसुधीरोऽधुना ?

सम्प्रत्येव तु तस्येह जगति नितरां प्रयोजनमासीत्। अद्यत्वेऽधार्मिकबहुले जडविज्ञानान्धीकृतेऽनीश्वरवादवावदूके कस्त्राणदोऽस्माकं धर्मरहस्यानाम्? को हस्तदो जर्जरकलेवरस्य कर्मकाण्डरतस्य जरन्मीमांसकसमाजस्य? कस्तोषदो भक्तिपरायणस्य वादपराङ्मुखस्यानायासेनैव मुक्तिपदमभिलपतो वेदरहस्य गीताहृदयसुसक्तमानसस्योपासकसमूहस्य? को हि ध्यानदो द्वैताऽद्वैत- विशिष्टा- ऽद्वैत- शुद्धाऽद्वैतकेवलब्रह्मवादादिविविधमार्गेषु स्वरूचिभेदानुकूलतया येन केनाऽपि पथा "तद्धाम परमं मम" इत्यपुनरावर्तनीयं पदं जिगमिषूणां ज्ञानि- निचयानां मार्गसमन्वये?

क इह बद्धपरिकरः स्याल्लोके लोकायतमतप्रचारप्राये दृढां धर्मप्रचार- व्यवस्थां विधातुम्? क आयोजयिता भवेद्व्याख्यानशिक्षासरणीनाम्? कोऽस्ति सम्प्रत्युपदेशकसमूहसम्पत्तिसम्पादनायोपदेशकमहाविद्यालयप्रभृति नूतनाद्भुत- जागर्तिजनिकानां संस्थानां प्रतिष्ठापयिता? क दृश्यते कोऽपि संस्कृतपत्र- प्रचारविचारचतुरो महात्मा? इति विमनस्का वाराणसेय-विद्वन्मण्डली विलपति तद्वियोगे।

हा! हा! अदम्योत्साहेनानवरतं ग्रन्थरत्नान्येव विरचयतः, सर्वत्र पञ्चाल- बङ्गाल- बिहार- संयुक्तप्रान्त-गुर्जर मरूस्थल-मध्यप्रान्त- स्वतन्त्रनरपतिराज्य- प्रदेशेषु विशेषतो जलग्राममहाधिवेशने बहुशोऽविरामं व्याख्यानामृतवर्षणमातन्वतो धर्ममेघस्य वागमृतधरस्य संन्यासिभूषणस्य स्वकायक्लेशमगणयत एव काय- क्षीणतामुपगतो न पुनः पूर्वावस्थामासादयद्येनाऽल्पेनैव रोगाघातेनेमं नश्वरलोकं विहाय शाश्वतिकं स्थानमाश्रयितुं सोऽत्वरयत्।

स हि महात्मा स्वेन कर्मणा भक्त्या ज्ञानेन च लोकेषु मार्गत्रयस्यापि समानमेवोपदेष्टाऽऽसीत्। संन्यासाश्रमावस्थायामपि—

"अकुण्ठं सर्वकार्य्येषु धर्म्मकार्यार्थमुद्यतम्।
वैकुण्ठस्य हि यद्रूपं तस्मै कार्यात्मने नमः॥"

इति कार्य्यात्मकस्य ब्रह्मण उपासनां विदधत् साम्प्रतिकं संन्यासिसमूह मिदमेव समकेतयद्यद्—

"अनाश्रितः कर्मफलं कार्य्यं कर्म करोति यः।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः॥"

इति संन्यासिनः सर्वदाऽनासक्तियोगेन कर्मकरणमेव श्रेयः। अत एव भगवता श्रीकृष्णेनार्जुनः शिक्षितो यद्।

"लोकसंग्रहमेवापि सम्पश्यन्कर्तुमर्हसि"
"उत्सीदेयुरिमे लोका न कुर्य्यां कर्म चेदहम्।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः॥"

इति प्रातःस्मरणीयभगवद्भाष्यकारशङ्कराचार्यवद् ब्रह्मवादिना सताऽपि यावज्जीवं कर्मयोगमेवानुतिष्ठता स्वामिना दयानन्देन संन्यासिसंघोऽत्र विषये श्रीमद्भगवतां शङ्कराचार्य्यपादानां लोकसंग्राहककर्मानुष्ठान एव तात्पर्य्यमित्येव शिक्षितोऽभूदिति।

अस्तु नाम, तादृशस्य लोकसंग्राहककर्माऽनुष्ठानपरस्य धार्मिके जगति नूतनयुगोपस्थापकस्य धर्मग्रन्थानां च पञ्चाशत्तोऽप्यधिकानां व्याख्यानकलाशिक्षकाणां बृहदाकाराणां निर्मापकस्य स्वोपदेशेन बहूनां मार्गभ्रष्टानां मानवानां पुनः सनातने सन्मार्गे समुपस्थापकस्य भारतधर्ममहामण्डलीयसर्वकार्यकलापे परमसहायकस्य सर्वथा योगिवर्य्यस्य ज्ञानिप्रवरस्य महापुरुषस्य स्वामिदयानन्दमहाराजस्य नश्वरशरीरत्यागेन या हि घोरा क्षतिः श्री सनातनधर्मसमुदायस्य समजनि तस्याः पूर्तिरसम्भाविनी। यश्चाधुना ज्ञानिप्रवरस्य महायोगिनोऽपि सतः श्री' श्री' जीमहाराजस्यास्यां सप्तत्यधिकवर्षवयोऽवस्थायामीदृशयोग्यशिष्यवियोगाद्धृदि शोकाघातो निःखातस्तस्य मार्जनं, यश्च विषादशङ्कुस्तदीयशिष्यकल्पानां काशीस्थानां बहिस्थानाञ्च विदुषामन्तस्तले तद्दर्शनाभावप्रयुक्तो निहितो विद्यते, तस्यापनयनमित्यादिकां तामिमां सर्वामप्यनर्थपरम्परां श्रीकाशीस्थोऽन्तर्य्यामी विश्वात्मा भगवान् विश्वनाथ एव दूरीकुर्वन् ब्रह्मीभूतस्य तस्य समारब्धकर्मणां संस्कृतविश्वविद्यालयपरीक्षाप्रभृतीनां दैनन्दिनं विवृद्धिमातनुतामिति कियतश्शब्दराशींस्तदीयस्मृतौ समर्प्य तच्छोकसमुद्विग्नमानसतया स्मृतिपथानीततदीयगुणग्रामचिन्तनचञ्चलचेतस्तया व्यपेतधैर्य्यसञ्जातकम्पतया लेखनीपतनभयात्तदीयाऽगणितगुणगणगानाऽसामर्थ्याच्च विरम्यत एवाऽऽधुना। पुनरपि कदाचिदागतधैर्य्येणाभिधातुं किञ्चिच्छक्यते न वेति सन्दिहानेनाऽमुना तदीयाऽनुग्राह्येणेति शिवम्!

---

## शोकोच्छ्वासः।

लेखकः—महामहाध्यापक-महामहोपदेशक-पञ्चाम्बुभूषण-पण्डितराज-विद्यासागरबुलाकिरामशास्त्री किशनगढ़।

हा हन्त! दुर्दैव! कृतं त्वया किम्, यत्संहृतो धर्मसुमर्मवेत्ता।
स्वामी दयानन्द इति प्रतीतः, श्रीमन्महामण्डलमुख्यवक्ता॥ १॥

धर्मप्रचारार्थमुदारचेताः, सन्त्यज्य सर्वं गुरुभक्तियुक्तः ।
व्याख्यानतो लेखनतोऽपि योऽसौ, धर्मोन्नतिं पूर्णतया चकार ॥ २ ॥

सर्वत्र पर्य्यट्य सभान्तराले, युक्ति-प्रमाणोपहितं सुवाग्मी ।
अत्यद्भुतं श्रोतृमनोहरं यो, धर्मस्य तत्वं सुदृढं बभाण ॥ ३ ॥

आंगलभाषाभिज्ञः, संस्कृत-हिन्दी-वंग-वाणी-विज्ञ ।
सर्वत्र सिद्धहस्तो लिलेखाद्भुत-धर्मग्रंथान् ॥ ४ ॥

हा-हा-हन्त ! दयानन्द ! ज्ञानानन्दं विहाय किम् ।
क्व गतोऽसि ह्यकाले त्वं दुर्ज्ञेयं कालचेष्टितम् ॥ ५ ॥

---

## शोकोद्गारः ।

( ले०--पं० श्रीभूपनारायण झा महोदयः, व्या० न्या० मीमांसाचार्यः, साहित्य-रत्नम् हाजीपुर-रत्नाकर सं० विद्यालय-प्रधानाध्यापकः । )

धार्मिकजनता मार्मिककुलिशाघातादिवाधिकं व्यथते ।
नित्यनिरीहानन्दे भवतीदानीन्दयान्दे ॥ १ ॥

हाहाऽद्य भारतमनारतमेधिताऽऽधि---
संवाधिताखिलविलासकलाकलापम् ॥
वर्णाश्रमप्रतिनियन्त्रित-धर्ममर्म---
ग्रन्थिश्च हन्त शिथिला निखिलाद्य जाता ॥ २ ॥

भारतधर्ममहामण्डलमाखण्डलरहितमिव त्रिदिवम्
अहमधुनोत्पश्यामि काशिकापत्तनमिव वाऽपेतशिवम् ।
अहनि गगनमण्डलमिव नीरविमण्डलमथ निशि शशिरहितम् ।
यमकालंकृतरीति-चमत्कृतपदमिव पद्यं रसरहितम् ॥ ३ ॥

स धारणाध्यानसमाधिशोधिता—
ऽपवासन्ने चेतसि योगमादिमम् ।
वितत्य लब्धामलबोधदर्पणे—
ऽपरोक्षमैक्षिष्ट विविच्य साक्षिणम् ॥ ४ ॥

वैराग्यमेत्य परमाशु विवेकवृत्ति—
र्व्याधूय वीक्षितविगत्वरतादिदोषाम् ।

तद्वासनामनवशेषमपास्य चान्ते
निर्बीजयोगविभवेन विशुद्ध आसीत् ॥५॥
प्रारब्धकर्मशेषेण चक्रभ्रमिवदाश्रितम् ।
देहमुद्धूय यतिराडसौ कैवल्यमाप्तवान् ॥ ६ ॥
स तु सनातन-धर्मसनातन—
प्रणयपुञ्जतया स्म विजृम्भते ।
यदनुभाववशादवतिष्ठते
क्वचिदिहास्तिकतापि तपस्विनी ॥ ७ ॥
तदनिर्वचनीयवाग्मिता—
स्फुरदुद्गारमहत्त्वमीदृशम् ।
यदहर्निशमेव वश्यतां—
मिथिलेशोऽपि जगाम सादरम् ॥ ८ ॥

---

## श्रीमद्दयानन्दाष्टकम् ।

[ प्रणेता—'साहित्यरत्न'-श्रीसरयूप्रसादपाण्डेयः ( द्विजेन्द्रः )
"काव्यतीर्थः, आयुर्वेदशास्त्री" )

श्रीमद्दयानन्द-करं दयालुं वक्तारमार्य्यं निगमागमज्ञम् ।
स्वर्गीयमात्मानमनार्यशत्रुं, वन्दे दयानन्दमहं 'द्विजेन्द्रः' ॥ १ ॥
गीतादिशास्त्रस्य विधाय टीकामत्यद्भुतां सर्वमनोहराञ्च ।
योऽनन्दयद्धार्मिकसंघमाशु, तं प्रार्थये स्वर्गतदेवकल्पम् ॥ २ ॥
दन्दह्यते मे हृदयं विना त्वां, शोकाकुलः शाश्वतधर्म एषः ।
यानं दयानन्द! कथं त्विदानीं, धर्मस्य को नेष्यति मण्डलेऽस्मिन् ॥ ३ ॥
नंदीव शम्भोर्जगतां शिवार्थं, धर्मस्य भारं धृतवान् यदैव ।
दत्तो दयानन्द-इति प्रसिद्धो, लोके तदा त्वं विदुषां वरेण्यः ॥ ४ ॥
स्वामिन्! गतस्त्वं प्रविहाय कुत्र, शिष्यानिमान् धर्मसनातनीयान् ।
मीनान् पयो याति यथा विहाय, जाले कराले विवशान् विलोक्य ॥ ५ ॥

नयनिगमनियन्ता, भारती-यान-यन्ता,
सुकृतसुलभमान्यः, पण्डितानां वदान्यः ।
परिदददमितार्थं यो महामण्डलार्थं,
क गत इति न विद्मः श्रीदयानन्द विज्ञः ।। ६ ।।
निगमागमविज्ञस्य योगिवर्यस्य धीमतः ।
ज्ञानानन्दस्य शिष्योऽयं दयानन्दो महामतिः ।। ७ ।।
नेत्राङ्कग्रहचन्द्रेऽब्दे श्रावणेऽमातिथौ कुजे ।
ब्रह्मीभूतोऽभवत्काश्यां महामण्डलमन्दिरे ।। ८ ।।

---

## शोकाश्रुविन्दवः ।

—— :*: ——

अज्ञानातिघनान्धकारपटलं ज्ञानांशुभिर्निर्दलन्
पापात्माघलिसंल्लसत्कुमुदिनीसंकोचमापादयन् ।
तेजःपुञ्जसितीकृतत्रिभुवनो यो नस्सदाऽमोदयत्
हा ! सूर्योऽस्तमसौ गतो बत दयानन्दाभिधस्साम्प्रतम् ॥ १ ॥
पुण्ये भारतवर्ष-नामधिलसद्देशे प्रसिद्धिं गतो
योऽसौ भारतधर्ममण्डलमिदं वाराणसीराजितम् ।
संरक्षन् परितो विचारविभवैरासीद् वरेण्यस्सताम्
हा ! हा ! हन्त ! गतस्स कुत्र भुवनादस्माद् यतीशः क्षणात् ॥ २ ॥
याते दिने कतिपये पुनरेष देशः
सच्छास्त्रचिन्तनपटुत्वमुपैष्यतीति ।
आशासते यदुपदेशबलेन विज्ञाः
हा ! हा ! कुतोऽद्य स गतो भुवनाद् यतीन्द्रः ॥ ३ ॥

—श्रीभोलानाथद्विवेदिशास्त्रिणः
( ग० सं० कालेज, काशी )

---

( ६६ पृष्ठावशिष्टम् )

अदेतादृशेऽपि स्वात्मजनीने परमावश्यके कर्तव्ये विमुखीभूय स्वकर्तव्यच्युता दैनन्दिनमधःपाताभिमुखी एव जायमाना दृश्यते। यतो हि अस्य स्मृत्यङ्कस्य यथासमयं प्रकाशनार्थं धनादि-साहाय्यन्तु दूरे तिष्ठतु, मौखिक-सहानुभूतिसूचक-पत्रप्राप्तिरपि समुचित-संख्यायां न सम्प्राप्ता। समागतयोरुभयोर्धनसाहाय्य-वाचनिकसहानुभूतिसंख्ययोरत्रोट्टङ्कनेन हिन्दुजाते वर्तमानां दुरवस्थां व्यक्तीकर्तुं न वयमभिलषाम इति मौनमाकलयामः।

संक्षेपेण स्वग्राहकानुग्राहक-संरक्षक-सहायकमहानुभावानिदमेव विज्ञापयामो यद् धनाभावेन सहानुभूत्यभावेनासुरभावापन्नमानवजनितान्तराय-बाहुल्येन मुद्रलाणयाव्यवस्थया स्वकीय-मुद्रणालयाभावाच्च अयं स्मृत्यङ्कोऽस्माभिर्यथासमयं यथास्वरूपं यथाभिलषितञ्च नैव प्रकाशित इति सखेदं निवेदयामः। यतो हि अस्माभिर्विचारितमासीद् यन्मासत्रयेण संन्यासगीतायाः संन्यासधर्म-पद्धतेश्च सर्वेऽप्यंशाः प्रकाशिता एव भविष्यन्तीति। परन्तूपर्य्युक्तकारणकलापेन विशेषतो मुद्रणालयाव्यवस्थया नास्माकं मनोरथोऽधुनापि साफल्यमुपगतः।

अतो वयं सर्वविधानेव पाठकोपपाठकप्रवरान् सानुनयं सानुरोधञ्च विज्ञापयामः, यदग्रिमाङ्केऽवश्यमेवोभयोरेवानयोर्ग्रन्थरत्नयोः सुन्दरसमुचितसम्पादनेन समाप्तिमानेतुं वयं सर्वथा प्रयतिष्यामहे। आशास्महे च यदीश्वरानुग्रहमात्र-सहायका वयमवश्यं सर्वमप्यन्तरायमुत्तीर्य ग्रन्थरत्नद्वयेन सार्धम् पुनः सर्वानेव स्वपाठकान् यथासमयमनेन ग्रन्थरत्नोभयेन सहैव सूर्य्योदयप्रकाशनेनानन्दयिष्याम इति। येन च सर्वेषामेव भारतीय-संस्कृतिसमुन्नतिसमीहावतामस्मद्ग्राहकानु-ग्राहकसंरक्षक-सहायकमहोदयानां पुस्तकालयालङ्करणायेदं ग्रन्थरत्नद्वयं समर्थं सत् पुस्तकालयशोभां तदीयगौरवञ्च सम्वर्द्धयिष्यति।

अद्यत्वे सर्वत्रैव समाजे राजनीतौ धर्मनीतौ समाजनीतौ च विविधाः समुन्नतिप्रकारा दृश्यन्ते। यतश्चेह भारते वर्षे सर्वत्रैव समाजे जागर्तिजनको भावो दैनन्दिनं देदीप्यमानोऽणुर्महान्वा सर्वथैवावलोक्यते। किन्तु अस्मिन् समादरणीये साधु-संन्यासि-समाजे सर्वत्रैव सर्वथाऽन्धकार एव परिलक्ष्यते। यत्रैव दृष्टिं चालयामस्तत्रैव परिष्कारकरणावश्यकता प्रतीयते। पश्यन्तु, ये हि संन्यासिनो

"दण्डग्रहणमात्रेण नरो नारायणो भवेत्"

इति धर्मशास्त्रीय-वचनानुसारं सर्वमान्याः पूज्या आसन्। किं बहुना यान् दृष्ट्वा सम्राडपि स्वसिंहासनं विहायाभ्युत्थानार्थं सपरिचारक स्तदीयां कृपादृष्टिम-

पेक्षतेस्म । तेऽपि च प्राक्तने काले स्वतपःप्रभावतस्तेषां निग्रहानुग्रहयोः समर्था आसन्। परन्तु अद्यत्वे कलिप्रभावतो गतादरसत्काराः पृथग्जनैरप्युपेक्षणीया दृश्यन्ते । यद्यपि भारतीय-संस्कृति-समेधनाभिलाषिभिर्धार्मिकैरद्यत्वेऽपि साधु-संन्यासिवर्गस्य समादरः पूर्ववदेव क्रियते, दर्शनमात्रेण ॐ नमोनारायणायेति पदोच्चारणेन स्वीयासीमश्रद्धाप्रकाशनं क्रियते । सर्वत्र च निवृत्तिधर्माभ्युदयिके कृत्ये वर्णगुरुं मत्वा नारायणवत्पादपूजनं सत्करणादिकं च क्रियते । अचिरेण भाविनि प्रयागीयार्द्धकुम्भमहाजनसम्मर्दे स्फुटमेव सर्वेषामयं भारतीयो धार्मिको भावो दृष्टिगोचरो भविष्यति ।

परन्तु एतेषां "संघे शक्तिः कलौयुगे" इति नियमानुसारं नास्ति किमपि संघव्यवस्थानं, नापि च कोऽपि संन्यासविधिविधानार्थं तदीयकर्तव्यविधानार्थं वा साङ्गः सम्पूर्णः पद्धतिग्रन्थो निबन्धग्रन्थो वाऽप्युपलभ्यते । तदर्थमेवायमस्माकं सुदृढः प्रयत्नः । एतादृशस्यात्यावश्यकस्य जगत्कल्याणविधायकस्य परमोपयोगिनो ग्रन्थरत्नस्य प्रकाशनमिह ब्रह्मीभावमुपेतानां संन्यासिप्रवराणां जगन्मङ्गलविधानतत्पराणां धार्मिके जगति प्रख्यात-पुण्यकर्मणां सनातनधर्मस्य प्रधाननेतॄणां पूज्यपादानां श्रीस्वामिदयानन्दमहाराजानामेव स्मृत्यङ्के समुचितमित्यत एव तत्र प्रकाशनं निर्णीतम् ।

अस्य ग्रन्थरत्नद्वयस्य प्रकाशनतः सम्प्रति सनातनधर्मजगति एको महान् अभावो दूरीभूतो भविष्यति, इत्यस्माकं धारणा । अनया संक्षिप्तसूचनया वयं सर्वानेव पूज्य-साधु-संन्यासि-सम्प्रदायस्थान् महात्मनः सानुनयं सानुरोधं साग्रहञ्च समभ्यर्थयामहे यत्स्वीयशुभाशीर्वादवचसा सत्संकल्पेन समुचितेनापेक्षितेनान्यसाहाय्येन चास्माकमुत्साहं वर्द्धयन्तु येन त्वरयैव वयं ग्रन्थरत्नमिदं प्रकाशयितुं समर्थाः स्याम इति ।

---

श्री १०८ स्वामिदयानन्दमहोदयानां ब्रह्मीभावमुपश्रुत्य या याः शोकसभाः सर्वत्र प्रान्ते मण्डले नगरे सनातनधर्मसभासु च सञ्जातास्तथा यानि च सर्वतः समवेदनासूचकानि तडित्पत्रपत्रादीनि समागतानि तेषु कियताञ्चेयं संक्षिप्त सूचिका स्थानाभावादधो निर्दिश्यते—

## काश्याम् ।

१—उपदेशकमहाविद्यालये लक्ष्मीकुण्डस्थाने काश्यां महामहाध्यापकानां त्यक्तमहामहोपाध्यायपदवीकानां श्रीमतां पण्डितप्रवर-पञ्चाननतर्करत्न-सभापतित्वे स्वामि दयानन्दमहोदयानामाकस्मिक ब्रह्मभावमाकर्ण्य

महती शोक-सभा समजनि । यत्र शोकप्रस्तावेन सह तेषां सनातनधर्मसेवा-प्रभृति कार्य्याणामुल्लेखो बहुभिः काशीस्थैः प्रसिद्धविद्वद्भिः श्रीमद्भिः श्रीगोपालशास्त्रि, दर्शनकेशरिप्रभृतिभिः सन्यासिसंघैश्च डा० स्वामिब्रह्मानन्दसंन्यासि-पी० एच० डी० प्रभृतिभिः कृतः । सभापतिमहोदयानामुपसंहारभाषणानन्तरं सभा विसर्जिता ।

### मोहमय्याम्

ब्रह्मीभूतस्वामिदयानन्दानामाकस्मिक-देहावसाननिमित्तिका शोकसभा मोहमय्यां गुर्जरप्रान्तीयमण्डलव्यवस्थापकानां सनातनधर्मकेशरिणां विद्यामार्तण्डानां महोपाध्यायानां श्रीमतां पं० श्रीरेवाशङ्करमेघजी शास्त्रि-महोदयानां प्रयत्नतः सम्पन्ना । यत्र स्वामिपादानां सनातनधर्मसेवाप्रभृति कार्य्यकलापकीर्तनेन सह शोकप्रस्तावः स्वीकृतः । श्रीभारत-धर्ममहामण्डले समवेदना-सूचकं पत्रञ्चागतमासीदिति ।

### अमावांराज्ये

स्वामिदयानन्दपादानामाकस्मिकं ब्रह्मीभावमुपाकर्ण्य अमावांराज्यस्थ-पण्डितैः श्रीहरिवल्लभठाकुर प्रभृतिभिः शोकसमवेदना प्रकटिता ।

### मयराष्ट्रे ( मेरठ )

तत्र स्वामिपादानामाकस्मिकं ब्रह्मभावमुपाकर्ण्य सर्वत्र विद्यालये शोक-संसत् सञ्जाता । महामण्डलभवने सहानुभूतिसूचकपत्राणि च समागतानि ।

### कर्णपुरे ।

अत्रापि सनातनधर्मकालेजप्रभृति-धर्मसंस्थाः सर्वा अपि निरुद्धा आसन् । शोक प्रस्तावैः सह समवेदनापत्राण्यपि महामण्डलभवने प्रेषितान्य-भूवन्निति । एवमेवान्यत्र सारण्यारण्य-वलिया-गोरक्षपुरेन्द्रप्रस्थप्रभृतिस्थान-तोऽपि शोकप्रस्तावसमवेदनापत्राणीह समागतानि ।

---

## सर्वोत्तमोपाधि पी० एच० डी० परीक्षा ।

अस्यामुपाधि परीक्षायां समुत्तीर्णानां सर्वेषामेव विदुषां नामानि पूर्वं प्रकाशितानि । सम्प्रति निबन्धपरीक्षायां विलम्बेनोपस्थितस्यैकस्य विदुषो नामाधः प्रकाश्यते ।

ज्योतिःसुधाकर, डाक्टर एम० आर० भट्ट एम०, ए० महाशयः ।

कोचिन ( मद्रास )

आगामि वर्षीय पी० एच० डी० परीक्षोपाधिनिवन्धस्यापि मई मासं यावद् विश्वविद्यालयकार्य्यालये समागमनस्यावसरो विद्यते। अतश्च तत्परीक्षार्थिभिः सशुल्कमावेदनपत्रप्रेरणे त्वरा कार्य्या।

## विश्वविद्यालयपारितोषिक वितरणम्।

येषां परीक्षाकेन्द्राध्यक्षाणां कार्य्यं गतवर्षे(१९३४ ई०) प्रशंसनीयमासीत् तेभ्यो विश्वविद्यालयीय शिष्टसमित्या आर्थिकपारितोषिकं वितरितुं निश्चितमिति तेषां नामापि सूर्य्योदये प्रकाशितं विद्यते। तेभ्यः समुचितं पारितोषिक वितरणं प्रकाशितसूचीक्रमेण सञ्जातम् अस्मिन्हायनेऽपि येषां विदुषां केन्द्रकार्य्यंसुव्यवस्थितं प्रशस्तञ्च भविष्यति, तैरवश्यमन्यान्यपुरस्कारेण सहैवार्थिकपुरस्कारोऽपि समुपलब्धः स्यादिति धार्मिकपरीक्षाप्रचारबुद्ध्या प्रयतमानाः केन्द्राऽध्यक्षमहोदया द्विगुणितोत्साहेन स्वकेन्द्रकार्य्यं सञ्चालयिष्यन्तीति प्रबलेयमस्माकीना शुभाशा विद्यते।

यैश्च परीक्षार्थिभिः गतवर्षे(१९३४) स्वविषयेण सहैव धार्मिकविषये विशेषयोग्यतोपलब्धिः समासादिता आसीत्तेभ्योऽपि छात्रवृत्तिपुरस्कारं प्रदातुं शिष्टसमित्या निर्णीतं विद्यते। येषां नाम 'सूर्य्योदये' प्रकाशितं विद्यते। तेभ्योऽपि प्रकाशित सूचीक्रमानुसारेणपुस्तकादि पुरस्कारं पदकादिकञ्च जनवरीमासान्ते वितीर्णं स्यादिति। परीक्षार्थिभिर्धार्मिक्यामस्यां परीक्षायामवश्यं बद्धपरिकराः सम्वर्द्धितोत्साहाश्च भूत्वागामिन्यां १९३६ ई० विश्वविद्यालयीय-परीक्षायां भूयस्यां संख्यायां समुपस्थास्यन्तीति समाशास्महे।

### परीक्षातिथिपरिवर्तनम्।

बहूनां केन्द्राध्यक्षाणामनुरोधेन परीक्षातिथिः परिवर्तिता जाता आगामिमई मासस्य प्रथमतारिकातः ( १। ५।३६ ई० से ५।५।३६ ई० तक ) पञ्चतारिकां यावत् सर्वा अपि सं० धा० वि० वि० परीक्षाः ( आयुर्वेदसम्मिलन्या अपि ) भविष्यन्तीति सर्वैरवधेयम्।

**मन्त्री अ० धार्मिकाध्यात्मिक-संस्कृत वि० वि० परीक्षा,**
**महामंडल भवन, जगतगंज, बनारस।**

---

## अहो! विधेर्विचेष्टितम्।

[ ले०—महामहोपाध्याय-महामहाध्यापकः पं० अन्नदाचरणतर्कचूडामणिः। ]

"वागूजन्मवैफल्यमसह्यशल्यं गुणाद्भुते वस्तुनि मौनिता चेत्।"

अयोह जगति स्वामिनो दयानन्दा न विद्यन्ते। ते हि नश्वरं कलेवरं विहाय

शाश्वतिकं ब्रह्मपदमारूढा इति अशोच्याः, शोच्यास्तु वयं सम्प्रति सञ्जाता ये हि तदीयदर्शनवञ्चिताः स्मः ।

ते हि महात्मानो धैर्य्ये गिरयो गाम्भीर्य्ये जलनिधयो वैदुष्ये बृहस्पतयः क्षमायामवनयः सत्ये युधिष्ठिरसमाः शीलेऽप्रतिमा लेखे गणेशदेवकल्पा एवासन् । धर्मश्रद्धाविरहितेऽस्मिन् समये धर्मश्रद्धासंवर्द्धनाय विज्ञानपद्धत्या तैर्विरचिता हिन्दीभाषामया धर्मकल्पद्रुम-धर्मविज्ञान-गीतार्थचन्द्रिकादयोऽऽमूल्या ग्रन्थाः सन्ति । येषामध्ययनेन सनातनधर्मस्य प्रगाढपाण्डित्यमवश्यं भवति । किं बहुना सर्वदैव शुभकर्मव्यापृतानां निष्कामकर्मयोगिनां तेषां कदापि मया कार्य्यावसादो न दृष्टः । यदा हि महामण्डलेऽहं पूर्वमध्यापनाय श्रीभारतधर्ममहामण्डलीयोपदेशकमहाविद्यालयेऽयासिषम् तदा स्वामिदयानन्दमहोदयान् ग्रन्थलेखनकार्य्यव्यापृतानेवावालोकयम् । कदापि मुखमालिन्यं मया न दृष्टम् । सर्वदैव स्मितपूर्वाभिभाषिणस्ते दृष्टाः । ते हि मत्त आश्रमे ज्येष्ठा आसन्, परन्तु मयि तेषां व्यवहारः श्रद्धामय आसीत् ।

"अनाश्रितः कर्मफलं कार्य्यं कर्म्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥"

इति श्रीमद्भगवद्गीतावाक्यस्य ते साक्षादुदाहरणस्थानीया एवासन् । तेषां हि सनातनधर्म्मकृते यो हि अदम्य उत्साहोऽविश्रान्तः परिश्रम आसीत्, स हि स्मृतिपथमारूढो मामतितरां व्यथयति । तेषां वाग्मितया सर्वेऽपि विमुग्धा भवन्ति स्म । तेषां केनापि सम्प्रदायेन मतेन वा कदापि विरोधस्तु दृष्ट एव नहि । विरोधिनोऽपि तेषां व्याख्यानस्य प्रशंसां कुर्वन्तिस्म । इत्यहो महापुरुषता तेषामव्याहता आसीद् ! सम्प्रति तेषामाकस्मिकब्रह्मीभावेन श्रीभारतधर्म्ममहामण्डलस्य या हि हानिः समजनि सा अपूरणीया विद्यते ।

अस्तु, अद्य तेषामिह स्मृतिपरिषदि सर्वान् समुपस्थितान् संन्यासिनोऽन्तेवासिनश्च गृहस्थान् संस्कृतज्ञान् इदमेवाहं प्राप्तावसरमभिदधे, यत् स्वामिदयानन्द-प्रणीतपुस्तकानामवश्यमध्ययनं विधाय भवन्तः सनातनधर्म-मर्मज्ञा भूत्वा स्वयमपि तद्धर्मनि दृढा भवन्तोऽन्यानपि सनातनधर्ममर्मज्ञान् करिष्यन्तीति । तथा च तत्प्रवर्तितविश्वविद्यालयीयां परीक्षाञ्चोत्तरिष्यन्ति प्रचारयिष्यन्ति चेति । एतदेव संन्यासिनां ब्रह्मभावमुपेतानां निःश्रेयसपदासीनानां तेषां स्मृतिरक्षणं समुचितं मे प्रतिभाति । इत्येतावदेवाभिधाय स्वीयां श्रद्धाञ्जलिं स्वामिवर्य्याणां सविधे समर्पये ।

[ काश्यां शोकपरिषदि पठितमेतत् सं० स० ]

---

# श्रीस्वामिदयानन्दमहानुभावानामाकस्मिक-ब्रह्मसायुज्ये शोकोच्छ्वासः।

( ले०:—पं० श्री घनश्यामचन्द्रशास्त्री "विद्यामार्तण्डः"
आचार्य्यः—"लक्ष्मणगढ़" श्रीऋषिकुल-ब्रह्मचर्याश्रमस्थः )

शिक्षादायिनि शर्म्मदे हितकरे विप्रान्वये सज्जनि
लब्ध्वा वङ्गभुवि प्रतापविजिताशामण्डलः पण्डितः।
नित्यं ब्रह्म विचिन्त्य धर्म्मनिरतस्त्यक्त्वैपणो निर्भयो
"ज्ञानानन्द" गुरोरनुग्रहवशाद्योऽभूत् परिव्राण्मतः ॥ १ ॥

पाश्चात्येऽद्भुतकारके मुनिनते प्राच्ये च वैज्ञानिके
सन्मार्गे तुलनादृशाऽकुरुत यः प्राच्यं विविच्योत्तमम्।
व्याख्यानञ्च यदीयमर्थजनकं श्रुत्वा कृतार्था नरो
ब्राह्मीभावमगादयं स मुनिराट् स्वामी दयानन्दकः ॥ २ ॥

गीताचन्द्रिकया युताञ्छिवकरान् श्रीधर्मकल्पद्रुमा-
दीन् ग्रन्थान् नितरां प्रणीय जनताश्रद्धास्पदं योऽभवत्।
श्रीमद्भारतधर्म्ममण्डलमहे मन्त्री जितात्मा गुणी
हिन्दूद्धाररतो दयैकसरणिर्हा! ब्रह्मसायुज्यभाक् ॥ ३ ॥

विश्वस्मिन् धृतजन्मनां तनुजुषां पञ्चत्वमस्ति ध्रुवं
नास्मिन् कस्य बलं, तथाप्यसमये शोकाय नाशः स्मृतः।
निर्द्धार्य्येत्थमहं जगत्पतिपदे संप्रार्थये साञ्जलिः
शोकाकीर्णजनान् विधाय सुखितान् 'ब्रह्मैव' साधुर्भवेत् ॥ ४ ॥

हा! सनातनधर्म्मस्य, व्याख्याता ग्रंथराशिकृत्।
विद्याप्रचारनिपुणो दयानन्दो दिवं गतः ॥ ५ ॥

तत्स्मृत्यां धर्मसुरवाग्विश्वविद्यालयादयः।
संवर्द्धन्तां महेशानीचरणाब्जदयावशात् ॥ ६ ॥

काशीविश्वेश्वरो वन्द्यो दयानन्दकृतेऽधुना।
श्रीघनश्यामचन्द्रेण, प्रार्थ्यते चिरशान्तये ॥ ७ ॥

——:o:——

ॐ नमः श्रीसच्चिदानन्दाय ।

# श्रीसन्न्यासगीता

## प्रथमोऽध्यायः ।

अनाद्यनन्तवैराजलीलैश्वर्यविभावन ! देशकालाऽपरिछिन्न ! जयस्वामिञ्जयोऽस्तु ते ॥ १ ॥ नमामि जगदुत्पत्तिस्थितिप्रलयकारणम् ! सर्वात्मानं परैश्वर्यमवाङ्मनसगोचरम् ॥ २ ॥ कर्मसाक्षिन् ! भक्तचित्तविहारिन् ! भूतभावन ! सर्वबुद्धिप्रेरकत्वात् स्मृतो लोके जगद्गुरुः ॥३॥ प्रार्थयेऽहं ततो देव ! कृपया प्राणिनां धियः । जगत्कल्याणैकहेतुज्ञानमार्गे प्रवर्तय ॥ ४ ॥ प्रयागे नैमिषारण्ये विशालायां त्रिपुष्करे ! गङ्गासरस्वतीतीरे नर्मदायास्तटे तथा ॥ ५ ॥ तापीगोदावरीरेवायमुनागण्डकीतटे । हरिद्वारे कुरुक्षेत्रे तीर्थेष्वन्येष्वपि स्वयम् ॥ ६ ॥ ऋषयो मुनयः सिद्धा महात्मानश्चरन्ति यत् । तज्जगन्मङ्गलायेति निश्चितं तत्त्वदर्शिभिः॥७॥ सन्तः कारुणिका नित्यं तीर्थव्याजेन सङ्गताः । दुष्कृतानि व्यपोहन्ति दिव्यज्ञानोपदेशिनः ॥ ८ ॥ नानाशास्त्रकथाख्यानकथनश्रवणादिभिः । उद्धरन्ति जनान् सर्वान् पावयन्ति परस्परम् ॥ ९ ॥ तस्मात्सर्वात्मना नूनं सङ्गं कुर्वीत साधुभिः । सर्वोपकारनिरताः सन्तः संसारतारकाः ॥ १० ॥ अस्ति वै नैमिषारण्यं सुप्रसिद्धं तपोवनम् । ऋषिभिर्मुनिभिर्जुष्टमनेकाश्रमशोभितम् ॥ ११ ॥ रसालैः सालहिन्तालैः प्रियालैश्च प्रियङ्गुभिः । तालैस्तमालैर्मन्दारैर्नागपुन्नागचम्पकैः ॥ १२ ॥ द्राक्षेक्षुरम्भाजम्बूभिः कल्पवृक्षसमृद्धिभिः । पनसाश्वत्थन्यग्रोधैः पूगैः किंशुकचन्दनैः ॥ १३ ॥ कुन्दैः कुरबकैर्नीपैर्दिव्यपुष्पफलच्छदैः । द्रुमैः कामदुघैरन्यैः प्रपूर्णश्चातिशोभनम् ॥१४॥ मनोज्ञकुसुमामोदनानावीरुद्विराजितम् । मल्लिकामाधवीजातिवासन्तीभिः सुमण्डितम् ॥१५॥ सरित्सरोभिरच्छोदैर्लसद्रुचिरवालुकैः । कुमुदोत्पलकल्हारशतपत्रादिशोभितैः ॥१६॥

हंससारसकादम्बचक्रारव्धकलस्वनैः । गुञ्जद्भ्रमरझङ्कारनादितैः समलङ्कृतम् ॥ १७ ॥ फलमूलाशनैर्दान्तैश्चारुकृष्णाजिनाम्बरैः । सूर्यवैश्वानरसमैस्तपसा भावितात्मभिः ॥ १८॥ महर्षिभिर्मोक्षपरैर्यतिभिर्नियतेन्द्रियैः । ब्रह्मभूतैर्महाभागैरुपेतं ब्रह्मवादिभिः॥१९॥ अब्भक्षैर्वायुभक्षैश्च पर्णाहारैस्तथैव च । चीरवल्कलसंवीतैः सर्वदाऽध्युषितं शिवम् ॥ २० ॥ अदंशमशकं रम्यमनालोकितदुर्जनम् । अश्रुताधिव्याधिदुःखमवितर्क्यतपःफलम् ॥ २१ ॥ यत्र सिंहादयो हिंस्रा अपि सौहार्दमास्थिताः । निर्वैराः क्रौर्यनिर्मुक्ताश्चरन्त्येणैश्च गोकुलैः ॥ २२ ॥ शकुन्ता यत्र दृश्यन्ते मधुरस्वरगायनाः । ऋषिघुष्टाः सामगीतीर्गायन्ति शुकसारिकाः ॥ २३ ॥ तत्रैकदा पुण्यदेशे नैमिषे कल्मषद्विषि । समवेता महात्मानः सिद्धा ब्रह्मर्षिसत्तमाः ॥ २४ ॥ नाना तपःप्रदेशेभ्य आश्रमेभ्यश्च सर्व्वतः । तीर्थेभ्यो विविधेभ्यश्च प्रयता लोकपावनाः ॥ २५ ॥ सशिष्याः साग्नयः शान्ताः पश्यन्तो वनमुत्तमम् । पावयन्तो जनान्मार्गे समाजग्मुः कृपालवः ॥ २६ ॥ अल्पज्ञान् प्राणिनः सर्वान् सत्सङ्गेनोद्दिधीर्षवः । तीर्थयात्राप्रसङ्गेन भूमौ सन्तश्चरन्ति हि ॥ २७ ॥ स्नाताः कृतार्चनाश्चीर्णदेवर्षिपितृतर्पणाः । तत्रैवोषुः कियत्कालं ते कथालापनिर्वृताः ॥२८॥ दिव्यज्ञानोपपन्नास्ते मुनयः शंसितव्रताः । तत्रैकदा पर्यटन्तः समैक्षन्तैकमाश्रमम् ॥ २९ ॥ बलिहोमार्चितं दिव्यं सुसंमृष्टानुलेपनम् । शुष्यच्छ्यामाकनीवारं वेदिभिश्च विराजितम् ॥ ३० ॥ विशालैरग्निशरणैः स्रुग्भाण्डैराचितं शुभैः । दिव्यपुष्पोपहारैश्च सर्वतोऽभिविराजितम् ॥ ३१ ॥ शरण्यं सर्वभूतानां ब्रह्मघोषनिनादितम् । दिव्यमाश्रयणीयं तमाश्रमं श्रमनाशनम् ॥ ३२ ॥ प्रविशन्तः परं प्रीताः सर्व एव महर्षयः । ज्ञानोपदेशलाभाय पर्याप्तं मेनिरे स्थलम् ॥ ३३ ॥ तदैवोपस्थितं तत्र याज्ञवल्क्यं महामुनिम् । सूर्यतेजःप्रतीकाशं सर्वशास्त्रविशारदम् ॥ ३४ ॥ धर्मधर्माङ्गतत्त्वज्ञं वेदवेदाङ्गपारगम् । कर्मज्ञानोपासनाद्यर्थसूक्ष्मतत्त्वावमर्शिनम् ॥ ३५ ॥ जितेन्द्रियं योगपरं मुनिवृन्दनिषेवितम् । यदृच्छया पर्यटन्तं दृष्ट्वा मुमुदिरे भृशम् ॥ ३६ ॥

अथातिपूताः सुप्रीता मुनयो दिव्यदृष्टयः । भक्त्या प्रणामान् कुर्व्वाणाः समन्तादुपतस्थिरे ॥ ३७ ॥ चक्रिरे तस्य सत्कारं विधिनाऽऽसनसंस्थितम् । उपाजह्रुश्च सलिलं पुष्पमूलफलं शुचि ॥ ३८ ॥ गृहीतार्घ्यं ततः प्रीतं तं मुनिं ब्रह्मवादिनम् । विनयावनताः सर्वे सादरञ्चेत्थमूचिरे ॥३९॥ त्वद्दर्शनेन पूताः स्मः कृतकृत्या बभूविम । वयमत्र महाभाग ! करुणावरुणालय ! ॥४०॥ वयं सर्वेऽधुना तात ! प्रपन्नास्त्वां महामुने ! । शाधि ज्ञानप्रदानेन श्रूयसे ज्ञानभास्करः ॥ ४१ ॥ इति ब्रुवत्सु सर्वेषु याज्ञवल्क्यो महामतिः । अतिगम्भीरया वाचा स्मयमान उवाच ह ॥ ४२ ॥ साधु साधु महाभागाः ! प्रीतोऽस्मि विनयेन वः । ज्ञानतत्त्वं परं पुम्भिः शीलेनैवात्र लभ्यते ॥४३॥ शीलं हि परमा विद्या शीलमेव परं तपः । नैव शीलात्परं किञ्चित् तस्माच्छीलं सदाश्रयेत् ॥ ४४ ॥ लोकोपकारकर्तॄणि चरितानि भवादृशाम् । तदहं वः प्रवक्ष्यामि यत्प्रष्टव्यं तदुच्यताम् ॥ ४५ ॥ तच्छ्रुत्वा मुनयः प्रीता मिथः सर्वे परामृशन् । पृच्छेत्सर्वहितं किञ्चित्कस्तादृग्बुद्धिमानिति ॥ ४६ ॥ एवं विचारयन्तस्ते निश्चित्य जैमिनिं मुनिम् । प्रार्थयन्त प्रश्रयेण भक्त्या परमया युताः ॥ ४७ ॥ भगवन् ! सर्वधर्मज्ञ ! त्वमस्मासु मतोऽधिकः । त्वमेक एव जानासि कर्मणो गहनां गतिम् ॥ ४८ ॥ तस्माद्वृतोऽसि भो ब्रह्मन् ! तत्त्वं धर्मस्य पृच्छ्यताम् । बहुशाखस्य धर्मस्य दुर्गमत्वं विदुर्बुधाः ॥ ४९ ॥ अतो धर्मञ्च धर्माङ्गान्यजानन्तोऽथ मोहिताः । वेदतत्त्वार्थविज्ञानहीनत्वाल्लक्ष्यविच्युताः ॥ ५० ॥ विवदन्ते नरा यत्र यत्र सन्दिहते सदा । तमेवोद्दिश्य विषयं जिज्ञासा क्रियतामिह ॥ ५१ ॥ विविधेनैव तापेन परितप्ताः शरीरिणः । येन ज्ञानेन कल्याणमाप्नुयुस्तद्विचार्यताम् ॥५२॥ एतन्निशम्य सत्कृत्य तान्मुनीनथ जैमिनिः । मुनिराजं याज्ञवल्क्यं सत्कुर्व्वन्निदमब्रवीत् ॥ ५३ ॥

जैमिनिरुवाच ।

अहो पुण्यमहो भाग्यं सफलश्चाऽद्य नस्तपः । जातमेवं विधे क्षेत्रे भवतो दर्शनं यतः ॥ ५४ ॥ नूनमेषा भगवतः सर्वान्तर्या-

मिणो दया । यदस्माभिरियं प्राप्ता भवतः पुण्यसङ्गतिः ॥ ५५ ॥ अद्य ज्ञास्यामहे तत्त्वं गूढं वेदोपपादितम् । सारञ्च सर्वशास्त्राणां त्वन्मुखाम्भोजनिस्सृतम् ॥ ५६ ॥ तद् ब्रूहि भगवन् पूर्वमेताज्जिज्ञासितं हि नः । को भावः तस्य भेदास्तु कियन्तः परिकीर्तिताः ॥ ५७ ॥ का श्रद्धा कीदृशी चेयं भावशोधनकारिणी । कियन्त एव वा तस्या भेदाः ख्याता दयानिधे ! ॥ ५८ ॥ त्वदुक्तश्रवणोत्पन्नश्रद्धावृद्ध्या यथा वयम् । विशुद्धभावाः संसारं सन्तरेम तथा कुरु ॥५९॥ अधिगन्तुञ्च भगवद्दिव्यभक्त्यधिकारिताम् । शक्नुमो ब्रह्मनिष्णात ! ब्रूहि सर्वं यथोचितम् ॥ ६० ॥ तदाकर्ण्य क्षणं ध्यात्वा याज्ञवल्क्योऽनुमोद्य तत् । कृपया परयाविष्टः प्रवक्तुमुपचक्रमे ॥ ६१ ॥

याज्ञवल्क्य उवाच ।

भाव एवाऽत्र सूक्ष्मातिसूक्ष्मतत्त्वं निगद्यते । भावात्सूक्ष्मतरं किञ्चित्तत्त्वं न परिलक्ष्यते ॥ ६२ ॥ भावातीतमपि ब्रह्म ज्ञायते योगिभिः सदा । साहाय्येनैव भावस्य प्रथमं तत्त्ववेदिभिः ॥६३॥ ब्रह्मसाक्षात्कृतौ भावमन्तिमालम्बनं विदुः । सारूप्यावस्थितौ वृत्तेः सदसद्भावभेदतः ॥ ६४ ॥ उत्पद्येते तु भावेन पुण्यपापे उभे अपि । सूक्ष्मावस्था तु भावस्य त्रैविध्यमवलम्बते ॥ ६५ ॥ आध्यात्मिकाऽधिदैवाऽधिभौतिकानीति शास्त्रतः । ज्ञानिना भक्तराजेन तत्त्रयस्यावलम्बतः ॥ ६६ ॥ ब्रह्मेश्वरविराड्रूपैर्भगवान् दृश्यते क्रमात् । ब्रह्माण्डेषु च सर्वत्र ज्ञानिनस्तत्त्वदर्शिनः ॥६७॥ भावांस्त्रीन्सततं सम्यग्वीक्षन्ते सर्ववस्तुषु । भावो हि स्थूलावस्थायां सदसद्रूपमास्थितः ॥ ६८ ॥ स्वर्गञ्च नरकञ्चैव प्रापयत्यत्र मानवान् । श्रद्धाया जनको भाव आत्मोन्मुखकृताविह ॥ ६९ ॥ अन्तःकरणवृत्तेश्च श्रद्धैका मूलकारणम् । त्रिविधा भवति श्रद्धा देहिप्रकृतिभेदतः ॥ ७० ॥ सात्त्विकी राजसी चैव तामसीति बुभुत्सवः ! । तासान्तु लक्षणं विप्राः शृणुध्वं भक्तिभावतः ॥७१॥ श्रद्धा सा सात्त्विकी ज्ञेया विशुद्धज्ञानमूलिका । प्रवृत्तिमु-

लिका चैव जिज्ञासामूलिकाऽपरा । विचारहीनसंस्कारमूलिका त्वन्तिमा मता ॥ ७२ ॥

इति श्रीसन्न्यासगीतायां महर्षिसमागमो नाम प्रथमोऽध्यायः ॥

## द्वितीयोऽध्यायः ।

जैमिनिरुवाच ।

सर्वशास्त्रार्थतत्वज्ञ ! धर्माङ्गज्ञानभास्कर ! त्वत्समो वेदवेदाङ्गनिष्णातो नेतरो जनः ॥१॥ अतस्त्वां धर्मगं धर्मं पृच्छामो भक्तितो वयम् । ज्ञेयं स्फुटं सर्वमुक्त्वा जिज्ञासूननुकम्पय ॥ २ ॥ दुर्ज्ञेयं दुर्गमश्चापि धर्मतत्त्वं नृणामिह । बहुशाखश्च वेदोऽयं दुर्बोध इति कीर्त्यते ॥ ३ ॥ सन्ति नाना पुराणानि स्मृतयो दर्शनानि च । व्यञ्जयन्ति च भिन्नानि स्वमतानि पृथक् पृथक् ॥ ४ ॥ आचार्या बहवस्तेषां मतश्चाऽपि विभिद्यते । तत एव वयं सर्वे तत्त्वं ज्ञातुं न शक्नुमः ॥ ५ ॥ भगवान् दर्शितो दैवाद्विधात्रा ज्ञानसागरः । अतस्त्वां परिपृच्छामः शाधि नः शरणागतान् ॥ ६ ॥ ब्रूहि साङ्गं धर्मरूपं सरहस्यं सलक्षणम् । कर्मज्ञानोपासनानां तत्त्वञ्चाऽपि पृथक् पृथक् ॥ ७ ॥ निवृत्तिधर्म्मरूपस्य सन्न्यासस्य च तत्त्वतः । प्रशंसार्हस्य तत्त्वज्ञ निर्णयं वक्तुमर्हसि ॥ ८ ॥ अनुकम्पासमुद्रोऽसि विश्रुतो जगतीतले । तथोपदिश्यतां ब्रह्मन् कृपया परयान्वितः ॥९॥ यथा श्रुतौ दर्शनेषु पुराणेषु स्मृतिष्वपि । यद्वेद्यं वास्तवं वस्तु विज्ञातं स्यादशेषतः ॥१०॥ कृतार्थयास्मज्जननं पूरयस्व मनोरथान् । नृणां निःश्रेयसायैव दर्शनं स्याद्भवादृशाम् ॥ ११ ॥ जैमिनेर्मुनिवर्यस्य वचसा मुदितो भृशम् । याज्ञवल्क्यो महातेजाः प्रहसन्निदमब्रवीत् ॥ १२ ॥

याज्ञवल्क्य उवाच ।

प्रीतोऽस्मि मुनिशार्दूल ! ज्ञातं युष्मत्समीप्सितम् । नूनं विश्वहितायैव प्रश्नोऽयं मुनिसत्तम ॥ १३ ॥ यावत्कालं प्रवत्स्यामि तीर्थेऽस्मिन् व्रतमास्थितः । तावद्वक्ष्ये यथाकालं तत्त्वं वेदादिनिश्चितम् ॥ १४ ॥ यथाधिकारं सर्वाणि शास्त्रतत्त्वान्यहं क्रमात् ।

श्रावयन्नपनेष्यामि युष्माकं सर्वसंशयान् ॥ १५ ॥ यत्राऽहमभिधास्यामि तदग्रे ख्यातिमेष्यति । नाम्ना सन्न्यासगीतेति सारभूता श्रुतेः क्षितौ ॥ १६ ॥ पठनाच्छ्रवणाद्यस्या जिज्ञासुश्छिन्नसंशयः । ईशिष्यते मुक्तिपदप्राप्तये नाऽत्र संशयः ॥ १७ ॥ अन्येऽपि यदि सन्देहा भवेयुर्मनसि स्थिताः । तदाऽऽख्येयास्तेऽपि सर्वे निर्विशङ्कं ममाग्रतः ॥ १८ ॥

जैमिनिरुवाच ।

भगवन्! सर्वधर्मज्ञ! ब्रूहि धर्मस्य लक्षणम् । के हि साधारणा धर्मा विशिष्टाः के च कीर्तिताः ॥ १९ ॥ कियन्ति धर्मस्याङ्गानि विस्तरेण वदस्व नः । यथा नराः परं श्रेय इह च प्रेत्य चाप्नुयुः ॥ २० ॥

याज्ञवल्क्य उवाच ।

यतोऽभ्युदयमुत्कृष्टमैहलौकिकमाप्नुयुः । हितश्चाऽमुष्मिकं निःश्रेयसं धर्मः स कीर्तितः ॥ २१ ॥ श्रुतिस्मृत्युदितो धर्म्मस्त्वधर्मस्तद्विपर्ययः । यतः स्वर्गश्च मोक्षश्च स धर्म्मो विदुषां मतः ॥ २२ ॥ धर्मात्प्रवर्द्धते सत्वं पुरुषार्थप्रवर्द्धनम् । जगद्धारणहेतुत्वाद्धर्मत्वं तस्य चेष्यते ॥ २३ ॥ प्रकाशकत्वात्सत्त्वस्य ज्ञानहेतुत्वमीर्य्यते । लघुत्वादूर्ध्वनेतृत्वं सत्त्वाद्धर्मो हि निर्वभौ ॥ २४ ॥ स्वतः सत्वाभिवृद्धिर्यैर्मनोवाक्कायकर्मभिः । तानि सर्वाणि कर्माणि धर्म इत्येष निर्णयः ॥ २५ ॥ धर्म्याचाररतः सत्त्वं वर्द्धयन् परमोन्नतिम् । ऐहिकीमामुष्मिकीं च प्राप्य मोक्षं ततोऽश्नुते ॥ २६ ॥ धर्म्मं यो बाधते धर्मः कुधर्म्मः स हि वस्तुतः । अविरोधी तु यो धर्म्मः स धर्मो मुनिपुङ्गवाः! ॥ २७ ॥ उक्तः सामान्यधर्मोऽयं विशिष्टस्त्वतिरिच्यते । अधिकारिविभेदेन स ह्यनेकविधः स्मृतः ॥ २८ ॥ सधवाविधवादीनां स्त्रीणां भेदस्य दर्शनात् । प्रत्येकं भिद्यते धर्मस्तथा पुंस्वपि सर्वथा ॥ २९ ॥ मूर्खपण्डितसंन्यस्तगृहस्थादिविभेदतः । सर्वेषामेव प्रत्येकं धर्माः प्रोक्ताः पृथक् पृथक् ॥ ३० ॥ सर्वत्र व्यापकादस्मात् सर्वजीवहितैषिणः । धर्मात् सनातनादेव सर्वे धर्म्माः समुत्थिताः ॥ ३१ ॥ सनातने ह्यार्यधर्मे वैदिकाचारपालना । सदाचारसतिधर्मोध्यात्मतत्त्वविचारणा

॥ ३२ ॥ वर्णाश्रमाधीनकर्मविभागश्चात्र विद्यते । अस्मादन्योऽनार्यधर्म इत्यस्मच्छास्त्रनिश्चयः ॥ ३३ ॥ यैवं सदाचारवर्णाश्रमधर्मानुगामिनी । सर्वस्वं मनुते वेदं साऽऽर्यजातिरिति स्मृतिः॥३४॥ एतद्भिन्नाऽनार्यजातिः सदाचारादिवर्जिता । अन्यदप्येवमेवोह्यं नोच्यते विस्तृतेर्भयात् ॥ ३५ ॥ अङ्गानि त्रीणि धर्मस्य दानं यज्ञस्तपस्तथा । स्कन्धरूपाणि धर्मस्य शाखिनः पावनानि हि ॥ ३६ ॥ दानञ्चापि त्रिधा प्रोक्तं विद्याऽर्थाभयदानतः । तत्रापि गुणभेदेन नवधा दानमीर्यते ॥ ३७ ॥ एवं तपस्त्रिधा ज्ञेयं कायिकं वाचिकं तथा । मानसञ्चाथ गुणतः प्रत्येकं त्रिविधं पुनः ॥ ३८ ॥ यज्ञधर्मविभेदास्तु मुनीनां बहवो मताः । कर्मज्ञानोपासनाख्या भेदा मुख्यास्त्रयः स्मृताः ॥ ३९ ॥ कर्मयज्ञस्य षड् भेदा नित्यं नैमित्तिकं तथा । काम्यमाध्यात्मिकं चैवाऽधिदैवञ्चाऽधिभौतिकम् ॥ ४० ॥ सत्त्वादिगुणयोगेन भेदास्तत्रापि पूर्ववत् । अतोऽष्टादशधा कर्म प्रत्येकं गुणयोगतः ॥ ४१ ॥ तथैवोपासनायज्ञो मुनिभिर्बहुधा मतः । परं मुख्यप्रभेदास्तूपासनापद्धतेरिमे ॥ ४२ ॥ उपास्तिर्ब्रह्मणस्त्वाद्या द्वितीया सगुणस्य च । तृतीया स्मर्यते लीलाविग्रहोपासना बुधैः ॥ ४३ ॥ चतुर्थी पितृदेवर्षिगणानामस्त्युपासना । अन्तिमा क्षुद्रदेवानां प्रेतादीनां विधीयते ॥ ४४ ॥ अन्येऽपि तस्याश्चत्वारो भेदाः साधनपद्धतेः । तत्रादिमो मन्त्रयोगः स्थूलध्यानैकसाधनः ॥४५॥ द्वितीयो हठयोगः स्याज्ज्योतिर्ध्यानैकसाधनः । लययोगस्तृतीयोऽसौ बिन्दुध्यानविधानकः॥४६॥ राजयोगोऽन्तिमस्तत्र ब्रह्मध्यानं विधीयते । भेदा नवानामप्येषां गुणतः सप्तविंशतिः ॥ ४७ ॥ श्रवणं मननञ्चैव निदिध्यासनमेव च । त्रिधैवं ज्ञानयज्ञोऽपि नवधा स्याद् गुणाश्रयात् ॥ ४८ ॥ इत्यन्वशासुर्धर्मस्य मुख्यान् भेदानशेषतः । चतुर्विंशतिसंख्याकान् मुनयस्तत्त्वदर्शिनः ॥ ४९ ॥ एतेषामपि धर्माङ्गभेदानां गुणभेदतः । भेदा द्विसप्ततिर्भूयो भवन्तीति विभाव्यताम् ॥ ५० ॥ एषु जीवहितायैकमप्यङ्गं यद्यनुष्ठितम् । व्यष्टिबुद्ध्या नरैरत्र यज्ञ इत्युच्यते तदा ॥ ५१ ॥ समष्ट्या सर्वजीवानां हिताय यदनुष्ठितम् । एक-

अपि तदा तच्च महायज्ञ इतीर्यते ॥ ५२ ॥ सत्त्वेन सेवितं ह्येक-मप्यङ्गं पूर्णरूपतः । प्रापयत्येकमप्येतन्नरं मुक्तिपदं क्षणात् ॥५३॥ यथा स्फुलिङ्गश्चैकोऽपि विश्वं दहति सेन्धनः । एवं दहत्येकमङ्गमपि कर्माणि सर्वशः ॥ ५४ ॥ अहिंसाज्ञानयोगादिधर्मोपाङ्गाश्रयेण ह । जगत्यां बौद्धधर्मोऽपि प्रथितः प्रचलिष्यति ॥ ५५ ॥ तथा द्वीपान्तरेष्वेवं केतुमालादिषु क्वचित् । वर्षेषु सत्यतास्वार्थत्यागिता च गुणादरः ॥ ५६ ॥ ज्ञानार्जनस्पृहा नित्यं नियमानाञ्च पालनम् । इमाः सर्वा भविष्यन्ति प्रशस्ता धर्मवृत्तयः ॥ ५७ ॥ यासामाल-म्बनादेव पाश्चात्याः परमोन्नताः । माननीयत्वमेष्यन्ति जगत्यां सुप्रतिष्ठिताः ॥ ५८ ॥ पितॄणां गुरुवृद्धानां शुश्रूषा राजभक्तता । धैर्यञ्च ब्रह्मचर्यञ्च क्षात्रधर्मानुरागिता ॥५९॥ इत्यादि कतिचिद्धर्म-वृत्तिबाहुल्यसेवनात् । प्रख्यास्यति जयप्राणो देशः स्वल्पोऽपि भूतले ॥ ६० ॥ अत एवान्यदेशीयाः परोत्कर्षासहिष्णवः । अर्चि-ष्यंति तथाऽप्येनं केतुमालादिवासिनः ॥६१॥ तदैव प्रतिपद्यध्वे सम्म-न्यध्वे क्षणं यदि । ता धर्मवृत्तयोऽप्यार्यधर्म्मोपाङ्गानि सन्ति हि ॥६२॥ कानि कस्येति कथ्यन्ते धर्म्मोपाङ्गानि तत्त्वतः । तपसो मानस-स्याहुः सत्यं वै मुनिसत्तमाः ! ॥ ६३ ॥ तथा कलिप्रधानस्य दानस्य स्वार्थत्यागिता । पितृपूजोपासनायाः क्षात्रं कर्म तु कर्मणः ॥६४॥ समष्टिरूपेणैतानि देशजात्यर्थकानि चेत् । महायज्ञोपाङ्गभावं भजन्तीति विभाव्यताम् ॥ ६५ ॥ अवस्थाभेदतश्चैका धर्मस्य वृत्तिरास्वपि । भवेद्विभिन्नधर्माङ्गोपाङ्गमित्यपि बुध्यताम् ॥ ६६ ॥ मनोवृत्त्या सह स्वार्थत्यागः सम्बध्यते यदा । तपसः खलु जानीहि तमुपाङ्गं तदा मुने ! ॥ ६७ ॥ त्यागोऽसौ चेत्प्रकाशयेत यशोऽर्थे दानिना स्वयम् । तदा स्याद्दानधर्मस्योपाङ्गमेव न संशयः ॥ ६८ ॥ एवं विज्ञानवित्कश्चिद्यदि पश्येत् समाहितः । तदा निश्चिनुया-त्तस्य धर्मस्योत्तमतां क्षणात् ॥ ६९ ॥ भूमौ विभिन्नधर्माणामाचार्याः सर्व एव हि । ते सनातनधर्माङ्गसाहाय्यं प्रतिपेदिरे ॥ ७० ॥ धृतिर्दानं क्षमाऽस्तेयं शौचमिंद्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो धर्मसामान्यवृत्तयः ॥ ७१ ॥ एताः सर्वान्यधर्मेषु सर्वास्त्वखिल-

जातिषु । सर्वमर्त्यसमाजे च व्याप्ताः सन्तीति मन्यताम् ॥ ७२ ॥ अत एवास्य धर्मस्य गरीयस्त्वं सुसिद्ध्यति । सर्वधर्मप्रसविता तत-श्चैषोऽत्र गीयते ॥ ७३ ॥ यं पृथक् धर्मचरणाः पृथक् धर्मफलैषिणः । पृथक् धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः ॥ ७४ ॥

इति श्रीसन्न्यासगीतायां साधारणधर्म्मनिरूपणं नाम द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

### जैमिनिरुवाच ।

व्याख्यातं कृपया ब्रह्मन् ! धर्मतत्त्वविदा त्वया । साङ्गं धर्मं समाकर्ण्य सञ्जाताश्छिन्नसंशयाः ॥ १ ॥ अथाख्याहि मुने ! दान-धर्मतत्त्वमशेषतः । यस्मिञ् ज्ञाते नराः सर्वे लभेरन् परमं हितम् ॥ २ ॥ ऋषीणां तद्वचः श्रुत्वा याज्ञवल्क्यो मुनीश्वरः । कृपया परयाविष्टः प्रहसन्निदमब्रवीत् ॥ ३ ॥

### याज्ञवल्क्य उवाच ।

श्रूयतां दानधर्मस्य रहस्यं मुनयोऽधुना । त्रीण्यङ्गानीह धर्मस्य दानं यज्ञस्तपस्तथा ॥ ४ ॥ त्रिष्वप्यंगेषु धर्मस्य दानमेकं विशि-ष्यते । विशेषतः कलावेतत्प्रधानं हितसाधनम् ॥ ५ ॥ निर्वि-शेषतया सर्वे यतो दानेऽधिकारिणः । तस्माद्दानं प्रशंसन्ति सर्व-शास्त्रविशारदाः ॥ ६ ॥ स्वसम्बन्धमपाकृत्य यदन्यस्मै प्रदीयते । तद्दानमिति सामान्यलक्षणं मुनयो विदुः ॥ ७ ॥ तत्रापि दत्त-वस्तुभ्यः सम्बन्धं मानसं स्वतः । सर्वथा क्षपयेद्योऽसौ स वदान्य-शिरोमणिः ॥ ८ ॥ अतीव दुष्करन्त्वेतत्कर्म प्रोक्तं मनी-षिभिः । यदपाक्रियते चित्तसम्बन्धश्चिरसम्भृतः ॥ ९ ॥ सुसा-धितं सर्वमेव दानिना तेन भूतले । सुपात्रे दत्तवस्तुभ्यश्चित्तं यस्य निवर्तते ॥ १० ॥ अन्ये धर्माः कष्टसाध्यास्तपोयज्ञादयः क्षितौ । बहुश्रमेण सिद्ध्यन्ति मनोवाक्कायनिग्रहात् ॥ ११ ॥ सुखसाध्यं दानमेव सर्वधर्मेषु कीर्तितम् । दीयते देयमुत्थाप्य हस्तेनेयान् श्रमस्त्विह ॥ १२ ॥ दानमर्थस्य विद्याया अभयस्येति

च द्विजाः !। इत्येवं त्रिविधं दानं मया पूर्वमुदीरितम् ॥ १३ ॥ भवत्यभयदानं तद् गुरुणा करुणावशात्। संसारभयनाशाय सम्यग् यदुपदिश्यते ॥ १४ ॥ संसारभयसन्त्रस्तजीवानामाबिभीषताम्। शक्ताः सद्गुरवस्तत्र भयं मुख्यं व्यपोहितुम् ॥ १५ ॥ यस्मात्सर्वेऽभयं दातुं नैव शक्ताः क्षितौ जनाः। तस्मादनुपयोगित्वाद्दानमेतदुपेक्ष्यते ॥ १६ ॥ विद्यादानञ्चार्थदानमालोच्येते ततोऽधुना। तत्र पूर्वं ब्रह्मदानापरपर्य्यायमुच्यते ॥ १७ ॥ कायेन मनसार्थेन विद्यावृद्धिमिहेच्छता। यद्दानं दीयते सम्यक् ब्रह्मदानं तदीर्य्यते ॥ १८ ॥ स्थापनं पाठशालानां महाविद्यालयस्य च। दुर्लभप्राक्तनानर्घ्यपुस्तकानां प्रकाशनम् ॥ १९ ॥ तथा विरचनं नव्यग्रन्थानामुपयोगिनाम्। दानञ्च पुस्तकादीनां विद्यार्थिभ्योऽथ पाठनम् ॥ २० ॥ एवं लेखनशैलीनां हितबुद्ध्या प्रवर्तनम्। ज्ञेयान्येतान्यपि ब्रह्मदानान्तर्भावितानि वै ॥ २१ ॥ हस्त्यश्वरथवस्त्रान्नकन्यारत्नावनीगृहम्। दीयते श्रद्धया यत्र चेतनाचेतनात्मकम्। ॥ २२ ॥ धनैश्वर्यादिकं सर्वं दीयमानमथार्थिने। ऋषिभिः प्रोच्यते सम्यगर्थदानमिति स्फुटम् ॥ २३ ॥ सर्वाण्येतानि दानानि गुणत्रयविभागतः। प्रत्येकं त्रिविधानीह भवन्ति द्विजसत्तमाः! ॥२४॥ देशकालानुरोधेन पात्रायानुपकारिणे। अनीप्सितयशःसौख्यं दीयते तद्धि सात्त्विकम् ॥ २५ ॥ जनः कीर्तिफलाकाङ्क्षी तथा प्रत्युपकारधीः। यद्ददात्युपकर्त्रे च दानं तद्राजसं स्मृतम् ॥२६॥ सदेशकालपात्रादिज्ञानसन्मानवार्जितम्। सरोषकष्टं यद्दानं तत्तु तामसमुच्यते ॥२७॥ सात्त्विकेनैव दानेन मुक्तिः सम्पद्यते द्विजाः!। राजसेन सुखैश्वर्य्यमिहामुत्र प्रपद्यते ॥ २८ ॥ तामसेनाश्नुते दुःखं कदाचिच्च्यवतेऽप्यधः। तस्माद्देयं विधायैव दानं सत्त्वगुणोर्जितम् ॥२९॥ क्षुद्रवस्तुप्रदानादिकर्मसामान्यमात्रतः। अहो मुक्तिः कथं सिद्ध्येद् दुर्लभा सा तु गीयते ॥ ३० ॥ इत्येवमनुयुञ्जीत संशयानोऽत्र कोऽपि चेत्। तदैवं बोधनीयोऽसौ शास्त्रतत्त्वविचक्षणैः ॥ ३१ ॥ सम्पद्यते कर्मणैव मुक्तिः स्वाचरितेन वै। सुनिर्णीतमिदं कर्ममीमांसायां यथायथम् ॥ ३२ ॥ कर्मैव दानमप्येतद्विश्व-

स्येत स्फुटं यदि । यथावच्छास्त्रनिर्दिष्टरीत्यैवानुष्ठितश्च चेत् ॥३३॥ तत्रापि सत्त्वसंजुष्टं तीव्रश्चापि भवेद्यदि । नूनं सम्प्रापयत्येव नरं मुक्तिं न संशयः ॥ ३४ ॥ मुक्तिदत्वे च धर्मस्य तदङ्गश्चापि मुक्तिदम् । यस्यांशिनो हि यो धर्मः स तदंशेऽपि लभ्यते ॥ ३५ ॥ यथाग्नेर्दाहकत्वश्चेद्गुणो लोकेऽवलोक्यते । तदा तस्य स्फुलिङ्गेऽपि प्रत्यासन्नः स वै गुणः ॥ ३६ ॥ सद्देशकालपात्रादिसाहाय्यश्चेत्समश्नुते । दहत्येकः स्फुलिङ्गोऽपि वनमार्द्रमपि क्षणात् ॥ ३७ ॥ एवं धर्माङ्गमप्येकं दानश्चेद्विधिना भवेत् । तदा तेनाप्यश्नुवीत नरो मुक्तिं न संशयः ॥ ३८ ॥ विज्ञेयं तत्त्वमत्रेदं सर्वशास्त्रार्थनिश्चितम् । सुगुप्तं सारभूतं च वक्ष्यमाणं मुनीश्वराः ! ॥ ३९ ॥ यावच्चित्तं मनुष्याणां विषयासक्तिमद्भवेत् । तावत्तद्वृत्तयश्चान्तःकरणं क्षोभयन्त्यलम् ॥ ४० ॥ यदा स्याद्विषयासक्तिर्विलीना सुतरामिह । विलीयन्ते तदाप्येषां वृत्तयश्चापि सर्वशः ॥ ४१ ॥ क्षीयते वृत्तिनाशे च चांचल्यं मनसः क्षणात् । नष्टे च चापले चित्तं धारणायां प्रवर्तते ॥ ४२ ॥ तदेतदेव भगवान् योगशास्त्रे सदाशिवः । आम्नातवाँ "श्चित्तवृत्तेर्निरोधो योग" इत्यथ ॥४३॥ आज्ञापयच्च मुदितः परमेण समाधिना । "द्रष्टुः स्वरूपेऽवस्थानं तदा" स्यादिति चाग्रतः ॥ ४४ ॥ नूनमेतेन संसिद्धं यत्पुमान् शंसितव्रतः । विषयात्मकवस्तुभ्यश्चित्तवृत्तीर्निवारयन् ॥ ४५ ॥ दद्याद्विषयभूतानि तानि वस्तूनि सर्वथा । तदा निश्चापलं चेतः स्थिरतां लभते पराम् ॥ ४६ ॥ स्थिरेऽन्तःकरणे जाते स्यात्स्वचैतन्यदर्शनम् । तथात्वे च नरो मुक्तिं विन्दत्येव सदा स्थिराम् ॥ ४७ ॥ एवं चैकेनापि दानधर्मेणासाद्यते नरैः । सुदुर्लभाऽपि सा मुक्तिः क्षुद्रास्ताः सिद्धयः किमु ॥ ४८ ॥ यद्येकं पणमप्यन्नमल्पं सात्त्विकभावतः । प्रीतो ददाति पात्राय मुक्तिस्तेनाऽपि लभ्यते ॥ ४९ ॥ यदि चेद्रजसाविष्टो वितरेद्विपुलं धनम् । ऐहिकामुष्मिकं सौख्यमश्नुते मुक्तिमत्र नो ॥ ५० ॥ शुद्धे भावेऽल्पिष्ठदानमप्यनन्तफलं भवेत् । भावाशुद्धौ महद्दानमपि नालं फलाय तत् ॥ ५१ ॥ उक्तं पुरस्ताद्यो विप्रास्तामसेनैति दुर्गतिम् ।

तत्राप्येतद्विजानीत तत्त्वमुक्तं यदग्रतः ॥ ५२ ॥ इहामुत्र च संसिद्धिं दातुं दानं यथेश्वरम् । तथैतद्दुर्गतिश्चापि नरं प्रापयितुं क्षमम् ॥ ५३ ॥ दत्तं हि तामसं दानमपात्रे यत्र पापिनि । उपयुक्तं स विशेषेण तीव्रे दुष्कृतकर्मणि ॥ ५४ ॥ दातुश्च फलसम्बन्धः पारम्पर्यक्रमागतः । ततोऽसौ तामसो दाता स्यात्तत्पापफलांशभाक् ॥ ५५ ॥ अथ तस्मिन् पापफले प्रवृद्धे तु शनैः शनैः । अवश्यं दुर्गतिं याति कैव वात्र विचारणा ॥ ५६ ॥ सिषाधयिषुभिस्तस्माद्दानधर्मं नरैरिह । सत्त्वादिगुणमाहात्म्यं विस्मर्तव्यं न कर्हिचित् ॥ ५७ ॥ विद्यालयस्थापनादिब्रह्मदानात्मकान्यथ । धनरत्नाद्यर्थदानरूपाण्युत्सर्जनानि च ॥ ५८ ॥ देशकालप्रयुक्तानि योग्यपात्रार्पितानि चेत् । संसृज्यन्ते सत्फलेन नान्यथा तु कदाचन ॥ ५९ ॥ तस्मात्सावहिताः सर्वे ! निशामयत साम्प्रतम् । देशकालादिविज्ञानं व्याचष्टेऽहं पृथक् पृथक् ॥ ६० ॥ कस्मिन् देशे हि दातव्यं कुत्रैतद्वस्तु दुर्लभम् । क्व चाधिकफलावाप्तिर्देशे दानेन सिद्ध्यति ॥ ६१ ॥ कुत्र दानेनेश्वराज्ञा विहिता स्याद्विशेषतः । कस्मिंश्च देशे दानेनाऽधिकं जीवहितं भवेत् ॥ ६२ ॥ इत्येवमसकृत्सर्वं चिन्तयेयुर्यदा धिया । तदैवाशु प्रपद्येरन् देशज्ञानं हितप्रदम् ॥ ६३ ॥ एवं कदा हि दातव्यं कदैतद्वस्तु दुर्लभम् । कस्मिन् काले च दानेन लभ्यते विपुलं फलम् ॥ ६४ ॥ कदा दानेनेश्वराज्ञापालनं स्याद्यथार्थतः । कस्मिंश्च काले दानेन बहुजीवहितं तथा ॥ ६५ ॥ इत्थं चिन्तनतो नूनं कालज्ञानमुदेत्यलम् । तथैवावश्यकं पात्रज्ञानञ्चात्र निशाम्यताम् ॥ ६६ ॥ वितीर्णे कीदृशे दानं भूयिष्ठं फलमाप्यते । पात्राय कीदृशे देयं कस्यैतद्वस्तु दुर्लभम् ॥ ६७ ॥ कस्मै दानेन सौकर्यमीशाज्ञापालने भवेत् । कीदृशाय च पात्राय दानं प्राणिहितावहम् ॥ ६८ ॥ इत्येवं यो देशकालपात्रादिज्ञानपूर्वकम् । ददाति दानं लोके स दानसिद्धिं प्रपद्यते ॥ ६९ ॥ एवं त्रिगुणतत्त्वञ्च शास्त्रोक्तं योऽध्यवस्यति । असावभ्युदयं निःश्रेयसञ्चाप्नोत्यनुत्तमम् ॥ ७० ॥ यदा यदा मनुष्येषु दैवाज्ञानमुदेष्यति । तदाऽनावश्यकस्थाने न तैर्दानं प्रदा-

स्यते ॥ ७१ ॥ यदैव कालविज्ञानं भविष्यति नरेष्विह । विद्यालयाद्यर्थमर्थोऽभावो न स्थास्यति क्षितौ ॥ ७२ ॥ यदा च मानसे तेषां पात्रज्ञानमुदेष्यति । न भविष्यन्ति वै मूर्खा ब्राह्मणास्तीर्थवासिनः ॥ ७३ ॥ यदि पात्रविचारश्च तेषां स्थास्यति चेतसि । न तदानीं ब्राह्मणानां दुर्गतिः समुदेष्यति ॥ ७४ ॥ नोपरंस्यति वंशोऽपि गुरूणाश्च पुरोधसाम् । विद्याज्ञानतपोभ्यासान्न पतिष्यंति ते द्विजाः ॥ ७५ ॥ नापि ते भ्रंशयिष्यंति यजमानाँश्च सद्व्रतः । त्रायते हि यतः पात्रं नरके पतनान्नरम् ॥ ७६ ॥ इत्येवं मन्निगदितमविचार्यैव चेतसा । दानं यद् दीयते तस्मात्त्वदानं सुतरां वरम् ॥ ७७ ॥ यतो दत्तेनापि तेन न स्याच्छ्रेयो नृणामिह । स्वदेशस्य स्वजातेर्वा समष्टिव्यष्टिरूपतः ॥ ७८ ॥ न चाप्यत्रोन्नतिस्तस्य स्वधर्मेऽपि विजृम्भते । तस्माच्छास्त्रोक्तरीत्यैव दद्याद्दानं समाहितः ॥ ७९ ॥ धरातले यावदत्र यथावद् विधिना नराः । नाऽभ्यस्येयुर्वितरितुं तावन्नाऽशा समुन्नतेः ॥ ८० ॥ सर्वेभ्यश्चान्यदेशेभ्यो भारते हि निरन्तरम् । संख्यातीतं देयवित्तं न च नो दीयते नरैः ॥ ८१ ॥ यदि तत्तामसेनैव भावेन हि वितीर्यते । आश्लिष्यन्ते पुमांसो हि तत एव विपत्तिभिः ॥ ८२ ॥ तत एव च देशोऽयमधिकं प्रच्यविष्यते । तस्माद्भाव्यं सदा दात्रा देशकालादिदर्शिना ॥८३॥ इति वः कथितं सर्वं यत्पृष्टोऽहं मुनीश्वराः! । माहात्म्यं दानधर्मस्य किं भूयः श्रोतुमिच्छथ ॥ ८४ ॥

जैमिनिरुवाच ।

धर्म्माङ्गस्य द्वितीयस्य तपसस्तत्त्वमुत्तमम् । श्रावयित्वा कुरुष्वास्मान् कृतकृत्यान् कृपानिधे ! ॥ ८५ ॥

याज्ञवल्क्य उवाच ।

कर्म चोपासना ज्ञानं यथैतत्साधनत्रयम् । प्रधानश्चोत्तमश्चाहुर्धर्माङ्गेष्वखिलेष्वपि ॥ ८६ ॥ एवं तपोऽपि धर्मस्य साधनं मुनयो विदुः । बहूपयुक्तं लोकेऽस्मिन्नत्यपेक्षितमेव च ॥ ८७ ॥ शरीरचित्तयोः सर्वसौख्यं त्यक्त्वा शनैः शनैः । तयोर्निर्द्वन्द्वधर्मित्वापादनं तप उच्यते ॥ ८८ ॥ यथैकत्र दृढः पाशैः पशोर्बद्धस्य सन्त-

तम् । प्रवर्द्धन्तेऽधिकं कामवेगविक्रमशक्तयः ॥ ८९ ॥ एवं काय-मनोऽक्षाणां वर्द्धते नितरां बलम् । तपसि स्थापनादेव सुखभोग-विवर्जनात् ॥ ९० ॥ श्रूयते या पुराणेषु मुनीनां शक्तिरद्भुता । देवविस्मापिका साऽपि प्राप्ताऽऽसीत् तपसा भुवि ॥ ९१ ॥ लोकोत्तरं हि लोकेऽस्मिन् दिव्यं तेजो महात्मसु । विभाव्यतेऽधुना काले तत्रापि तपसः फलम् ॥९२॥ ब्राह्मक्षात्रविभेदेन तेजो यद् द्विविधं मतम् । तपसा रक्ष्यते तत्र ब्राह्मं दानेन चापरम् ॥ ९३ ॥ पति-प्रीतिकरं ह्येकं शारीरं मानसं तपः । आचरन्ती गतिं साध्वी सुदुष्प्रापां समश्नुते ॥ ९४ ॥ मनोवाक्कायनिर्वर्त्यं पूर्वमुक्तं तप-स्त्रिधा । तत्रैकमाचरन्त्येके द्वे वा सर्वाणि वापरे ॥ ९५ ॥ अङ्गस्य यस्य यस्यैव तपःशक्तिः समेधते । बाहुल्येन तदङ्गस्य शक्तिर्भावश्च वर्द्धते ॥ ९६ ॥ यथा वाक्तपसः सिद्ध्या बहुन्यन्यफलान्यपि । प्राप्नुयुर्वा न वा किन्तु वाचः सिद्धिस्तु जायते ॥ ९७ ॥ तपः शारीरिकं देवगुरुप्राज्ञद्विजार्चनात् । सिद्ध्येच्छौचार्जवब्रह्मचर्या-हिंसादिसेवनात् ॥ ९८ ॥ अनुद्वेजकसत्येष्टप्रियवाक्यप्रयोगतः । स्वाध्यायाभ्यसनाच्चेह संसिद्ध्येद् वाङ्मयं तपः ॥ ९९ ॥ सिद्ध्ये-न्मानसमद्वेषाद् ब्रह्मणि प्रणिधानतः । तुष्टिश्रद्धाभावशुद्धिधृति-मौनाऽस्तिकत्वतः ॥१००॥

इति श्रीसन्न्यासगीतायां दानतपोधर्मनिरूपणं नाम तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः

जैमिनिरुवाच ।

श्रुतौ सर्वविदस्माभिः प्राणिनां हितकारकौ । दानधर्म्मतपो-धर्म्मौविदानीं श्रावयस्व नः ॥ १ ॥ त्रीण्यङ्गानि प्रधानानि यज्ञ-धर्म्मस्य तत्त्ववित् । कर्मज्ञानोपासनानि गूढं चैतद् रहस्यकम् ॥२॥ यज्ञानादेव वेदस्य स्वरूपज्ञानमुत्तमम् । काण्डत्रयात्मकस्यापि तत्त्वेनैवोदयेदिह ॥ ३ ॥

याज्ञवल्क्य उवाच ।

काण्डत्रये कर्मकाण्डमतीव गहनं स्मृतम् । परमावश्यकं नृणां

वर्तते चातिविस्तृतम् ॥ ४ ॥ न हि कर्म विना कोऽपि कुत्रापि स्थातुमर्हति । चराचरे व्याप्तमेतद् ब्रह्मेवेत्यवधार्यताम् ॥ ५ ॥ किन्तु तत्राचरेत्तद्वै यच्छास्त्रविहितं भवेत् । निषिद्धन्तु त्यजेद्दूराद्य इच्छेत् परमं हितम् ॥ ६ ॥ यथाऽस्य साधनानीह स्थूलात्स्थूलतराण्यपि । तथा सूक्ष्मतमा ह्यस्य संस्कारा बलवत्तराः॥ ७ ॥ यावन्ति क्रियमाणानि कर्माणि प्राक्कृतान्यपि । चित्तेषु सूक्ष्मरूपेण विश्राम्यन्ति दृढं नृणाम् ॥ ८ ॥ यथा बीजे वृक्षरूपं लीनं कश्चित्समीक्षितुम् । प्रवर्तितोऽपि केनाऽपि लभते न विलोकितुम् ॥ ९ ॥ परं बीजं तदेवाम्बुमृद्योगं लभते यदि । तदा तस्मात् समुद्भूतो वृक्षः सर्वैरपीक्ष्यते ॥ १० ॥ तथा सर्वाणि कर्माणि मनोलीनानि देहिनाम् । अतिसौक्ष्म्यान्न शक्यन्ते स्मर्तुमज्ञैर्नरैः क्वचित् ॥ ११ ॥ शुभाशुभानि तान्येव बलवन्तीह जन्मनि । अन्यजन्मनि वा प्राप्य देशकालानुकूलताम् ॥ १२ ॥ यथायोग्यं यथाशक्ति शुभान्येवाशुभानि वा । अतर्कितान्यपीहाशु फलानि जनयन्ति हि ॥ १३ ॥ देवत्वञ्च नरत्वञ्च जीवास्तिर्यक्त्वमेव वा । कर्मभेदादेव लोके प्रपद्यन्ते पृथक् पृथक् ॥ १४ ॥ स्वर्गं भूमिं दुर्गतिञ्च जड़त्वं ज्ञानितामपि । प्राप्नुवन्तीह भूतानि कर्मणैवेति मे मतम् ॥१५॥ कर्मक्षेत्रतयैवैतद् भारतं स्तूयते क्षितौ । अतश्चैवात्र वाञ्छन्ति जननं विबुधा अपि ॥ १६ ॥ यच्चार्यजातिरस्त्यत्र महामहिमशालिनी । तत्रापि मूलमस्त्यस्या विशिष्टा कर्मपद्धतिः ॥ १७ ॥ गर्भाधानादिसंस्कारैरियं ध्वस्तमनोमला । आजन्मानुष्ठितैः सद्भिः शुद्धा राजति कर्मभिः ॥१८॥ लोके तत्तत् पुण्यकर्म यद्यत्स्यात्सत्त्ववर्द्धकम् । तमोविवर्द्धकं यद्यत्प्रोच्यते पापकर्म तत् ॥ १९ ॥ एतयोस्तारतम्येन वैलक्षण्यं मिथो गताः । लोकाः शास्त्रेषु विख्याता अध ऊर्ध्वं चतुर्दश ॥ २० ॥ विचित्रेयं कर्मशक्तिर्ययैकः सात्त्विकाश्रितः। नीयते हि पदं मुक्तेर्नरः संशुद्धमानसः ॥ २१ ॥ पापकर्माश्रयेणैव तमसा सुजड़ीकृतः । क्रमशश्चानयैवाशु पात्यते दुर्गतौ परः ॥२२॥ अतोऽवश्यं मानवेन श्रेयः परमामिच्छता। अवधेयं प्रयत्नेन सत्कर्माचरणे सदा॥२३॥ प्राचुर्यं कर्मणामेव ज्ञानादि-

भ्योऽत्र विष्टपे। विस्तृतिः कर्मकाण्डस्य वेदे तस्मात्समीक्ष्यते ॥२४॥ निरूपितास्त्रयो भेदाः शास्त्रेष्वेतस्य कर्मणः। नित्यं नैमित्तिकं काम्यमिति वक्ष्यथ लक्षणम् ॥ २५ ॥ विशिष्टं यदनुष्ठाने पुण्यं नाप्नोति मानवः। तन्नित्यं प्रत्यवायश्चाकरणे यस्य निश्चितः॥२६॥ यथा सन्ध्योपासनादावकृते प्रत्यवायिता। कृतेऽपि नियमेनैव पुण्यं किञ्चिन्न लभ्यते ॥ २७ ॥ कृते यस्मिन् फलप्राप्तिरकृते तु न पातकम्। एतन्नैमित्तिकं प्रोक्तं यथा तीर्थादिसेवनम् ॥ २८ ॥ काम्यं तत् कार्यसिद्ध्यर्थं सकामो विदधाति यत्। यथाऽनपत्यः पुत्रेष्टियागाद्यत्रानुतिष्ठति ॥ २९ ॥ एतेऽपि च त्रयो भेदाः कथिता मुनिभिः पुरा। आध्यात्मिकं तथा चाऽधिदैविकञ्चाऽधिभौतिकम् ॥ ३० ॥ क्रियते यत्स्वधर्मस्य स्वदेशस्योपकारकम्। ज्ञानानुशीलनं यत्र ज्ञेयमाध्यात्मिकं हि तत् ॥ ३१ ॥ देवानां कार्यमुद्दिश्य यत्र यागादिकं भवेत्। तादृशं सकलं कर्म विज्ञेयं ह्याधिदैविकम् ॥ ३२ ॥ तथाधिभौतिकं कर्म सर्वभूतार्थमेव यत्। दीयतेऽत्रा-तिथिभ्योऽन्नं भोज्यन्ते ब्राह्मणादयः ॥ ३३ ॥ निष्कामतः काम-तश्च सर्वाण्येतान्यपि द्विधा। तदेवं कर्ममाहात्म्यं गहनञ्चाति-विस्तृतम् ॥ ३४ ॥ नियतं सङ्गरहितमरागद्वेषतः कृतम्। अफल-प्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ ३५ ॥ यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः। क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥३६॥ अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्। मोहादारभ्यते कर्म यत्तत्तामसमुच्यते॥३७॥ उभे सकामनिष्कामे कर्म्मणी प्रबले मते। प्रवृत्तिमूलकं त्वाद्यं निवृत्तिमूलकं परम् ॥३८॥ प्रवृत्तिमूलकत्वेऽपि प्रथमस्य विशेषतः। प्रदातृत्वं ह्यभ्युदयस्याऽपवर्गस्य चोच्यते ॥३९॥ लोकं पितॄणां स्वर्गं च तद्दत्ते क्रमशः कृतम्। तथेन्द्रादिपदं श्रेष्ठं भोगांश्चैवोर्द्ध्वलोकगान् ॥ ४० ॥ अत एव श्रुतावास्तेऽधिकं माहा-त्म्यमस्य हि। एतस्यैव बलाज्जीवा यान्ति देवर्षिपितृताम् ॥४१॥ अवतारा भगवतोऽप्येवं कर्म्माश्रिता मताः। निवृत्तिधर्म्ममूलस्य निष्कामस्य तु कर्म्मणः ॥ ४२ ॥ विलक्षणा गतिस्तात! कथिता शास्त्रविस्तरे। गतिस्तेनैव सहजा जीवन्मुक्तिश्च लभ्यते ॥ ४३ ॥

कर्म्मणो हि प्रसादेन जीवन्मुक्ता नरा अपि । धृत्वेशस्य रताः कार्य्ये कुलालचक्रवद्वपुः ॥ ४४ ॥ संकल्पस्य विकल्पस्य जात्यायुर्भोगसंहतेः । प्रकृते रूपतस्तेषु कर्म्मशक्तिः स्थिता ध्रुवम् ॥ ४५ ॥ अतः सर्वप्रधानेयं दुर्ज्ञेयाऽभ्यधिकं मता । कर्म्मणां गतिवेत्तारः सर्वज्ञाः सम्मता भुवि ॥ ४६ ॥ कर्म्मण्युपास्तौ ज्ञाने च ह्यङ्गोपाङ्गान्विताः सदा । धर्म्माः सर्वेऽन्तर्भवन्ति ततो वेदस्त्रिकाण्डकः ॥ ४७ । उपासनेशसान्निध्यप्राप्तेर्हेतुरिहोच्यते । ब्रह्मस्वरूपज्ञानस्योपायानां वर्णनं खलु ॥ ४८ ॥ ज्ञानकाण्डे महाभागाः स्फुटमस्तीह विस्तरात् । सच्चिदानन्दरूपस्य ब्रह्मणः समुपासना ॥ ४९ ॥ तथा सगुणमूर्त्तेश्च तस्यैव हि महर्षिषः । लीलाविग्रहरूपस्य तस्यैव परमेशितुः ॥ ५० ॥ देवानाञ्च ऋषीणाञ्च पितॄणामपि सर्वथा । तत्प्रत्यक्षविभूतीनामुपास्तिर्मुनिपुङ्गवाः ! ॥५१॥ वर्णितोपासनाकाण्डेऽस्तीत्येतदवधार्य्यताम् । निम्नाधिकारिणां प्रोक्ता निम्नाऽनेका ह्युपासनाः॥ ५२ ॥ तामसीनाञ्च शक्तीनां तस्यैव परमात्मनः । शरीरं योगमार्गो वै भक्तिः स्यात् प्राणरूपिका ॥५३॥ आहुस्तूपासनाकाण्डस्येदृक्तत्त्वमृषीश्वराः । योगः क्रियामूलकःस्याद्भक्तिस्तु भावमूलिका ॥ ५४ ॥ मन्त्रो हठो लयो राजयोगश्चेतिचतुर्विधाः । योगा भक्तिस्त्रिधा प्रोक्ता गौणी रागात्मिका परा ॥ ५५ ॥ निर्गुणोपासना याऽस्ति ब्रह्मणो वेदमूर्द्धसु । सर्वासूपनिषत्स्वास्तेऽधिकारो न्यासिनामिह ॥ ५६ ॥ वेदस्य ज्ञानकाण्डस्तु सप्तधा परिकीर्त्तितः । सप्तानां ज्ञानभूमीनामानुकूल्येन साधवः ! ॥ ५७ ॥ सर्व एव यतन्तेऽत्र स्वाऽधिकारानुसारतः । सच्चिदानन्दरूपस्य ब्रह्मणो रूपवर्णने ॥ ५८ ॥ सर्वेषां कथनं वेदानुकूल्यमिह विन्दते । तत्त्वातीतं पदं तद्वद्वाङ्मनसगोचरम् ॥ ५९ ॥ सर्वे ज्ञातुं यतन्ते वै साहाय्याच्छन्दभावयोः । ज्ञानस्य साधनानान्तु सप्तानामाश्रयाः स्वतः ॥ ६० ॥ सप्त दर्शनशास्त्राणि कथ्यन्तेऽत्र बुभुत्सवः ! । शास्त्राणामन्तिमं प्रोक्तं शास्त्रं वेदान्तमुत्तमम् ॥ ६१ ॥ अत एवाऽधिकारोऽस्ति केवलं न्यासिनामिह । सर्वभूतेषु येनैकं भावमव्ययमीक्षते ॥ ६२ ॥ अविभक्तं

विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् । पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ॥ ६३ ॥ वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् । यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ॥६४॥ अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ ६५ ॥

इति श्रीसन्न्यासगीतायां कर्म्मोपासनाज्ञाननिरूपणं नाम चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

ऋषय ऊचुः ।

धर्म्मज्ञ! गतिवेत्ताऽसि त्वमेव कालकर्म्मणोः । भवतः कृपया धर्म्मरहस्यं श्रुतमुज्ज्वलम् ॥ १ ॥ अङ्गोपाङ्गयुतं गूढं श्रुतिमूलमिदं हितम् । भवतोऽन्तिमसिद्धान्ताज्ज्ञातमस्माभिरानतैः ॥ २ ॥ निवृत्तिमार्गनिष्कामकर्म्मणोः सर्वथा क्षमः । सन्न्यासधर्म एवाऽस्ति सर्व्वश्रेष्ठोऽत्र भूतले ॥ ३ ॥ सन्न्यासाश्रम उक्ताँस्तान् धर्म्मांस्तत्र महामते ! । विहितानि च कर्म्माणि श्रावयाऽस्मानतोऽधुना ॥ ४ ॥ सन्न्यासिनां भवान् श्रेष्ठो जगतां गुरुरेव च । उपदेष्टा भवेत् कोऽन्यस्त्वत्तोऽन्यो धर्म्मशिक्षणे ॥ ५ ॥

याज्ञवल्क्य उवाच ।

सन्न्यासधर्म्मनिर्वाहो दुर्गमः परिकीर्तितः। अत एव त्रिकालज्ञा ऋषयो मुनयस्तथा ॥ ६ ॥ सन्न्यासग्रहणे सर्वे सङ्कोचं चक्रिरे सदा । अतो वर्णगुरुर्विप्रः सन्न्यासी तद्गुरुः स्मृतः ॥ ७ ॥ विप्राणामेव तत्राऽस्ति सन्न्यासेऽधिकृतिः शुभा । अवस्थायां चतुर्थ्यां या सततं श्रुतिसम्मता ॥ ८ ॥ भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः। बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥ ९ ॥ ब्राह्मणेषु तु विद्वांसो विद्वत्सु कृतबुद्धयः। कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवेदिनः ॥ १० ॥ तच्छ्रुत्वा विज्ञवर्याणां मुनीनां तत्र तस्थुषां। ऋषीणाञ्च विचारोऽभूत् प्रश्नो नाऽन्येन सम्भवेत् ॥ ११ ॥ शुकं विहाय धर्म्मेऽस्मिन् गहने तूर्द्ध्वरेतसम्।

जैमिन्याद्यास्तदा सर्वे शुकदेवं महामुनिम् ॥ १२ ॥ ऋषयः प्रार्थयामासुः जिज्ञासा क्रियतामिति । सन्न्यासाश्रमधर्म्माणां त्वं नः प्रतिनिधिर्भव ॥ १३ ॥

शुक उवाच ।

सन्न्यासाश्रमधर्म्माणां कलिकालोपयोगिनाम् । तत्त्वं नो ब्रूहि सर्वज्ञ पितुर्यस्माच्छ्रुतं मया ॥ १४ ॥ अहो दुरत्ययः कालस्तथा कालाऽनुसारिणाम् । धर्म्माणां साधनेनैव सुखं सामान्यदेहिनाम् ॥१५॥ कलौ धर्म्मस्यैकपादो गाम्भीर्य्योनो भविष्यति । एतदन्यदपि श्रुत्वा भवन्तं प्रार्थयामहे ॥ १६ ॥ कलेर्निवृत्तिधर्मस्याऽप्युच्यतां रूपमीश्वर ! ॥ १७ ॥

याज्ञवल्क्य उवाच ।

महान्तोऽपि च धर्म्मज्ञा अधर्मं कुर्वते मुने ! ॥ कालिस्वभाव एवैष परिहार्य्यो न केनचित् ॥ १८ ॥ तस्मादत्र मनुष्याणां स्वभावात्पापकारिणाम् । निष्कृतिर्न हि विप्रेन्द्र ! सामान्योपायतो भवेत् ॥ १९ ॥ यः कश्चिदपि धर्म्मात्मा यज्ञं दानं करोति च । यः कश्चिदपि धर्म्मात्मा क्रियायोगरतो भवेत् ॥ २० ॥ नरं धर्म्मरतं दृष्ट्वा सर्वेऽसूयां प्रकुर्वते । व्रताचाराः प्रणश्यन्ति ध्यानयज्ञादयस्तथा ॥ २१ ॥ उपद्रवा भविष्यन्ति चाऽधर्म्मस्य प्रवर्त्तनात् । असूयानिरताः सर्व्वे दम्भाचारपरायणाः ॥ २२ ॥ प्रजाश्चाल्पायुषः सर्व्वा भविष्यन्ति कलौ युगे । उत्तमा नीचतां यान्ति नीचाश्चोत्तमतां तथा ॥ २३ ॥ राजानश्चाऽर्थनिरतास्तथा लोभपरायणाः । धर्म्मकञ्चुकसंवीता धर्म्मविध्वंसकारिणः ॥ २४ ॥ किङ्कराश्च भविष्यन्ति शूद्राणाञ्च द्विजातयः । धर्म्मस्त्रियं न गच्छन्ति पतयो जारलक्षणाः ॥ २५ ॥ द्विषन्ति पितरं पुत्रा गुरुं शिष्या द्विषन्ति च । पतिञ्च वनिता द्वेष्टि कलौ पापिनि चाऽगते ॥ २६ ॥ वेश्यालावण्यशीलेषु स्पृहां कुर्व्वन्ति योषितः । धर्म्मविघ्ना भविष्यन्ति स्त्रियः स्वपुरुषेषु च ॥ २७ ॥ न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः । न यक्ष्यन्ति न होष्यन्ति

कनिष्ठो हस्ताभ्यां नद्युत्तरणं न कुर्यात्॥ न वृक्षमारोहेत न यानादिरूढो न क्रय-विक्रयपरो न किञ्चिद्विनिमयपरो न दाम्भिको नानृतवादी न यतेः किञ्चित्कर्त्तव्य-मस्त्यस्ति चेत् साङ्कर्य्यम्॥ तस्मान्मननादौ संन्यासिनामधिकारः॥ आतुर-कुटीचकयोर्भूर्लोकभुवर्लोकौ बहूदकस्य स्वर्गलोको हंसस्य तपोलोकः परम-हंसस्य सत्यलोकस्तुरीयातीतावधूतयोः स्वात्मन्येव कैवल्यं स्वरूपोनुसन्धानेन भ्रमरकीटन्यायवत्॥

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तन्तमेव समाप्नोति नान्यथा श्रुतिशासनम्॥

तदेवं ज्ञात्वा स्वरूपानुसन्धानं विनान्यथाचारपरो न भवेत् तदाचारवशात् तत्तल्लोकप्राप्तिर्ज्ञानवैराग्यसम्पन्नस्य स्वस्मिन्नेव मुक्तिरिति न सर्व्वत्राचार-प्रसक्तिस्तदाचार इति॥

अथेदानीं संन्यासाश्रमं चतुर्विधं दर्शयति आश्रमोपनिषदि अथर्व्ववेदे-परिव्राजका अपि चतुर्विधा भवन्ति॥ कुटीचकाः, बहूदकाः, हंसाः, परम हंसाश्चेति। तत्र कुटीचकाः, जनक-कात्यायन-याज्ञवल्क्य-हरित-हारीत-माण्डव्य जैमिनिप्रभृतयः॥ स्वपुत्रगृहेषु भिक्षाचर्य्यं चरन्त आत्मानं प्रार्थयन्ते।

बहूदकास्त्रिदण्डकमण्डलुशिक्ययज्ञजलपवित्रपात्रपादुकासनशिखा यज्ञोप-वीतकौपीनकाषायकेशधारिणः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षाचर्य्यं चरन्तमात्मानं प्रार्थयन्ते। हंसा एकदण्डधारिणः शिखावर्जिता यज्ञोपवीतधारिणः शिरस्तुण्डमु-ण्डवपनं कृत्वा शिक्यकमण्डलुदण्डहस्ता ग्रामैकरात्रवासिनो नगरे तीर्थेषु पञ्चरात्रं बसन्तो गोमूत्रगोमयाहारा एकरात्रकृच्छ्रचान्द्रायणादिव्रतं चरन्त आत्मानं प्रार्थयन्ते। परमहंसा न दण्डधरा मुण्डाः कन्थाकौपीनवाससः त्यक्तलिङ्गा अव्यक्ताचारा आश्रम उन्मत्तवदाचरन्तस्त्रिदण्डकमण्डलुशिक्ययज्ञजलपवित्र-पात्रपादुकासनशिखायज्ञोपवीतानां त्यागिनः शून्यागारदेवगृहवासिनो न तेषां धर्मो नाधर्मो न ऋतञ्चानृतं सर्वसहाः सर्वसमाः समलोष्टाश्मकाञ्चना-यथोत्पन्नमात्राहाराश्चातुर्वर्ण्ये भैक्षाचर्य्यं चरन्त आत्मानं मोक्षयन्त आत्मानं मोक्षयन्त इति चतुर्विध सन्यासधर्मः समाप्तः।

संन्यासोपनिषदि प्रमाणं कुटीचकादिसंन्यासधर्म्मं दर्शयति॥ तल्लक्षणमाह॥ त्यज धर्म्ममधर्म्मञ्च उभे सत्यानृते त्यज॥ उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्यज॥ अथ संन्यासाश्चतुर्विधाः सन्ति॥ वैराग्यसंन्यासी, ज्ञानसंन्यासी, ज्ञानवैराग्यसंन्यासी, कर्म्मसंन्यासीति, चातुर्विध्यमुपागतः॥

तद्यथेति । दृष्टानुश्रविकविषयवैतृष्णमेत्य प्राक्पुण्यकर्म्मविशेषात् संन्यस्तः स वैराग्यसंन्यासी । शास्त्रविधिमुपागतः शास्त्रज्ञानात् पापपुण्यलोकानुभवश्रवणात् प्रपञ्चोपरतो देहवासनां शास्त्रवासनां लोकवासनां त्यक्त्वा वमनान्नमिव प्रवृत्तिं सर्वां हेयां मत्वा साधनचतुष्टयसम्पन्नो यः संन्यस्यति स एव ज्ञान-संन्यासी ॥ क्रमेण सर्व्वमभ्यस्य सर्व्वमनुभूय ज्ञानवैराग्याभ्यां स्वरूपानुसन्धानेन देहमात्राऽवशिष्टः संन्यस्य जातरूपधरो भवति स ज्ञानवैराग्यसंन्यासी ॥ ब्रह्मचर्य्यं समाप्य गृही भूत्वा वानप्रस्थाश्रममेत्य वैराग्याभावेऽप्याश्रमक्रमानुसारेण यः संन्यस्यति स कर्म्मसंन्यासी ॥ स संन्यासः षड्विधो भवति । इत्याह, कुटीचक-बहूदक-हंस-परमहंस तुरीयाऽतीतोऽवधूताश्चेति ॥ कुटीचकः शिखा यज्ञोपवीति दण्डकमण्डलुधरः कौपीनशाटीकन्थाधरः पितृमातृगुर्वाराधन-परः पिठरखनित्रशिक्यादिमात्रसाधनपर एकत्रान्नादनपरः श्वेतोर्ध्वपुण्ड्र-धारी त्रिदण्डः ॥ बहूदकः शिखादिकन्थाधर स्त्रिपुण्ड्रधारी कुटीचकवत् सर्व्व-समो मधुकरवृत्त्याऽष्टकवलाशी । हंसो जटाधारी त्रिपुण्ड्रोर्ध्वपुण्ड्रधारी असंक्लृप्तमधुकरान्नाशी कौपीनखण्डतुण्डधारी । परमहंसः शिखायज्ञोपवीत-रहितः पञ्चगृहेषु करपात्रो एककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेक-शाटीधरो वा भस्मोद्धूलनपरः सर्व्वत्यागी । तुरीयातीतो गोमुखवृत्त्या फलाहारी अन्नाहारी चेत् गृहत्रये देहमात्रावशिष्टो दिगम्बरः कुणपवच्छरी-रवृत्तिकः । अवधूतस्तु अनियमः पतिताऽभिशस्तवर्ज्जनपूर्व्वकं ( अभिशस्त इति कलङ्कित अपवादितः ) सर्व्ववर्णेष्वजगरवृत्याहारपरः इति स्वरूपसन्धान पर इति ।"

आर्यजातेर्वर्णाश्रमश्रृङ्खलामनुसृत्य चतुर्थाश्रमस्य संन्यासस्योपर्युक्त प्रकारेण समुपबृंहितवर्णनं वेदेषु स्मृति-पुराणेषु चाप्युपलभ्यते । वस्तुतो निःश्रेयस-साधनमेव संन्यासस्य परमं प्रयोजनम् । कर्मबन्धनविमुक्तौ स्वस्वरूपोपलब्धौ च तद्विनियोगः । मानवपिण्डे सत्यपि जीवन्मुक्तदशाप्राप्तिर्हि तत्फलम् । संन्यास-दीक्षा जीवन्मुक्तिदशायाथार्थ्यावगतिहेतवे मीमांसादर्शनप्रतिपादितकर्मविज्ञान-पर्यालोचनमत्यावश्यकमधो विविच्यते—

त्रिगुणात्मकप्रकृतिस्पन्दनतः कर्म समुत्पद्यते । तच्च सहजजैवैशभेदात् त्रिविधम् । तद्यथा कर्ममीमांसायां क्रियापादे—

"प्राकृतिकः स्पन्दः क्रिया ।
तत् त्रिविधं सहजैशजैवभेदात् ।

चतुर्दशभुवननिदानमाद्यम्।
पञ्चकोषजननम्।
शरीरत्रयहेतुश्च।
मनुष्यवर्ष्मजं जैवमधिकारित्वाद्धर्माधर्मयोः।
ऐशमुभयसहायकम्।
तत् समष्टिव्यष्टिमिश्रञ्च।
अतो वैचित्र्यमस्य।
मानवाद्देवोऽपि।
तत्प्रकाशो मुक्तावतारेषु।"

प्रलयानन्तरं पुनः सृष्टिदशायां येन ब्रह्माण्डमिदमुत्पद्यते, जड़चेतनात्मकं विश्वं वा येन समुद्भवति, येन च सहजपिण्डधारिणो जीवाश्चतुर्विधभूतसंघा उत्तरोत्तरमभ्युदीयमाना मानवपिण्डमासादयन्ति, ब्रह्माण्डप्रकृतिसम्बन्ध-संवलितं तदेव सहजं कर्मेति समाम्नायते। प्रत्येकेन मानवपिण्डेन सम्बद्धमेव जैवमित्याख्यायते। तदुभयविलक्षणं दैवपिण्डतल्लोक-संबन्ध-संयुक्तमैशमित्युदीर्यते। यतो हि देवाः किलोभयोः सहजजैवाख्ययोः कर्मणोः सञ्चालका व्यवस्थापका वाऽनुभूयन्ते। जैवस्य कर्मणो नितरां प्राधान्यमवगन्तव्यम्। यतो मनुष्यलोकाख्यो मृत्युलोक एवायं ब्रह्माण्डस्यैतस्य केन्द्रीभूतः सम्मतः। मृत्युलोकाद्देवलोकं प्रस्थिता नित्या नैमित्तिका अपि देवाः सृष्टिसामञ्जस्य-संरक्षण-निमित्तं मानवलोकमवतरन्ति। ब्रह्माण्डेऽत्र कर्मभूमिर्मानवलोक एव, अवशिष्टा लोका भोगभूमयोऽवगन्तव्याः। मृत्युलोकापरनामा भारतवर्षाख्यो मानवलोको हि कर्मभूमिः, किन्तु देवदुर्लभ-जीवन्मुक्तावस्थोद्भावको मुक्तिप्रदश्च भारतद्वीप एव। मुक्तिगतिरपि शुक्ला, ऐशी, सहजा चेति त्रिविधा। उग्रपुण्यकर्माणो महात्मानो ज्ञानिनः सूर्यमण्डलं भित्त्वा समुन्नतलोकानधिवसन्तः सत्यलोकमासाद्य यद् ब्रह्मीभवन्ति, सा किल शुक्लागतिरभिधीयते, यया च मानवलोकात्प्रतिष्ठमाना जीवाः समुन्नतदैवयोनिष्वपि दुर्लभमीशभावं भजन्तोऽन्ते ब्राह्मं, वैष्णवं शैवं वा पदमधिगच्छन्तः प्रलये ब्रह्मीभावमापद्यन्ते, सा गतिरैशी बोद्धव्या। शुक्ला ऐशी चेति गतिद्वयी देशकालसापेक्षा। देवदुर्लभा सहजा गतिस्तूभयविलक्षणा। नेयं देशकालयोः सापेक्षतामवलम्बते। यथा खलु कश्चन महात्मा ज्ञानप्रभावात् निजाशेषवासनाक्षयं विदधत्, मनसोऽपि विलयनमनुतिष्ठन् पञ्चभ्योऽपि कोषेभ्योऽतीतो भृष्टसंचितक्रियमाणकर्मबीजः केवलं प्रारब्धमेव कर्म भुञ्जानो जीव-

त्रैव मुक्तो ब्राह्मीभावमनुभवति, सा सहजेति कथ्यते। जीवन्मुक्तदशायां सञ्चितानि कर्मबीजानि ज्ञानाग्निना दग्धानि नाङ्कुराय प्रकल्पन्ते। निर्वासनत्वात् क्रियमाण-कर्मकलापोऽपि न जीवन्मुक्तं स्पृशति। द्विविधमपीदं सञ्चितं क्रियमाणं कर्मजातं जीवन्मुक्तस्य चित्ताकाशतोऽपसर्पत् ब्रह्माण्डप्रकृतिचिदाकाशमाश्रयते। तदीयं शरीरोत्पत्तिनिदानभूतं प्रारब्धमपि कर्म कुलालचक्रवत् नरीनृत्यमानं भोगावसाने सशरीरपातं प्रणश्यति। सैषा जीवन्मुक्तदशावाप्तिरेव संन्यास-दीक्षाया अन्तिम-लक्ष्यभूता। जीवन्मुक्तिरियं संन्यासस्य परमहंसदशायामुत्पद्यते। तुरीया-तीतावधूतप्रभृतयः परमहंसस्यैव नामान्तररूपा अवस्थाविशेषाः सन्ति। सैव जीवन्मुक्तदशा संन्यासगीतायामीशकोटिब्रह्मकोटिभेदेन द्विविधा प्रतिपादिता निभालनीया।

---

## ४—कलिवर्ज्यप्रकरणम्।

जीवानां समष्टिकर्माण्यनुसृत्य अनादिरनन्तो महाकाल एव कल्प-मन्वन्तर-कृत-त्रेता-द्वापर-कलियुगादि-भेदभिन्नो बहुविधरूपाणि समालम्बते। कलिस्तु सर्वतो निकृष्टः। अत्राल्पायुषोऽल्पमेधसोऽल्पशक्तयश्च जीवाः प्रादुर्भवन्ति। धृतिशक्त्यादिन्यूनत्वेन कलियुगे मृत्युलोकस्य दैवलोकैः सह सम्बन्धो नितरां शिथिलायते, मनुष्यलोकवर्त्तिनां जीवानां धर्मसाधनाधिकारादयश्च सर्वथा ह्रास-मुपगच्छन्ति। अतः कारणादेव पुराणेषु कलिवर्ज्यप्रकरणे संन्यासादिनिषेध-वचनानि समुपलभ्यन्ते तथाहि ब्रह्मवैवर्त्ते—

अश्वालम्भं गवालम्भं संन्यासं पलपैत्रिकम्।
देवरेण सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्॥

एतादृशवचनानि बृहन्नारदीयादिष्वपि दृग्गोचरतामुपयान्ति। पुराणग्रन्था वेदभाष्यरूपत्वान्न त उपेक्षणीयाः। तदीयवचनान्यपि नूनं मीमांसितव्यानि।

विधेया विषयो मौलिककारणाभावेन शक्तेरल्पतया वा कलिकाले निषिध्यन्त इति कलिवर्ज्यप्रकरण-निषिद्धवचन-पर्यालोचनेन सिध्यति। अश्वमेधस्तु मौलिककारणाभावेन निषिद्धः। यतः कलियुगे समस्तमेव भूमण्डलं निजाधीनं विधातुमेकः सम्राट् सुतरामसमर्थः। एतन्मौलिको हेतुर्दैवलोकसम्बन्धविच्छेद एव। गोमेधविषये शास्त्रेषु इदमुपलभ्यते यत् मेध्या गावः पुनर्जीवनं लभन्तेस्म। यथाविधि यज्ञानुष्ठानेन दैवसाहाय्येन यज्ञीयपशूनां सद्गतिस्तु अवश्यंभाविनी। अतोहि गोजातेर्गुरुणा गौरवेण दैवजगत्-सम्बन्ध-सम्बद्धा एतादृशविषया दैव-

सम्बन्धशून्ये कलियुगे निषेद्धव्या एव। एतादृशपुराणप्रोक्तनिषेधवचनेषु मौलिककारणकलापाभाव एव हेतुः। एवञ्चाश्वालम्भे गवालम्भे च मूलकारणाभाव एवेति निष्कर्षः। देवरेण सुतोत्पत्तिरपि मूलकारणाभावेनैव सह सम्बध्नाति। कामजसृष्टि-संकुले कलावत्र पुरुषेषु योगशक्तिराहित्यात् स्त्रीषु हि धर्मशक्तेरभावात् देवरेण सन्तानोत्पत्तिर्नाम नियोगोऽपि मौलिककारणाभावादेव निषिद्धः। नियोगस्य शास्त्रोक्त-पवित्रता-संरक्षणं कलिकाले न सम्भवति। किन्तु पलपैत्रिकं (श्राद्धेमांसपिण्डदानं) संन्यासदीक्षा चेति द्वयं न मौलिककारणाभावेन, प्रत्युत शक्तेरभावादेव निषिद्धम्। मांसभोजिने प्रेताय मांसपिण्डदानं तन्त्रोक्तायां वेदोक्तायां च पद्धतौ परमप्रयोजनोयत्वेन समर्थितमास्ते। भारतस्य विविधप्रान्तेषु मांसपिण्डदानप्रथा साम्प्रतमपि यत्र कुत्रचन निभाल्यते। अतः संन्यासदीक्षाऽपि तथैव बोद्धव्या। कलियुगे संन्यासदीक्षाविधिवचनान्यपि शास्त्रेषु समुपलभ्यन्ते–

> यावद् वर्णविभागोऽस्ति यावद् वेदः प्रवर्त्तते।
> तावन्न्यासोऽग्निहोत्रं च कर्त्तव्यं तु कलौ युगे॥
>
> —भगवान् व्यासः

इदानीं समये वैदिकस्य तान्त्रिकस्य लौकिकस्य च संन्यासाश्रमस्यानेका रीतयो बहुविधाः श्रेणयश्च मोक्षभूमौ भारतद्वीपेऽत्र बहुत्र दृष्टिगोचरीभवन्ति। प्राचीनकालापेक्षया साम्प्रतमेषां विस्तरो नितरां प्रवर्द्धमानः संलक्ष्यते। अतो नैत उपेक्षणीया इति निर्विवादम्। इदमपि प्रायो निर्विचिकित्स्यं यत् शक्तेरभावात् कलौ शास्त्रनिषिद्धानां धर्माणां दुस्साध्यत्वात् ते सुविचारं निषेवणीया आश्रयणीयाश्च। सम्प्रति तादृशधर्माः पूर्णरूपेण नानुष्ठातुं शक्यन्त इत्यपि निश्चप्रचम्। इदानीन्तनानि संन्यासरूपाणि आपद्धर्मानुसारेण शास्त्रविरुद्धरीत्या वा समनुष्ठितान्यपि प्रायो दुर्बलानि दैनंदिनं क्षीणतामुपढौकन्ते। परमहंसदशायाः पूर्वोक्तावस्था तु न केवलं दर्शनविषयत एव, श्रवणविषयतोऽपि सर्वथाऽतितिरोदधाति। कुटीचक-बहूदकादीनां दीक्षाऽऽचारव्यवहारादयश्च सर्वतो लुप्तप्राया एव। वैदिकसंन्यासिष्वपि परमहंसदीक्षया एव सर्वे अहमहमिकया दीक्षिता दृश्यन्ते। अवधूतपरिव्राजकादिनामविख्याता तान्त्रिकसंन्यासदीक्षाऽपि विलक्षणैव लक्ष्यते। लौकिकप्रव्रज्यापद्धतयोऽपि तत्तन्मतपन्थप्रवर्त्तकाचार्यनामतः प्रचरन्ति प्रायशो मोक्षभूमौ भारतद्वीपेऽत्र। एतैरुपर्युक्तकारणकलापैर्निवृत्तिपथपथिकस्य व्यक्तिमात्रस्यापि कृते निबन्धग्रन्थस्य पद्धतेश्च निर्माणं नितरामावश्यकम्।

---

## ५—यतिधर्म-मौलिक-रहस्यम् ।

यथाहि महतो बटवृक्षस्य सम्पूर्णमपि स्वरूपमेकस्मिन् अल्पीयसि बटबीजे सूक्ष्मरूपेण निहितं तिष्ठति, तथैव निवृत्तिधर्माधारभूतं जीवन्मुक्तिप्रदं संन्यासतत्त्वं वेदोक्ते प्रेषमन्त्रे संतिष्ठते। सत्य-शौच-दया-दानाख्यैश्चतुर्भिः पादैर्धर्म इव सात्त्विकधैर्य-सात्विकज्ञान-परमवैराग्य-प्रेषमन्त्रस्वानुभवाभिधैश्चतुर्व्यूहैः संन्यासधर्मोऽपि संरक्षितोऽस्ति। सात्त्विक्या धृतेः, सात्विकस्य ज्ञानस्य, परमस्य वैराग्यस्य च लक्षणानि वेदशास्त्रेषु बहुत्र समुपलभ्यन्ते। सर्वविधैरपि साधुसंन्यासिभिः प्रेषमन्त्ररहस्यानुशीलनं नूनमेव विधेयम्। त्रयाणां भूर्भुवःस्वर्लोकानां परित्यागसंकल्प एव प्रेषमन्त्रस्य बहिरङ्गमवधेयम्। "लोकत्रयसम्बन्धसंवलिता निखिला अपि कामनाः परित्यक्ता" इति वाक्योच्चारणपूर्वकं तदर्थमननेनैव प्रेषमन्त्रः सुसिद्धो भवति। भूर्भुवः स्वरिति लोकत्रयस्य स्वरूपप्रतिपत्तये स्वकीयस्यैतस्य ब्रह्माण्डस्य स्वरूपपरिज्ञानं नितरामावश्यकमिति तत्स्वरूपमधो निर्दिश्यते—

अस्मदाश्रयीभूतस्यास्य ब्रह्माण्डस्य चतुर्दश विभागाः सन्ति। तेषु तलाऽतल-वितल-सुतल-तलातल-रसातल-पातालाख्यानि सप्त भुवनान्यधःस्थानि, भूर्भुवःस्वर्महर्जनतपःसत्याभिधानानि सप्त उपरि स्थितानि विज्ञेयानि। निम्नस्थाः सप्त लोकास्तु शिष्टसम्प्रदायैर्वर्णाश्रमधर्मावलम्बिभिरार्यैः परित्याज्या एव सन्ति। सप्ताऽधस्तनेषु लोकेषु असुराणां निवासः। असुरा अपि देवयोनिविशेषा एव। तदीयशरीराण्यपि देवपिण्डान्तर्गतान्येव। सप्तस्वधोलोकेषु स्वर्लोकापेक्षयापि समधिकमिन्द्रियभोगसुखमवधेयम्। मद्यमांसस्त्रीनिषेवणादीनामन्येषामैश्वर्यादीनामेवमासुरभावपरिपूर्णं वर्णनमुपलभ्यते, यदार्यधर्माणः शिष्टजना न तत् कामयन्ते। अतस्तदासक्तिराहित्यात् तत्त्यागसंकल्पोऽनावश्यक एव। उपरि स्थितेषु सप्तसु भुवनेषु भूर्भुवःस्वरित्याख्ये लोकत्रये किल सात्त्विकस्येन्द्रियभोगसुखस्य सम्बन्धो विज्ञायते। इन्द्रिय-मनो-बुद्धि-प्रकृतिषु एकैकं स्ववशे स्थापयन्तो महात्मान एव क्रमशो महर्जनतपस्सत्याख्येषु लोकेषु निवसन्ति, इति योगशास्त्रस्य उपनिषदां च राद्धान्तः। अतो दृष्टानुश्रविकसुखपरित्यागिभिः संन्यासिभिः सप्तोर्ध्वलोकेष्वपि उपरि स्थितानि चतुर्भुवनानि समाश्रयणीयान्येव सन्ति। जीवन्मुक्ताः संन्यासिनस्तु मृत्युलोक एव निःश्रेयसमधिगच्छन्ति। तदभावे उपरि स्थितेषु चतुर्लोकेषु संन्यासिनां निवासः स्वाभाविक एव। संन्यासिभिः "भूः संन्यस्तं मया" इत्यादिवाक्यैः भूर्भुवःस्वरिति त्रयो लोका एव संन्यस्तव्याः।

भूर्लोकस्यान्तर्गतानि जम्बू-प्लक्ष-शाक-कुश-क्रौञ्च-शाल्मली-पुष्कराख्यानि सप्तद्वीपानि विराजन्ते। तानि तत्तद्वातावरणरूपैः सप्तसमुद्रैः परिवेष्टितानि सन्ति। एतानि देवलोकभूतानि अस्मदाश्रयीभूतं मृत्युलोकं परितो विराजन्ते। एतेषु केवलं जम्बूद्वीपे नव वर्षाणि, पितृलोकनरकलोकप्रेतलोकाश्चेत्यादिद्वादशलोकाः सन्ति। तेषु नववर्षेषु मृत्युलोकापरनामको मनुष्यलोको भारतवर्षमवधेयम्। अवशिष्टानि अष्टौ वर्षाणि देवलोकभूतानि विज्ञातव्यानि। एवं हि चतुर्दशभुवनपारस्परिक-विभागविस्तरतया अस्मदाश्रयीभूतभारतवर्षरूपोऽयं मृत्युलोको ब्रह्माण्डस्यैतस्य एकसहस्रैकशताधिकः षट्सप्ततितमो (११७६) भागोऽवगन्तव्यः। उभौ भूर्लोक-भुवर्लोकौ मिलित्वा भौमस्वर्ग इत्युच्यते। एतयोर्भूर्लोकभुवर्लोकयो भौमस्वर्गभूतयोर्वातावरणे निखिलानि ग्रहनक्षत्रराशिचक्रादीनि विद्यमानानि सन्ति। एतदन्तिमसीमनि ध्रुवलोकः, योऽसौ रात्रावुत्तरदिशि स्थिररूपो निभाल्यते। ध्रुवलोकस्याप्युपरि उत्तरतः स्वर्लोकोऽस्ति। इमे त्रयो भूर्भुवःस्वर्लोका उत्तरोत्तरमिन्द्रियसुखभोगविलासागारभूताः सन्तिः। एभ्योऽप्युपरि स्थितेषु लोकेषु इन्द्रियसुखस्य न किमपि महत्त्वमिति चतुर्दशभुवनरहस्यमनुभूय सरहस्यं प्रैषमन्त्रं मननपूर्वकमुच्चारयता संन्यासिना भूर्भुवःस्वरिति त्रयो लोकाः संन्यस्तव्यास्ततोऽनु तेन तदूर्द्ध्वलोकेषु समुपस्थातव्यम् यद्वर्णनमुपरि समनुष्ठितमस्माभिः। परमहंसेन संन्यासिना तु इहैव मृत्युलोके मुक्तेन भवितव्यम्, अन्यथा भूर्भुवःस्वर्लोकेभ्योऽप्युपरि स्थितलोकेषु गन्तव्यम्। एतदेवातिसूक्ष्मं दैवलोक-सम्बन्ध-संवलितं पारलौकिकं रहस्यपरिपूर्णमलौकिकं मौलिकं यतिधर्मतत्त्वं विद्वद्भिर्विज्ञातव्यम्।

---

## ६—ब्रह्मचर्य-वानप्रस्थ-समस्या।

ब्रह्मचर्य-वानप्रस्थाश्रम-नामशेषता-सम्बन्धे बहूनि वचनानि शास्त्रेष्वपि समुपलभ्यन्ते, प्रत्यक्षतोऽपि तयोर्नाशोऽनुभूयते। गर्भाधानादिसंस्कारपद्धतेः प्रणाशेन, पित्रोर्विषयव्यामोहताप्राबल्येन, विप्राणां निवृत्तिपरतानिरोधेन, तपोवनानामुच्छेदेन, भूसुराणां भृतकाध्यापनादिना बहुविधकारणकलापेन ब्रह्मचर्याश्रमो नाशमुपगतः। गृहस्थाश्रमे च विषयविरागितया निवृत्तिपरतायाश्च प्रायशो ह्रासेन, ब्राह्मणानां तपःशक्तिन्यूनतया, वर्णाश्रमधर्मस्य शिथिलतया, तीर्थेषु पवित्रताऽध्यात्मचिन्तन-विद्याभ्यासङ्गादीनामभावेन, तपोवनसुरक्षारीतितिरोहिततया, तादृश्यैवापरहेतुपरम्परया च वानप्रस्थाश्रमद्रुमोऽपि निर्मूलः

समजनि । यत्र कुत्रचन ब्रह्मचर्याश्रमनामव्यपदेशभाजोऽनेके विद्यालया यद्यपि समुपलभ्यन्ते, तथापि ते केवलं प्रदर्शनमात्रोपयोगिनो यतस्तेषु वर्त्तनं भुञ्जानैरध्याप्यन्तेऽन्तेवासिनः । दण्डिस्वामिषु दशनामिसंन्यासिसमुदायेषु वैष्णव-सम्प्रदायान्तर्गत-बहुविध-साधु-सम्प्रदायेषु च ब्रह्मचारिनामधारिणो निरीक्ष्यन्ते, संन्यासिष्वपि मठस्थब्रह्मचारिणामेका रीतिरेव प्रचरति, तादृशाः सर्वेऽपि ब्रह्मचारिनामानो नारम्भतो ब्रह्मचर्याश्रमपालनबद्धपरिकारा विज्ञेयाः । अनेके साधवो विवाहसंस्कारानन्तरं ब्रह्मचारिणो जायन्ते । अतो निश्चप्रचमिदं यत् ब्रह्मचर्यनाम्ना आद्य आश्रमो न याथातथ्येन प्रचारयितुं शक्यते । पाठशालासु कलाशालासु (स्कूल-कालेज) तदीयच्छात्रनिवासेषु तत्तदाश्रमेषु च ब्रह्मचर्याश्रमाचारानुवर्त्तिनः कांश्चन शुभान् देशकालोपयोगिन आचारान् पालयित्वा कथं कथमपि ब्रह्मचर्याश्रम-बीज-संरक्षणं कर्त्तुं शक्यते । साधुसंन्यासिमहात्मसु ये किल ब्रह्मचारिनामतो विख्यातास्तैर्हि यथाशक्यं वानप्रस्थाश्रमधर्माचारान्, संन्यासाश्रमस्य वा कुटीचकबहूदकयोराचारान् वा परिपालयद्भिर्वानप्रस्थाश्रमस्थैः संन्यासाश्रमस्थैर्वा भूत्वा नूनमनाश्रमित्वकलङ्कपङ्कः प्रक्षालयितव्यः । अनेनैव प्रकारेण कलिकालेऽप्यत्र ब्रह्मचर्यवानप्रस्थाश्रमयोर्बीजरक्षा सम्भाव्येत, आश्रमधर्मस्य वैषम्यमपि दूरापास्तं भवेत् । प्रवृत्तिपथपथिकैस्तु निवृत्तिमार्गप्रवेशावसरे प्रथमं तीर्थसंन्यासव्रतमाचरद्भिः तीर्थसेवनं साधुसंगं तपश्चरणादिकमनुष्ठाय वानप्रस्थाश्रमस्य कतिचन नियमाः पालयितुं शक्यन्ते । अनया सुकौशलपूर्णयत्नपरम्परया चतुर्णामप्याश्रमाणां तदीयधर्माणां च बीजरक्षणं भवितुमर्हति ।

इदानीं संन्यासधर्मसम्बन्ध-संवलिता विषया मीमांस्यन्ते । कलियुगे सर्वतः पूर्वं भगवच्छङ्करपादैः संन्यासधर्मः संस्कृतः । तदानीं देशकालपात्रविचारतः संन्यासिनां कृते "आचार्य" शब्दस्तैः प्रयुक्तः । तदेतत् 'पद्मपादाचार्य'—'त्रोटकाचार्य'-प्रभृति नामतो विज्ञायते । तस्मिन् समये कुटीचक-बहूदकयोराचारान् पूर्वं परिपाल्य हंसदीक्षया संन्यासिनो दीक्ष्यन्तेस्मेत्यनुमीयते । यतो हि परमहंसस्तु स्वयं सिद्धो भवति, न तस्य काऽपि दीक्षा भवितुमर्हति । एवं संन्यासधर्मसोपानानि क्रमश आरोढुं तदानीं काऽपि मर्यादा आसीत् । संन्यासधर्मडिण्डिमं नादयद्भिरिदानीन्तनैः सर्वैरिव 'परमहंसपरिव्राजकाचार्य'—'जगद्गुरु' प्रभृत्युपाधयः परित्यक्तोपाधिभिस्तैर्न व्यवह्रियन्तेस्म । तैस्तु दीर्घोपाधिपरम्पराव्यवहारस्तपोनाशकारी लज्जाजनकश्चेति प्रतीयतेस्म । अनन्तरं बहुषु शिष्य-परम्परासु व्यतीतासु

'शङ्करसम्प्रदाय' आविर्भूतः। ततश्च दशनामिनां 'गिरी'-'पुरी'-प्रभृतीनां प्रादुर्भावः समजनि। तदनन्तरमेव ब्राह्मणव्यतिरिक्ता अपि दशनामिषु दीक्षिताः समभवन्। मठस्थब्रह्मचारिणां पद्धतिरपि तदैव प्रचलिता। सर्वमिदं भगवतआदिशङ्कराचार्यस्य समयतः परस्तात् प्रचरितमासीत्। फलतः कालान्तरे शनैः शनैरुपर्युक्तं प्रचलितमभवत्। यथा हि शनैः शनैः दशनामिसंन्यासिसंघानामसमर्थतया प्राचीनसंन्यासधर्मस्य सर्वेऽप्याचारा यथायथं प्रतिपाल्यमाना नावलोक्यन्ते। तथैव मठस्थब्रह्मचारिणो हि वानप्रस्था वा संन्यासिनो वेति न ज्ञायते। शङ्करसम्प्रदाये दण्डिस्वामिषु संन्यासधर्माचारपरिपालनमन्यापेक्षया यथा कथञ्चित् किमपि दृष्टिगोचरीभवति। किन्तु तेष्वपि प्राचीनानां कुटीचक-बहूदक हंस-परमहंसानामाचारपरिपालनपरिपाटी न प्रत्यक्षीक्रियते। तेषु यद्यपि ब्राह्मणानामेव प्राधान्यम्। किन्तु विद्याहीना वा सदाचाररहिता वा सर्वे ब्राह्मणब्रुवा अहमहमिकया परमहंसा जायन्ते। तेषु वैदुष्यविमर्शो नावाप्यते। ते किलैकदण्डधरा हंसधर्माणो भवन्ति। वैष्णव-सम्प्रदायेष्वपि कुत्रचन ब्राह्मणानामस्ति प्राधान्यम्, ते हि कुटीचकधर्मप्रधानास्त्रिदण्डधारिणो लभ्यन्ते। वेद-शास्त्रेषु कुटीचकबहूदक-संन्यासिनां शिखासूत्रधारणविधिर्विद्यते नान्यत्र। एवं हि प्राचीनमर्यादा-परिपालनपुरस्सरं क्रमशः सदाचारसोपानारोहणपरिपाटी यावन्न प्रचार्येत, न तावत् संन्यासधर्ममर्यादा स्थैर्यमभ्युपेयादिति।

---

## ७—संन्यासपद्धतेरावश्यकत्वम्!

पुराकाले चतुर्ष्वपि ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-संन्यासाश्रमेषु चतुर्णामपि ब्राह्मणाः, त्रयाणां क्षत्रियाः, द्वयोः वैश्याः, केवलस्यैकस्य गृहस्थाश्रमस्यैव शूद्राः पालनकर्त्तारस्सन्तोऽभ्युदयनिःश्रेयसमार्गे यथायोग्यं प्रवर्त्तन्ते। संन्यासे ब्राह्मणानामेवाधिकार आसीत्। तदानीं संन्यासिनामतीवाल्पीयसी संख्या श्रूयते। ब्राह्मणाः संख्याधिक्येन वानप्रस्थाश्रममेवाधिवसन्तो बभूवुः, कठिने संन्यासाश्रमे सर्वथा विषयविरक्ताः परित्यक्तसर्वेषणा आत्मदर्शिनो व्रततपोनिरता ब्राह्मणा एव प्रविविशुः। किन्तु कलावत्र सर्वतस्तद्विपरीतमिव प्रतिभाति। ब्रह्मचर्यवानप्रस्थाश्रमयोः केवलं नाममात्रमेवावशिष्यतेऽत्र मोक्षभूमौ भारतद्वीपे सर्वेऽपि वर्णाः स्वस्वधर्मपालने नितरां काठिन्यमनुभवन्ति। एतेन गृहस्थाश्रमोऽपि हीनबलः संवृत्तोऽस्ति। सर्वेऽपि वर्णाः संन्यासिनो जायन्ते। अतः

सम्प्रति सन्यासिनां संख्या आवश्यकतामतिशेते । गृहस्थाश्रमेऽसौविध्यमनुभूय जीविकासाधनार्थं सर्वेऽपि वर्णाः संन्यस्यन्तीति कलिकालप्रभावविजृम्भणमेवात्र मुख्यो हेतुः । प्राचीनवैदिकसंन्यासस्य पूर्णता तु दूरापास्ता, छायापि यत्रकुत्र सुमहता काठिन्येन समुपलभ्यते । कुटीचक-बहूदक-हंस-परमहंसाख्यानि यथाधिकारं क्रमश आरोहणीयानि संन्यासाश्रमस्य सोपानान्यपि याथातथ्येन न क्वापि दृष्टिगोचरतामुपयान्ति । यद्यपि कुत्रचन संप्रदाये संन्यासाश्रमे केवलं ब्राह्मणा एव दीक्ष्यते; तथापि तेषामाधिक्येन नैरङ्कुश्यात् हलग्राहिणोऽपि ब्राह्मणाः संन्यासाश्रमे प्रविशन्ति । संन्यासाश्रमस्य मूलभूतं ज्ञानं तु प्रायशस्तेषु दुर्लभमेव संवृत्तम् । केवलस्य बहिरङ्गमात्रस्यैव संन्यासे प्रामाण्यमङ्गीक्रियते । यत्र सम्प्रदाये केवलं ब्राह्मणाः संन्यस्यन्ति, तत्रापि तदाचारेषु सुमहान् भेदो दृश्यते । केचन संन्यासिनः कुटीचकस्य, अपरे बहूदकस्य, अन्ये परमहंसस्य, वा कांश्चिदाचारान् पिपालयिषन्ति । केचन त्रिदण्डिनोऽन्ये एकदण्डिनश्च दृश्यन्ते । दण्डधारणेऽपि मतभेदः पन्थभेदश्च सम्वृत्तः । कुटीचक-बहूदक-हंस-परमहंसाश्रमाणां न कोऽपि शिक्षादीक्षाक्रमो निभाल्यते । कुत्रचित् शिखासूत्रत्यागिनः ब्राह्मणव्यतिरिक्ता अपि परमहंसा अन्यत्र शिखासूत्रधारिणो ब्रह्मचारिनामानो निरीक्ष्यन्ते । ते कृतबहुविवाहा अपि ब्रह्मचारिण एव भवन्ति । एवंभूताश्चतुर्ष्वप्याश्रमेषु कुत्रान्तर्भवन्तु ? क्वापि ब्रह्मचारिभूतैरेतै र्वानप्रस्थ-कुटीचक-बहूदकादीनां यथाक्रमं कथञ्चित् शिक्षाऽप्यधिगम्यते । किन्तु तादृशशिक्षाया न क्वापि समीचीना सुव्यवस्था विद्यते । उपर्युक्तशास्त्रप्रमाणानुसारं कुटीचक-बहूदक-संन्यासिनां कृते शिखासूत्रधारणव्यवस्था लभ्यते । कुटीचकादिचतुर्विध-संन्यासिश्रेणीनां पार्थक्यरूपेण शास्त्रेषु शिक्षाक्रममहत्त्वं निर्दिष्टमास्ते । यत्र कुत्र ब्राह्मणानामेव संन्यासग्रहणविधौ प्रचलिते सत्यपि न तेषां क्रमोन्नतये यथाक्रमाधिकारप्राप्तये वा साक्षात् साहाय्यविधायकः कोऽपि निबन्धग्रन्थः पद्धतिग्रन्थश्चाप्युपलभ्यते । यथा तथा वा श्राद्धतर्पणादिकमनुष्ठाय प्रेषमन्त्रोच्चारणपूर्वकं बुधा अबुधा वा, ज्ञानिनोऽज्ञानिनो वा, हलग्राहिणो विद्याहीना वा ब्राह्मणजातीया यद्यपि संन्यस्यन्ति, किन्तु स्वीययथाक्रमसमुन्नतये न तैः कोऽपि मार्गः समुपलभ्यते । अत एतत्प्राचीनपरम्पराप्रवर्त्तितसंन्याससोपानारोहणाय समुद्यतानां तत्तत्साम्प्रदायिकसाधुसंन्यासिनां कल्याणसाधनाय निबन्धग्रन्थस्य पद्धतिग्रन्थस्य च महदावश्यकत्वं श्रीभारतधर्ममहामण्डलसञ्चालकैरनुभूय संन्यासगीतानामनिबन्धग्रन्थः संन्यासधर्मपद्धतिश्चानुसन्धाय प्रकाश्यते ।

कलिकालेऽस्मिन्निदमेकं महद् वैलक्षण्यं समुपस्थितं यत् चत्वारोऽपि वर्णाः तदीया नार्यश्चापि साधु-संन्यासिनामरूपं ग्राहं ग्राहं संन्यासधर्माचारान् परिपालयन्ति । एतदीयसंख्याऽप्यधिकायते । निवृत्तिपथपथिकाः साधवो नानासम्प्रदायपन्थानुरूपेण विभिन्ननाम्नाऽभिधीयन्ते । तदीयेषु वैज्ञानिकसिद्धान्तेषु, मौलिकरहस्येषु, लक्ष्येषु आचारविचारेष्वपि परस्परविरुद्धो भेदः परिलक्ष्यते । एवं सत्यपि तेषु तासु वा ज्ञानवैराग्ययोगसाधनतपस्यादीनां सद्भावः प्रवर्त्तते येन सनातनधर्मरक्षाकार्यमनायासतो बोभूयते । अतो नैते सम्प्रदायपन्थादयः समुपेक्षणीयतामावहन्ति । तादृशसम्प्रदायपन्थसाधूनामपि अभ्युदयनिःश्रेयससाधनार्थम् आत्मज्ञान-शास्त्रज्ञान-वैराग्याद्यभिवृद्ध्यर्थं सर्वविधसमुन्नत्यर्थं च साक्षाद्रूपेण साहाय्यदायकं ग्रन्थद्वयमिदमित्यत्र न कोऽपि सन्देहलेशावकाश इति ।

---

## ८—संन्यासदीक्षाक्रमः ।

वैदिकसंन्यासपद्धत्यनुसारेण कुटीचकसंन्यासदीक्षा नाम प्रथमं सोपानम् । साधनवैराग्यसम्पादनाय अधिकारप्राप्तिनिमित्तं च सर्वविधैरपि संन्यासिभिः प्राथमिकं कुटीचकसोपानमेवानुसर्त्तव्यम् । ब्राह्मणकुले लब्धजन्मना सर्वविधसंस्कार-सुसंस्कृत-शरीरेण सांसारिक-विषयविषविरक्तचेतसा प्रवृत्ति-निवृत्ति-मार्गयोर्हेयोपादेयतां सुदृढं विजानता मुमुक्षुणा निवृत्तिपथपथिकस्य श्रीगुरुदेवस्य चरणसरोरुहं समाश्रित्य सप्रणिपातं सप्रश्रयं सपादसेवनं च जिज्ञासया कृतकृत्येन भूत्वा निम्ननिर्दिष्टरूपा प्रार्थनाऽनुष्ठेया—

ज्ञानानन्द ! दयासिन्धो ! शरणागतवत्सल ! ।
त्वत्पादपद्मशरणं प्राप्तं मां तारयाऽधुना ॥
संसारे ! त्रिविधान् तापान् सोढुं शक्तिरतः परम् ।
नास्ति नास्त्येव, वैरस्यं तत्र तत्रानुभूयते ॥
दुःखं सर्वं हि तद्रीत्या त्वामहं शरणं गतः ।
कृपां कुरु महाप्राज्ञ ! दुःखनाशो भवेद् यतः ॥
प्राप्नुयां परमं सौख्यं शाश्वतं सर्वतोऽधिकम् ।
समुद्धर दयालो ! मां त्वं समर्थोऽसि सर्वथा ॥
सर्वदा चरणद्वन्द्वं तव मे शरणं भवेत् ।
त्वदृते शरणं नान्यः प्रपन्नं मां समुद्धर ॥

शिष्यं प्रति गुरुवचनम्—

यद्येवं ते निश्चयश्चेद् गत्वा संबोध्य बान्धवान् ।
वत्सागच्छात्र संन्यासस्याधिकारी ततो भव ॥
ब्रह्मविद्योपदेशस्य श्रवणात् कृतकृत्यताम् ।
आपुर्देवाश्च मुनयः तत् सर्वं हि ब्रवीमि ते ॥
श्रुत्वा मत्वाऽनुभूय त्वं जीवन्मुक्तो भविष्यसि ॥

दृष्टानुश्रविकविषयविरक्तचेतसा निवृत्तिमार्गाश्रयणं श्रेयस्करं मन्यमानेन वानप्रस्थाश्रमपरिपालनाभावे वर्षत्रयम्, एकवर्षम्, मासषट्कं वा तीर्थभ्रमण-तीर्थवाससाधुसंगगुरुसन्निधानादिकमाचरता सब्रह्मचरणं तपश्चरणं विदधता साधकेन नैजयो वैराग्याधिकारयोः पूर्वं पूर्णरूपेण परीक्षणमनुष्ठेयम् । ततो नु स्वस्मिन् तीव्रसंवेगमवगत्य मातृपितृस्त्रीबन्धुप्रभृतिभिरनुज्ञातेन श्रीगुरुचरण-शरणं शरणीकृत्य संन्यासदीक्षा गृहेलिमा ।

"यदहरेव विरजेत् तदहरेव प्रव्रजेत्" ।

इति श्रौतनिदेशात् ज्ञानवैराग्यसम्पन्नस्य भाग्यवत आत्मज्ञानिनः साधकस्य प्रव्रज्याग्रहणं न देशकालसापेक्षम् । सत्यामपि वैराग्यप्रबलतायामवशिष्टकर्त्तव्य-बुद्धिना तेन मातृपित्रादिगुरुजनानां स्त्रीपुत्रमित्रादिस्वजनानां च शुभवासना-सूचिका आशिषः, सम्मतयश्च ग्रहीतव्या एव । प्रव्रज्याग्रहणतः पूर्वं देवर्षिपितॄणां श्राद्धतर्पणादिना कृपाप्राप्तिरिव गुरुजनस्वजनादीनामाशीर्वादसम्मतयोऽपि साधकस्य परममङ्गलाय कल्पन्त इति अवशिष्टकर्त्तव्यबुद्धिना मुमुक्षुणा पुरुषेण नूनं विश्वसनीयम् ।

कृतज्ञता, परलोकविश्वासः, दैवेषु जगत्सु श्रद्धा, गुरुभक्तिः, गुरुवेदान्त-वचनेषु विश्वासः, वर्णाश्रमधर्मनिष्ठा, स्वधर्मपरिपालनप्रियता, धृतिः, शमः, दमः, तितिक्षा, विषयोपरतिः, अर्थकामविमुखता, धर्ममोक्षयोस्तीव्रसंवेगः, वित्त-पुत्र-दार-लोकैषणातोऽत्यन्तपराङ्मुखत्वमित्यादयो निवृत्तिपथपथिकोपयोगिवृत्तयोऽधिकारिशिष्ये लभ्यन्त इति श्रीगुरुदेवो निपुणं परीक्ष्य विशेषयोग्यता-वाप्तये कृच्छ्र-चान्द्रायण-तीर्थभ्रमण-गङ्गास्नान-गायत्रीपुरश्चरण-तारकब्रह्ममन्त्र-जपादिद्वारा श्रीगुरुदेवानुज्ञातैरुपायान्तरैर्वा योग्यपात्रताधानपुरःसरं स्वशिष्यं संन्यासदीक्षया दीक्षयेदिति सनातनः पन्थाः ।

---

## १—गायत्रीपुरश्चरणविधिः।

ब्राह्मणवर्णोद्भवानां मानवानां स्वस्मिन् संन्यासग्रहणयोग्यतासम्पादनाय गायत्रीपुरश्चरण-रुद्राध्यायजप-कुष्माण्डहोमविधिष्वन्यतमस्याथवा त्रयाणामेव समुदितानामनुष्ठानमुचितमावश्यकञ्च। तत्र गायत्रीपुरश्चरणस्य सर्वाचार्य्य-सम्मतत्वाद् द्विजमात्रस्य कृते तस्योपयोगित्वाच्च तदनुष्ठानविधिरिह संक्षेपतो-निर्दिश्यते। विधिरयं गुरोराज्ञयैवानुष्ठेयः।

आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य करिष्यमाण-संन्यासग्रहणेऽ-धिकारसिध्यर्थं लक्षजपात्मकं गायत्रीपुरश्चरणमहं करिष्ये। ततः सप्रणव-व्याहृतिगायत्र्याः जपः अष्टोत्तरशतम् अष्टोत्तरसहस्रं वा। "आपोहिष्ठामयोभुव-स्तानऊर्जेदधातन। महेरणायचक्षसे॥ योवःशिवतमोरसस्तस्यभाजयतेहनः। उशतीरिवमातरः॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ। आपोजनयथाचनः॥ एतोन्विन्द्रंस्तवामशुद्धंशुद्धेनसाम्ना। शुद्धैरुक्थैर्वावृध्वांसंशुद्धआशीर्वान्ममत्तु॥ इन्द्रशुद्धोनआगहिशुद्धःशुद्धाभिरूतिभिः। शुद्धोरयिंनिधारयशुद्धोममद्धिसोम्यः॥ इन्द्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे। शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषासति॥ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत। ततोरात्र्यजायतततःसमुद्रोअर्णवः॥ समुद्रादर्णवादधिसंवत्सरोअजायत। अहोरात्राणिविदधद्विश्वस्यमिशतोवशी॥ सूर्याचन्द्रमसौधातायथापूर्वमकल्पयत्। दिवंचपृथिवीञ्चान्तरिक्षमथोस्वः॥ स्वस्तिनोमिमीतामश्विनाभगःस्वस्तिदेव्यदितिरनर्वणः। स्वस्तिपूषाअसुरोदधा-तुनःस्वस्तिद्यावापृथिवीसुचेतुना॥ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया। इन्द्रायपातवेसुतः॥ पावमानीस्वस्त्ययनीःसुदुघाहिपयस्वतीः। ऋषिभिःसं-भृतोरसोब्राह्मणेष्वमृतंहितम्॥" प्रत्येकं सकृद्वा दशवारं वा जप्त्वा। "तत्स-वितुरित्यस्याचार्यमृषिं विश्वामित्रं ऋषिं तर्पयामि। गायत्रीछन्दस्तर्पयामि। सवितारं देवतां तर्पयामि।" एतत्तर्पणं कृत्वा रुद्रं नमस्कृत्य 'कद्रुद्रायेति' रुद्रसूक्तं जपेत्।

"कद्रुद्रायप्रचेतसेमीढुष्टमायतव्यसे। वोचेमशंतमंहृदे॥ यथानोअदितिः करत्पश्वेनृभ्योयथागवे। यथातोकायरुद्रियं॥ यथानोमित्रोवरुणोयथारुद्रश्चि-केतति। यथाविश्वेसजोषसः॥ गाथपतिंमेधपतिंरुद्रजलाषभेषजं। तच्छंयो-सुम्नमीमहे॥ यःशुक्रइवसूर्योहिरण्यमिवरोचते। श्रेष्ठोदेवानांवसुः॥ शंनःकर-त्यर्वतेसुगंमेषायमेष्ये। नृभ्योनारिभ्योगवे॥ अस्मेसोमश्रियमधिनिधेहिशतस्य-नृणां। महिश्रवस्तुविनृम्णं॥ मानःसोमपरिबाधोमारातयोजुहुरंत। आन-

इन्द्रोबाजेभज । यास्तेप्रजाअमृतस्यपरस्मिन्धामन्नृतस्य । मूर्धानाभासोमवेन-आभूषंतोःसोमवेदः ॥"

ततः स्वयं कुशाद्यासनोपविष्टः पवित्रपाणिराचम्य प्राणानायम्य देवताः प्रार्थयेत् । "सूर्यः सोमो यमः कालः सन्ध्ये भूतान्यहःक्षपाः । पवमानो दिक्पति-भूराकाशं खेचरामराः । ब्रह्मशासनमास्थाय कल्पयध्वमिह संनिधिम्" । ततो देशकालौ सङ्कीर्त्य प्रात्यहिकजपं सङ्कल्प्य, गुरवे नमः, गणपतये नमः, दुर्गायै नमः, मातृभ्यो नमः, इति नत्वा त्रिः प्राणानायम्य, तत्सवितुरिति गायत्र्या विश्वामित्र ऋषिः, सविता देवता, गायत्री छन्दः, जपे विनियोगः । "विश्वामित्र-ऋषये नमः शिरसि । गायत्री छन्दसे नमो मुखे । सवितृदेवतायै नमो हृदि । इति न्यस्य, तत्सवितुरङ्गुष्ठाभ्यां नमः । वरेण्यं तर्जनीभ्यां नमः । भर्गोदेवस्य मध्यमा-भ्यां नमः। धीमहानामिकाभ्यां नमः। धियोयोनः कनिष्ठिकाभ्यां नमः । प्रचोदयात् करतलकरपृष्ठाभ्यां नमः" इति करन्यासं कृत्वैवं षडङ्गादि षडङ्गन्यासं कुर्यात्। तद्यथा-"तत्सवितुः हृदयाय नमः । वरेण्यं शिरसे स्वाहा । भर्गोदेवस्य शिखायै वषट्। धीमहि कवचायहुँ । धियोयोनः नेत्रत्रयाय वौषट्, प्रचोदयात् अस्त्राय फट् ।" संस्कृतां जपमालां पात्रे निधाय सम्प्रोक्ष्य "ओं महामाये महामाले सर्वशक्तिस्वरूपिणि । चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मां सिद्धिदा भव"इति प्रार्थ्य, अविघ्नं कुरु माले त्वमिति तामादाय मन्त्रदेवतां सवितारं ध्यायन् हृदये मालां धारयन् मन्त्रार्थं स्मरन् मध्यंदिनावधि जपेत्। अतित्वरायां सार्धत्रयप्रहरा-वधि । जपान्ते पुनःप्रणवमुक्त्वा । "त्वं माले सर्वदेवानां प्रीतिदा शुभदा भव । शिवं कुरुष्व मे भद्रे यशोवीर्यञ्च सर्वदा" इति मालां शिरसि निधाय त्रिःप्राणाना-यम्य न्यासत्रयं कृत्वा जपमीश्वरार्पणं कुर्यात्। प्रत्यहं समान-संख्य एव जप्यो नतु न्यूनाधिके । एवं जपं समाप्य साङ्गतासिध्यर्थं होमं करिष्ये । तदङ्गत्वेन स्थ-ण्डिलादि सर्वं कर्म करिष्ये इति सङ्कल्प्य । अत्र स्थण्डिलं, गोमयेन प्रदक्षिणमुप-लिप्य, दक्षिणेऽष्टौ, उदीच्यां द्वे, प्रतीच्यां चतुः, प्राच्यामर्धमित्यङ्गुलानि त्यक्त्वा, दक्षिणोपक्रमामुदक्संस्थां प्रादेशमात्रामेकां लेखां तस्या दक्षिणोत्तरयोः प्रागायते पूर्वरेखया असंसृष्टे प्रादेशसंमिते द्वे लेखे लिखित्वा तयोर्मध्ये परस्परमसंसृष्टा उदक् संस्थाः प्रागायताः प्रादेशसंमितास्तिस्रः इति षड्लेखा यज्ञीयशकलमूलेन दक्षिणहस्तेनोल्लिख्य लेखासु तच्छकलमुदगग्रं निधाय स्थंडिलमद्भिरभ्युक्ष्य शकलं भंक्त्वाग्नेय्यां निरस्य पाणिं प्रक्षाल्य वाग्यतो भवेत्। ततस्तैजसेनासंभवे मृण्मयेन वा पात्रयुग्मेन संपुटीकृत्य सुवासिन्या श्रोत्रियागारात्स्वगृहाद्वा समृद्धं निर्धूम-

मग्निमाहृतं स्थंडिलादाग्नेय्यां निधाय । जुष्टोदमूना आत्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप्, एह्यग्नेराहूगणो गोतमोऽग्निस्त्रिष्टुप्, अग्न्यावाहने विनियोगः । "ॐ जुष्टोदमूनाअतिथिर्दुरोणइमंनोयज्ञमुपयाहिविद्वान् । विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजनानि । एह्यग्नइहहोतानिषीदादब्धःसुपुरएताभवानः । अवतांत्वारोदसीविश्वमिन्वेयजामहेसौमनसायदेवान" इत्यन्तैरावाह्य आच्छादनं दूरीकृत्य । समस्तव्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती । अग्निप्रतिष्ठापने विनियोगः । ओं भूर्भुवः स्वरों सूर्यनामानमग्निं प्रतिष्ठाप्य । प्रोक्षितेंधनानि निक्षिप्य वेणुधमन्या प्रबोध्य ध्यायेदेवं । चत्वारिश्शृंगा गोतमो वामदेवोऽग्निस्त्रिष्टुप्, अग्निमूर्तिध्याने विनियोगः । "ॐ चत्वारिश्शृङ्गात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य । त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेश ॥ सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः । त्रिपात्प्रसन्नवदनः सुखासीनः शुचस्मितः । स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा । बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवं । तोमरं व्यजनं वामे घृतपात्रं च धारयन् । आत्माभिमुखमासीन एवं रूपो हुताशनः । अग्ने वैश्वानर शांडिल्यगोत्र मेषध्वज प्राङ्मुखो मम सम्मुखो वरदो भवः ॥" गायत्रीपुरश्चरणदशांशहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये इति संकल्प्य । अस्मिन्नन्वाहितेऽग्नौ जातवेदसमग्निमिध्मेन प्रजापतिं प्रजापतिं चाघारदेवते आज्येन अग्नीषोमौ चक्षुषी आज्येन, अत्र प्रधानं सवितारं अमुकसंख्याकाहुतिभिः घृताक्ततिलपायसाहुतिभिः शेषेण स्विष्टकृतमग्निमिध्मसंनहनेन रुद्रं अयासमग्निं देवान्विष्णुं अग्निं वायुं सूर्यं प्रजापतिं चैताः प्रायश्चित्तदेवता आज्येन ज्ञाताज्ञातदोषनिबर्हणार्थं त्रिवारमग्निं मरुतश्चाज्येन विश्वान्देवान्संस्रावेण अंगदेवताः प्रधानदेवताः सर्वास्संनिहितास्संतु । एवं साङ्गोपाङ्गेन कर्मणा सद्यो यक्ष्ये । समस्तव्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती, अन्वाधानसमिद्धोमे विनियोगः । "ॐ भूर्भुवः स्वः स्वाहा । प्रजापतय इदं न मम ।" इध्माबर्हिषोश्च संनहनं । परिसमुह्य परिस्तृणीयात् । तच्चेत्थं—अग्न्योयतनादष्टांगुलपरिमिते देशे ऐशान्यां दिशमारभ्य प्रदक्षिणं समन्तात्सोदकेन पाणिना त्रिः परिमृज्य दशाङ्गुलमिते देशे प्राच्यादिदर्भैः परिस्तृणीयात् । तत्र प्राच्यां प्रतीच्यां चोदगग्रा दर्भा अवाच्यामुदीच्यां च प्रागग्राः पूर्वपश्चात्परिस्तरणमूलयोरुपरि दक्षिणपरिस्तरणं उत्तरपरिस्तरणं तु तदग्रयोरधस्तात् । ते च दर्भा अनियतसंख्या एकैकस्यां दिशि चत्वारश्चत्वार इत्येवं षोडश वा । ततोऽग्नेर्दक्षिणतो ब्रह्मासनार्थं उत्तरतश्च पात्रासादनार्थं कांश्चित्प्रागग्रान्दर्भानास्तृणीयात् अग्नेरैशानतस्त्रिरंभसा परि-

षिच्य । "ओं परिसमूहनं त्रिः । ओं परिस्तरणं । ओं पर्युक्षणं त्रिः" उत्तरास्तीर्णेषु दर्भेषु दक्षिणसव्यपाणिभ्यां क्रमेण द्रव्यस्थालीप्रोक्षण्यौ दर्वीस्रुवौ प्रणीताज्यपात्रे इध्मावर्हिषी चेत्येतावतामेवासादनं । इध्माबर्हिषोरज्जुनिर्णयः । त्रिभिस्त्रिभिः कुशदलैः सव्यं पाणिमधो दक्षिणं चोपरि कुर्वन् पूर्वदलाग्रैरुत्तरदलमूलैश्च त्रिसंधि द्विगुणां रज्जुं कृत्वा पुनर्दक्षिणमधः सव्यं चोपरि कुर्वन् तथैव त्रिगुणये-दन्ते प्रदक्षिणं ग्रन्थिं दद्यात् । एवं षट्त्रिंशद्दर्भदलैरेका रज्जुर्भवति । ततः प्रोक्षणी-पात्रमुत्तानं कृत्वा तत्रानंतर्गर्भितसाग्रसमस्थूलप्रादेशमात्रकुशद्वयरूपे पवित्रे निधाय शुद्धाभिरद्भिस्तत्पात्रं पूरयित्वा गंधपुष्पादि क्षिप्त्वा हस्तयोरंगुष्ठोपक-निष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यामुदगग्रे पृथक्पवित्रे धृत्वा अपस्त्रिरुत्पूय पात्राण्यु-त्तानानि कृत्वा इध्मं च विस्रस्य सर्वाणि पात्राणि त्रिः प्रोक्षेत् । ता अपः कमण्डलौ क्षिपेदित्येके । ततो यथोक्तलक्षणमीशानदिगवस्थितं ब्रह्माणं अस्मिन् कर्मणि त्वामहं वृण इति तत्पाणिं पाणिना गृहीत्वा वृणुयात् । ब्रह्मा वृतोस्मीत्युक्त्वा प्राङ्मुखो यज्ञोपवीत्याचम्य समस्तपाण्यंगुष्ठो भूत्वाग्नेणाग्निं परीत्य दक्षिणत उदङ्मुखः स्थित्वा आसनार्थदर्भदक्षिणभागस्थमेकं दर्भमंगुष्ठानामिकाभ्यां गृहीत्वा 'ओं निरस्तः परावसुः' इति नैर्ऋत्यां निरस्यापः स्पृष्ट्वा, 'इदमहमर्वावसोः सदने सीदामि'इत्युक्त्वोदङ्मुख एव वामोरूपरि दक्षिणपादं संस्थाप्योपविश्य यजमानेन गंधाक्षतादिभिरर्चितः सन्, "ओं बृहस्पतिर्ब्रह्माब्रह्मसदनआशिष्यते बृहस्पतेयज्ञंगोपायसयज्ञंपाहिसयज्ञपतिंपाहिसमांपाहि" इति जपित्वा सदा यज्ञमना एव वर्तेत । ततो यजमानः प्रणीतापात्रमग्नेःप्रत्यङ् निधाय-तत्र प्रागग्नेः पवित्रे निधायोत्पूताभिरद्भिस्तत्पात्रं पूरयित्वा गंधपुष्पाक्षतान्नि-क्षिप्य, ब्रह्मन्नपः प्रणेष्यामीति पृच्छेत् । ततो ब्रह्मा उपांशुः "ॐभूर्भुवःस्वर्बृह-स्पतिप्रसूतः, उच्चैः ॐ प्रणय ।" कर्ता पूर्णपात्रं मुखसममुद्धृत्याग्नेरुत्तरतो दर्भेषु निधाय ते पवित्रे गृहीत्वान्यैर्दर्भैराच्छादयेत् । ततस्ते पवित्रे आज्यपात्रे निधाय तत्पात्रं पुरतः संस्थाप्य तस्मिन्नाज्यमासिच्य अग्नेरुत्तरतः स्थिता-ङ्गारान्भस्मना सहाग्नेरुदक् परिस्तरणाद् बहिर्निरुह्य तेष्वाज्यपात्रमधिश्रित्य ज्वलता दर्भोल्मुकेनावज्वल्यांगुष्ठपर्वमात्रं प्रक्षालितं दर्भाग्रद्वयमाज्ये प्रक्षिप्य पुनर्ज्वलता तेनैव दर्भोल्मुकेन सह द्रव्याज्यं त्रिः पर्यग्नि कृत्वा तदुल्मुकमपास्यापः स्पृष्ट्वा आज्यस्थालीं भुवि कर्षयित्वा उदगुद्वास्य अंगारान्प्रत्यूह्यापः स्पृष्ट्वा तत्रस्थमेवाज्यं । सवितुष्ट्वा हिरण्यस्तूपः सविता पुर उष्णिक्, आज्यस्योत्पवने विनियोगः । "ॐसवितुष्ट्वाप्रसवउत्पुनाम्यच्छिद्रेणपवित्रेणवसोःसूर्यस्य रश्मिभिः"

इति मंत्रेणैकश्रुत्योच्चारितेनैकवारं द्विस्तूष्णीं, उत्तानपाणिद्वयांगुष्ठोपकनिष्ठिकाभ्यामंतयोरसंस्पृष्टगृहीताभ्यामुदगग्राभ्यां पवित्राभ्यां प्रागुत्पूय ते पवित्रे अद्भिः प्रोक्ष्याग्नौ प्रहरेत् 'ॐस्कंदाय स्वाहा, स्कंदायेदं न मम'। अथाग्नेः पश्चात्परिस्तरणाद्बहिरात्मनोऽग्रतो भूमिं प्रोक्ष्य तत्र बर्हिःसन्नहनीं रज्जुमुदगग्रां प्रसार्य तस्यां बर्हिं प्रागग्रमुदगपवर्गमविरलमास्तीर्य तस्मिन्नाज्यपात्रं निधाय स्रुवादि संमार्जयेत्। तद्यथा—दक्षिणेन हस्तेन स्रुक् स्रुवौ गृहीत्वा सव्येन कांश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य स्रुचं निधाय स्रुवं वामहस्ते गृहीत्वा दक्षिणहस्तेन स्रुवस्य बिलं दर्भाग्रै प्रादक्षिण्येन प्रागादि प्रागपवर्गं त्रिः संमृज्याधस्ताद्दर्भाग्रैरेवाभ्यात्मं बिलपृष्ठं त्रिः संमृज्य ततो दर्भाणां मूलैर्दण्डस्याधस्ताद्बिलपृष्ठादारभ्य यावदुपरिष्टाद्बिलं तावत् त्रिः संमृज्याद्भिः प्रोक्ष्य स्रुवं निष्टप्याज्यस्थाल्या उत्तरतः स्रुगसंस्पृष्टं निधायोदकं स्पृष्ट्वा तैरेव दर्भैः स्रुचं संमृज्य स्रुवादुत्तरतो निधाय दर्भानद्भिः क्षालयित्वाग्नावनुप्रहरेत्। होमद्रव्यमभिघार्योदगुद्वास्याग्न्याज्ययोर्मध्येन नीत्वाज्याद्दक्षिणतो बर्हिषि सान्तरमासाद्य पुनरप्यभिघार्य। एकादशांगुलमिते देशे गंधाक्षतपुष्पैरग्निं समंत्रकमर्चयेत्। विश्वानिन इति तिसृणामात्रेयोवसुश्रुतोग्निस्त्रिष्टुप्, द्वयोरर्चने अंत्याज्या उपस्थाने विनियोगः। "ॐविश्वानिनोदुर्गहाजातवेदः। ॐ सिंधुंननावादुरितातिपर्षि। ॐ अग्नेअत्रिवन्नमसा गृणानः। ॐ अस्माकंबोध्यविताततनूनां। ॐयस्त्वाहृदाकीरिणामन्यमानः। ॐ अमर्त्यं मर्त्योजोहवीमि। ॐ जातवेदो यशोअस्मासुधेहि। ॐ प्रजाभिरग्ने अमृतत्वमश्यां। ॐ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवस्योनं। अश्विनं सपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति।" तत आत्मानं चालंकृत्य हस्तं प्रक्षाल्य इध्मबंधनरज्जुमिध्मस्थाने निधाय पाणिनेध्ममादाय मूलमध्याग्रेषु स्रुवेण त्रिरभिघार्य मूलमध्ययोर्मध्यभागे गृहीत्वा। अयंते वामदेवोजातवेदा अग्निस्त्रिष्टुप्, इध्महवने विनियोगः। "ॐ अयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्धस्वचेद्धवर्धयचास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधयस्वाहा। जातवेदसेऽग्नय इदं न मम"। ततः स्रुवेणाज्यमादायाग्नेरायतनस्य वायव्यकोणमारभ्याग्नेयकोणपर्यंतं। 'ॐप्रजापतये स्वाहा, प्राजापतय इदं नमम।' इति मनसा स्मरन् स्वाहेत्युच्चार्य नैरन्तर्येणाज्यधारामग्नाविध्मदारूपरि हुत्वा। पुनराज्यमादायाग्नेरायतनस्य नैर्ऋतकोणत ऐशानीपर्यन्तं तथैव हुत्वा त्यक्त्वा च। स्रुवेणाज्यमादाय 'ॐ अग्नये स्वाहा। अग्नय इदं न मम। अग्नेरुत्तरपार्श्वे पूर्वभागे हुत्वा पुनराज्यं। 'ॐ सोमाय स्वाहा। सोमायेदं न मम'। अग्निपार्श्वे तत्समप्रदेशे-

हुत्वा । आज्यभागान्ते इदं हवनीयद्रव्यं अन्वाधानोक्तदेवताभ्योऽस्तु न म- मेति यजमानस्त्यागं कुर्यात् । अथावदानधर्मः । स्रुवेण स्रुच्याज्यमुपस्तीर्य प्रथमं प्रधानदेवताभागमध्यादंगुष्ठपर्वमात्रं तिरश्चीनाभिरंगुष्ठमध्यमाना- मिकाभिरुदगग्राभिर्नखस्पर्शमकुर्वन्नवदाय दर्व्यामोप्य ततः पूर्वभागं प्राग- ग्राभिस्ताभिस्तथैवावदाय दर्व्यामोप्य पात्रस्थं हविरभिघार्य दर्वीस्थमवत्तं चाभिघार्य विधूमज्वालाग्नौ जुहुयात्। प्रधानहोमः। होमे सप्रणवा व्याहृति- रहिता स्वाहान्ता गायत्री। स्विष्टकृतादि कुर्यात् । यदस्येति हिरण्यगर्भोग्निः स्विष्टकृदतिधृतिः, स्विष्टकृद्धोमे विनियोगः । "ॐ यदस्यकर्मणोत्यरीरिचं यद्वान्यूनमिहाकरं । अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वं स्विष्टंसुहुतंकरोतुमे । अग्नयेस्विष्टकृतेसुहुतहुतेसर्वप्रायश्चित्ताहुतीनांकामानांसमर्धयित्रेसर्वान्नः कामान्त्स- मर्धयस्वाहा। अग्नये स्विष्टकृते इदं न मम।" इति एकश्रुत्योच्चार्य अग्ना- वैशानदेशे जुहुयात्। इध्मबंधनरज्जुं विस्रस्य, 'ॐ रुद्राय स्वाहा, रुद्रायेदं न मम।' अप उपस्पृश्य स्रुवेण प्रायश्चित्ताज्याहुतीः सप्त जुहुयात् । अयाश्चेति विमदोया अग्निः पंक्तिः, प्रायश्चित्ताज्यहोमे विनियोगः। "ॐ अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्वमयाअसि । अयासावयसाकृतोयासन्हव्यमूहिषेयानोधेहि भेषजं स्वाहा। अयासेऽग्नय इदं न मम।" अतो देवाः काण्वो मेधातिथिर्देवा गायत्री सर्वत्र प्राग्वद्विनियोगः। "ॐ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे। पृथिव्याः सप्तधामभिः स्वाहा। देवेभ्य इदं न मम।" इदं विष्णुः काण्वोमेधातिथिर्विष्णुगा- यत्री। "ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं। समूळ्हमस्यपांसुरेस्वाहा। विष्णव इदं न मम।" व्यस्तसमस्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजप्रजापतय ऋषयः, अग्निवायुसूर्यप्रजापतयो देवताः, गायत्र्युष्णिगनुष्टुब्बृहत्यश्छन्दांसि। "ॐ भूः स्वाहा। अग्नय इदं न मम। ॐ भुवः स्वाहा। वायव इदं न मम। ॐ स्वः स्वाहा। सूर्यायेदं न मम। ॐ भूर्भुवः स्वः स्वाहा। प्रजापतय इदं न मम।" अनाज्ञातमिति मंत्रत्रयस्य हिरण्यगर्भोग्निरनुष्टुप् ज्ञाताज्ञातदोषनिबर्हणार्थं प्रायश्चि०। "ॐ अनाज्ञातंयदाज्ञातंयज्ञस्यक्रियतेमिथु। अग्नेतदस्यकल्पयत्व ँ् हिवेत्थयथातथ ँ् स्वाहा। अग्नय इदं न मम। ॐपुरुषसंमितोयज्ञोयज्ञःपुरुष संमितः। अग्नेतदस्यकल्पयत्व ँ् हिवेत्थयथातथ ँ् स्वाहा। अग्नय इदं न मम।" यत्पाकत्रेत्यस्याश्रितोग्निस्त्रिष्टुप्, प्रायश्चि० "ॐयत्पाकत्रामनेसादीनदेक्षा न यज्ञस्य मन्वतेमर्तासः। अग्निष्टद्धोता ऋतुविद्विजानन्यजिष्ठोदेवा ऋतुशोयेजाति स्वाहा अग्नय इदं न मम यद्वोदेवा अभितपामरुतस्त्रिष्टुप्, मंत्रतंत्रविपर्यासादिनिमित्तक

प्रायश्चित्ताज्यहोमे विनियोगः। "ओंयद्वोदेवाअतिपातयामिवाचाचप्रयुतोदेवहेळनं। अरायोअस्माँअभिदुच्छुनायतेन्यत्रास्मन्मरुतस्तन्निधेतनस्वाहा।" मरुद्भ्य इदं न मम। सांगतासिद्ध्यर्थं अनेकनिमित्तं सर्वप्रायश्चित्तं करिष्ये। "ओंभूर्भुवःस्वःस्वाहा।" प्रजापतय इदं न मम। सर्वकर्मप्रपूरणीं भद्रद्रव्यदां पूर्णाहुतिमाज्येन होष्यामि। इति सङ्कल्प्य। स्रुवेणाज्यं गृहीत्वा स्रुचं समबिलां पूरयित्वा तस्यां स्रुवमूर्ध्वबिलं निधाय पुनरधोबिलं निक्षिप्य स्रुवाग्रे कुसुमाक्षतं निधाय सव्यपाणिना स्रुक्स्रुवमूले धृत्वा दक्षिणपाणिना स्रुक्स्रुवं शंखमुद्रया गृहीत्वा तिष्ठन्समपाद ऋजुकायः स्रुवाग्रन्यस्तदृष्टिः प्रसन्नात्मा। समुद्रादूर्मिरिति तिसृणां गोतमो वामदेवोऽग्निस्त्रिष्टप्, मूर्धानमांगिरसो भरद्वाजो वैश्वानरोग्निस्त्रिष्टुप्, पुनस्त्वाग्निर्वसुरुद्रादित्यास्त्रिष्टप्, पूर्णादर्विविश्वेदेवाः शतक्रतुरनुष्टुप्, सप्ततेअग्ने सप्तवानग्निर्जगती, धामन्ते गोतमो वामदेव आपोजगती, पूर्णाहुतौ विनियोगः। "ॐसमुद्रादूर्मिर्मधुमाँउदारदुपांशुनासममृतत्वमानट्। घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः॥ वयंनामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः। उपब्रह्माशृणवच्छस्यमानंचतुःशृंगोवमीद्गौरएतत्॥ चत्वारिशृङ्गात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य। त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँआविवेश॥ ॐमूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निं। कविंसम्राजमतिथिंजनानामासन्नापात्रंजनयन्तदेवाः॥ ॐपुनस्त्वादित्यारुद्रावसवःसमिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः। घृतेनत्वंतन्वोवर्धयस्वसत्याःसन्तुयजमानस्यकामाः॥ ॐपूर्णादर्विपरापतसुपूर्णापुनरापत। वस्नेवविक्रीणावहाइषमूर्जंशतक्रतो॥ ॐसप्ततेअग्नेसमिधःसप्तजिह्वाःसप्तऋषयःसप्तधामप्रियाणि। सप्तहोत्राःसप्तधात्वायजंतिसप्तयोनीरापृणस्वाघृतेन॥ ॐधामंतेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यं, तरायुषि। अपामनीकेसमिथेयआभृतस्तमश्याममधुमंतंतऊर्मिंस्वाहा।" अग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवतेग्नयेद्भ्यश्चेदं न मम। "ॐपूर्णाहुतिमुत्तमांजुहोति। सर्वंवैपूर्णाहुतिः। सर्वमेवाप्नोति। अथोइयंवैपूर्णाहुतिः। अस्यामेवप्रतितिष्ठति॥" विज्योतिषेत्यस्य सुशोजारोग्निस्त्रिष्टुप्, संस्रावहोमे विनियोगः। "ॐविज्योतिषाबृहताभात्यग्निराविर्विश्वानिकृणुतेमहित्वा। प्रादेवीर्मायाःसहतेदुरेवाःशिशीतेशृंगेरक्षसेविनिक्षेस्वाहा॥" अग्नय इदं न मम॥ हविःशेषानुत्तरत उद्वास्य, बर्हिषि पूर्णपात्रं निनयेत्। "ॐपूर्णमसिपूर्णंमेभूयास्सुपूर्णमसिसुपूर्णंमेभूयास्सदसिसन्मेभूयास्सर्वमसिसर्वंमेभूयाः। ॐप्राच्यांदिशिदेवाऋत्विजोमार्जयन्ताम्। दक्षिणायांदिशिमासाः पितरो मार्जयन्ताम्।

अपउपस्पृश्य । प्रतीच्यांदिशिगृहाः पशवो मार्जयन्ताम् । उदीच्यांदिश्यापओषधयोमार्जयन्ताम् । ऊर्ध्वायांदिशिदेवायज्ञपतिर्मार्जयताम् । ॐमाहंप्रजांपरासिषंयानःसयावरीस्थना । समुद्रेवोनिनयानिस्वंपाथोअपीथ ।" ता आपः समुद्रं गच्छेयुः । प्रागादिपरिस्तरणान्युत्तरे विसृजेत् । परिसमूहनादि कृत्वा, अग्निपूजनं कार्यम् । "ॐअग्निस्तुविस्रवस्तमंतुविब्रह्माणमुत्तमम् । अतूर्तंश्रावयत्पतिंपुत्रंददातिदाशुषे । अग्निर्ददातिसत्पतिंसासाहयोयुधानृभिः । अग्निर्हव्यंपुरुष्यदंजेतारमपराजितं ।" अग्नये नमः मंत्रपुष्पांजलिं समर्पयामि । अग्नेत्वन्न इति चतसृणां गौपायना लौपायना वा बंधुसुबंधुः श्रुतबंधुश्चैकर्चा ऋषयः, अग्निर्देवता, द्विपदाविराट्छंदः, अग्न्युपस्थाने विनियोगः । "ॐअग्नेत्वन्नोअंतमउतत्राताशिवोभवावरूथ्यः । वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमंरयिंदाः । सनोबोधिश्रुधिहवमुरुष्याणोअघायतःसमस्मात । तंत्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः ।" मानस्तोक इति विभूतिधारणम् । मानस्तोक इति कुत्सो रुद्रो जगती, विभूतिधारणे विनियोगः । "ॐमानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः । वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहे ॥ त्र्यायुषं जमदग्नेः, ललाटे । कश्यपस्यत्र्यायुषं, कंठे । अगस्त्यस्यत्र्यायुषं, नाभौ । यद्देवानांत्र्यायुषं, दक्षिणस्कंधे । तन्मेअस्तुत्र्यायुषं, वामस्कंधे । सर्वमस्तुशतायुषं, शिरसी । ॐचमेस्वरश्चमेयज्ञोपचतेनमश्च । यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः । ॐस्वस्ति श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलं । आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन । देहिमेहव्यवाहनोंनमोनमः ।" प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः । प्रायश्चित्तान्यशेषाणि तपःकर्मात्मिकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परं । यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां यातु सद्यो वंदे तमच्युतं । अनेन गायत्रीपुरश्चरणदशांशहोमाख्येन कर्मणा भगवान् अग्निरूपी परमेश्वरः प्रीयतां न मम । ॐतत्सत् ब्रह्मार्पणमस्तु । होमान्ते यजमानमभिषिक्तं कुर्यात् ।

"ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः । इंद्रोयावज्रीवृषभोररादताआपोदेवीरिहमामवंतु । याआपोदिव्याउतवास्रवंतिखनित्रिमाउतवायाःस्वयंजाः । समुद्रार्थायाःशुचयःपावकास्ताआपोदेवीरिहमामवंतु । यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां । मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवंतु ॥ यासुराजावरुणोयासुसोमोविश्वेदेवायासूर्जंमदंति । वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवंतु ॥ आयंतामिहदेवाआवतां-

मरुतांगणः। आयंतांविश्वाभूतानियथायमरपाअसत्॥ आपइद्वाउभेषजीरापाअमीवचातनीः। आपःसर्वस्यभेषजीस्तास्तेकृण्वंतुभेषजं। हस्ताभ्यांदशशाखाभ्यांजिह्वावाचःपुरोगवी। अनामयित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि॥ इमाआपःशिवतमाइमाःसर्वस्यभेषजीः॥ इमाराष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः॥ याभिरिंद्रमभ्याषचत्प्रजापतिःसोमंराजानंवरुणंयममंनुं। ताभिरद्भिरभिषिंचामित्वामहंराज्ञांत्वमधिराजोभवेह। महांतंत्वामहीनांसम्राजंचर्षणीनांदेवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत्॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि॥ बलायश्रियैयशसेन्नाद्याय॥ ॐभूर्भुवःस्वःअमृताभिषेकोऽस्तु॥ शांतिःपुष्टिस्तुष्टिश्चास्तु॥"

होमान्ते जले सवितारं सम्पूज्य होमसंख्यादशांशेन गायत्र्यन्ते सवितारं तर्पयामि इत्युक्त्वा तर्पणं कार्यम्। तर्पणदशांशेन गायत्र्यन्ते आत्मानमभिषिच्य नम इति मूर्ध्नि अभिषेकः। अभिषेकसंख्यादशांशेन विप्रभोजनम्। प्रत्यहं शिवसंकल्पमन्त्रस्य जपः पाठः॥ हविष्याशी सत्यवाक् अधःशायी ब्रह्मचारी परिगृहीतभूप्रदेशानतिचारी च भवेत्। इति गायत्रीपुरश्चरणप्रयोगः।

---

## १०—प्रायश्चित्तप्रयोगः

तत्र यदि गुरुदेवो विशेषप्रायश्चित्तमनुष्ठातुमुपदिशेद् स्वयं वा कोऽप्यधिकारी विशेषप्रायश्चित्तं कर्तुमभिलषेत्तदाऽधो निर्दिष्टविध्यनुसारतो यथासम्भवं प्रायश्चित्तं गुरुदेवाज्ञाधीनतया शिष्येणानुष्ठेयम्।

कलियुगे हि यथाविधि गङ्गास्नानात्मकं प्रायश्चित्तमतिसुगमं सर्वाभ्यर्हितञ्चाम्नातमस्ति। यदा हि गायत्रीसेवयाऽधिकारिणो बुद्धिः शुध्यति तदा तस्य स्वात्मनो दोषदर्शने सामर्थ्यमुदेति। ततश्च स प्रायश्चित्तानुष्ठानेन स्वात्मनः शुद्धिमभिलषतीत्यस्मादेव हेतोः प्रायश्चित्ताधिकारो गायत्रीजपानन्तरमादिष्टोऽस्ति।

सर्वज्ञः सर्वशक्तिसम्पन्नश्च गुरुदेवो यथाऽऽदिशेत्तथैव सर्वथा सर्वमान्यतयानुष्ठेयम्। तत्र हि साधारणप्रायश्चित्तप्रयोगश्चैतादृशोऽवसेयः। सचैलं स्नात्वाशक्तौ क्लिन्नवासाः पर्षदग्रे गोवृषप्रत्याम्नायं निष्कादिप्रमाणं ब्रह्मदण्डं निधाय साष्टांगं प्रणम्य पर्षदं प्रदक्षिणीकुर्यात्। "सव धर्मविवेकारो गोप्तारः सकला द्विजाः। मम देहस्य संशुद्धिं कुर्वंतु द्विजसत्तमाः। मया कृतं महाघोरं

ज्ञातमज्ञातकिल्बिषं । प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ । पूज्यैः कृतपवित्रोऽहं-भवेयं द्विजसत्तमाः ।" मां अनुगृह्णन्तु भवन्त इति वदेत् । विप्रैः किन्ते कार्यं मिथ्यामावादीः सत्यमेव वदेति पृष्टः स्वपापं ख्यापयेत् । ममेहजन्मनि जन्मान्तरे वा कृतं यत्किञ्चिद्दुरितं तस्य नाशाय करिष्यमाणे प्रायश्चित्तमुपदिशन्तु भवन्त इति प्रार्थयेत्, ते च पापिना पूजितानुवादकाऽग्रे कृच्छ्रचतुष्टयेन पूर्वोत्तराङ्गसहितेनाचरितेन तव शुद्धिर्भविष्यति तेन त्वं कृतार्थो भविष्यसीति वदेयुः । अनुवादकः कर्त्तारं वदेत् । ततः कर्त्ता ओमित्यङ्गीकृत्य पर्षदं विसृज्य देशकालौ सङ्कीर्त्य ममैतज्जन्मजन्मान्तरार्जितदुरितसमूहसमूलनाशद्वारा सन्न्यासाधिकारप्राप्तये कृच्छ्रचतुष्टयं पूर्वोत्तराङ्गसहितमहमाचरिष्ये । इति सङ्कल्प्य दिनान्ते केशरोमनखादि वापयित्वा स्नात्वा । "आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्मप्रज्ञाञ्च मेधाञ्च त्वं नो देहि वनस्पते ।" इति विहितकाष्ठेन दन्तधावनं कुर्यात् । ततोदश स्नानानि । तत्र भस्मस्नानं । "ईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवो । शिरसि । तत्पुरुषायविद्महेमहादेवायधीमहि । तन्नोरुद्रःप्रचोदयात् । मुखे । अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः । सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः । हृदये । वामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमःकलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमोमनोन्मनायनमः । गुह्ये । सद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः । भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः । पादयोः ।" प्रणवेन सर्वांगेषु भस्म विलिम्पेत् । ईशानादिपदोपेतैर्मन्त्रैर्वा भस्मलेपः । ततः स्नात्वाऽऽचमेत् । अथ गोमयस्नानं । गोमयमादाय प्रणवेन दिक्षु दक्षिणभागं तीर्थे चोत्तरभागं प्रक्षिप्य शेषं । "मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः । वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहे । इत्यभिमन्त्र्य । गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं । ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ।" इति सर्वाङ्गमालिप्य । "हिरण्यशृङ्गंवरुणंप्रपद्येतीर्थंमेदेहियाचितः । यन्मयाभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः । यन्मेमनसावाचाकर्मणावादुष्कृतंकृतं । तन्नइंद्रोवरुणोबृहस्पतिःसविताचपुनंतुपुनःपुनः ।" इति द्वाभ्यां प्रार्थ्य । "याःप्रवतोनिवतउद्वतउदन्वतीरनुदकाश्चयाः । ताअस्मभ्यंपयसापिन्वमानाःशिवादेवीरशिपदाभवंतुसर्वानद्योअशिपदाभवंतु ॥" इतितीर्थमभिमृश्य स्नात्वा द्विराचमेत् । अथ मृत्तिकास्नानं । "अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुन्धरे । शिरसाधारयिष्यामिरक्षस्वमांपदेपदे ।" इति मृत्तिकामभिमन्त्र्य । "उद्धृतासिवराहेणकृष्णेनशतबाहुना । मृत्तिकेहरमेपापंयन्मयादुष्कृतं

कृतं।" इति तामादाय। "नमोमित्रस्यवरुणस्यचक्षसेमहोदेवायतदृतंसपर्यत। दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्यायशंसत।" इति सूर्याय प्रदर्श्य। "इदं विष्णुर्विचक्रमेत्रेधानिदधेपदं। समूळ्हमस्यपांसुरे।" इति शिरःप्रभृत्यङ्गानि विलिम्पेत् स्नात्वा द्विराचमेत्। अथ वारिस्नानं। "आपोअस्मान्मातरःशुंधयंतु-घृतेननोघृतप्वःपुनंतु। विश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतएमि।" इत्युक्त्वा भास्कराभिमुखः स्थितः, इदंविष्णुरिति जपित्वा प्रतिस्रोतो निमज्जति। ततः पञ्चगव्यकुशोदकैः पृथक् पृथक् स्नात्वा स्नानाङ्गतर्पणं कुर्यात्। तद्यथा- "ब्रह्मादयोयेदेवास्तान्देवान् तर्पयामि। भूर्देवान्तर्पयामि। भुवर्देवान् तर्पयामि। स्वर्देवान् तर्पयामि। भूर्भुवः स्वर्देवान् तर्पयामि। कृष्णद्वैपायनादयोयेऋषयः तान् ऋषीन् तर्पयामि। भूर्ऋषीन् तर्पयामि। भुवर्ऋषीन् तर्पयामि। स्वर्ऋषीन् तर्पयामि। भूर्भुवः स्वर्ऋषीन् तर्पयामि। सोमःपितृमान्यमाङ्गिरस्वानग्निष्वात्ताः कव्यवाहनादयोयेपितरः तान् पितॄन् तर्पयामि। भूः पितॄन् तर्पयामि। भुवः पितॄन् तर्पयामि। स्वः पितॄन् तर्पयामि। भूर्भुवः स्वः पितॄन् तर्पयामि। अग्निदग्धाश्चये-जीवायेप्यदग्धाः कुले मम। भूमौ दत्तेन तोयेन तृप्तायां तु परां गतिम्॥ यन्मया दूषितं तोयं शारीरमलसंभवात्। तद्दोषपरिहारार्थं यक्ष्माणं तर्पयाम्यहम्॥" ततः विष्णुश्राद्धं पूर्वाङ्गगोप्रदानञ्च कृत्वा 'अग्निं प्रतिष्ठाप्य पञ्चगव्यहोमं व्याहृतिभिरष्टोत्तरशतमष्टाविंशतिं वा आज्यहोमं च कृत्वा व्रतं ग्रहीष्य इति विप्रान् प्रार्थ्य हुतशेषं पञ्चगव्यं प्रणवेन पिबेत्। मुख्यप्रायश्चित्तकृच्छ्रान् संकल्पानुसारेणानुष्ठाय व्याहृत्याज्यहोमं विष्णुश्राद्धं गोदानानि पूर्ववत् कुर्यात्। पञ्चगव्यविधिस्तु ताम्रे पलाशे वा पात्रे ताम्राया गोमूत्रमष्टमाषप्रमाणं गायत्र्यादाय गंधद्वारामिति श्वेतगोशकृत् षोडशमाषमादाय। "आप्यायःस्वसमेतुतेविश्वतःसोमवृष्ण्यं। भवावाजस्यसंगथे।" इति पीतगोक्षीरं द्वादशमाषं। "दधिक्राव्णोअकारिषंजिष्णोरश्वस्यमातरः। सुरभिनोमुखाकरत्प्रणआयुंषितारिषत्।" इति नीलगोदधि दशमाषं। "घृतंमिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम। अनुष्वधमावहमादयस्वः स्वाहाकृतंवृषभवक्षिहव्यं।" इति कृष्णगोघृतमष्टमाषमादाय। "देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यां।" इति कुशोदकं चतुर्माषं प्रक्षिप्य 'ॐ' इति प्रणवेनालोडयेत्। अत्र माषः पञ्चगुञ्जात्मकः ततसप्तपत्रैः साग्रैः कुशर्जुहुयात्। प्रधानहोमः।

"ॐइरावतीधेनुमतीहिभूतंसूयवसिनीमनुषेदशस्या। व्यस्तभ्नारोदसी-

[1]अभिमुख प्रयोगस्तु गायत्रीपुरश्चरणे द्रष्टव्यः।

विष्णवेतेदाधर्थपृथिवीमभितोमयूखैः स्वाहा। इति पृथिवीं । ॐइदंविष्णुर्विच क्रमेत्रेधानिदधेपदं । समूळ्हमस्यपांसुरेस्वाहा । इतिविष्णुं । मानस्तोकेतनयेमान- आयौमानोगोषुमानोअश्वेपुरीरिषः । वीरान्मानोरुद्रभामितोवधीर्हविष्मतःसद- मित्वाहवामहे । इति रुद्रं । शन्नोदेवीरभिष्टयआपोभवंतुपीतये · शंयोरभिस्रवंतुनः। इत्यपः । ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः । सबुध्न्याउपमाअस्य विष्ठाःसतस्ययोनिमसतस्यविवः। इति ब्रह्माणं । अग्निं सोमञ्च नाम्ना गाय- त्र्या सूर्यं । प्रजापतेनत्वदेतोन्यन्योविश्वाजातानिपरिताबभूव । यत्कामास्ते- जुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणाम् ।” इति समस्त व्याहृतिभिर्वा प्रजापतिं प्रणवेन प्रजापतिं अग्निं स्विष्टकृतश्च पञ्चगव्येनाग्निं वायुं सूर्यं प्रजापतिश्चेति वा महाविष्णुं वा आज्येनाष्टाविंशतिसंख्याहुतिभिरन्वाधानम् । इति प्रायश्चित्तप्रयोगः ।

---

## ११—कुटीचक संन्यासः

प्रवृत्तिमार्गमपहाय परमहंसदशावाप्तितो जीवन्मुक्तिमभिलक्ष्य निवृत्तिपथ- माश्रयितुमिच्छता तद्योग्यमात्मानमवगच्छता मुमुक्षुणा सर्वतः पूर्वं स्वजनमनु- ज्ञाय श्रीगुरुचरणसरोरुहशरणमाश्रयणीयम् । श्रीगुरुदेवानुज्ञातेन तेन प्राय- श्चित्ताद्यनुष्ठानद्वारा स्वात्मनि योग्यपात्रताधानपूर्वकं शुभे देशे काले च प्रथमं कुटीचकदीक्षा ग्रहणीया।

संन्याससंकल्पसिद्धये स्थालीपाकश्राद्धाङ्गतर्पणपुरस्सरं श्राद्धादिविधयो नि- र्वर्तयितव्याः । साधारणतोऽष्टौ श्राद्धानि सम्पाद्य शिरोमुण्डनं कक्षोपस्थशिखा- वर्जमनुष्ठेयम् । तच्च शरीरशुद्धिसापेक्षम् । कुटीचकेन संन्यासिना शिखासूत्रपरि- त्यागो न विधेयः । गुरूपदेशेन शिखासूत्रयो रहस्यविज्ञानमवगत्य ताभ्यामात्म- सम्बन्धः संस्थापनीयः । ततश्च स्वीयाः सर्वविधा अपि स्थावरजङ्गमसम्पत्तयो गुरुदेवानुज्ञया शास्त्रमनुसृत्य तदधिकारिभ्यः प्रदेयाः । गृहस्थाश्रमप्रस्थानसमय एव विहितश्चेद्धनविभागस्तर्हि नानुष्ठेयोऽयं विधिः । तदनन्तरं संन्यासोपकरणानि संशोध्य संन्यासमहासंकल्पः पठनीयः । तत्साधनक्रमप्रयोगः पुरस्तान्निर्दिश्यते ।

---

## १२—श्राद्धाङ्गतर्पणम् ।

तत्रादौ सव्येन सयवजलेन श्राद्धाङ्गतर्पणं करिष्य इति संकल्प्य तीर्थोदकेन तर्पणं कुर्यात् । “ब्रह्माणं तर्पयामि । विष्णुं तर्पयामि । महेश्वरं तर्पयामि देवर्षीन्

तर्पयामि । ब्रह्मर्षीन् तर्पयामि । क्षत्रर्षीन् तर्पयामि । वसून् तर्पयामि । रुद्रान् तर्पयामि । आदित्यान् तर्पयामि । अग्निष्वात्तादि-नित्यपितॄन् तर्पयामि । इन्द्रादि-लोकपालान् तर्पयामि । सनकं तर्पयामि । सनन्दनं तर्पयामि । सनातनं तर्पयामि । पृथिव्यादीनि पञ्चमहाभूतानि तर्पयामि । एकादश चक्षुरादीनि करणानि तर्पयामि । चतुर्विध-भूतग्रामं तर्पयामि । पितरं तर्पयामि । पितामहं तर्पयामि । प्रपितामहं तर्पयामि । मातरं तर्पयामि । पितामहीं तर्पयामि । प्रपितामहीं तर्पयामि । आत्मानं तर्पयामि । पितरं तर्पयामि । पितामहं तर्पयामि । इति तर्पण प्रयोगः ।

## १३—अष्टौ श्राद्धानि ।

[ देवऋषिदिव्यमनुष्यभूतपितृमातृआत्मश्राद्धानि ]

ततः गृहमागत्य देशकालौ स्मृत्वा करिष्यमाण-सन्न्यासाङ्गत्वेनाष्टौ श्राद्धानि पार्वणविधिनाऽऽमेनामेन वा करिष्ये । इति सङ्कल्प्य क्षणं दद्यात् । अत्र सर्वं नान्दी-श्राद्धवत् तेन नापसव्यं तिलस्थाने यवाः युग्मा विप्राः तथा च देवस्थाने विप्रौ द्वौ श्राद्धाष्टके षोडशेत्यष्टादश विप्राः तत्र सत्यवसुसंज्ञका विश्वेदेवाः नान्दीमुखाः स्थानेक्षणः कर्त्तव्यः इत्येकं वृत्वा द्वितीयं वृणुयात् । एवमग्रेऽपि प्रथमे देवश्राद्धे ब्रह्मविष्णुमहेश्वरा नान्दीमुखाः स्थानेक्षणः कर्त्तव्यः । द्वितीये ऋषिश्राद्धे देवर्षि-ब्रह्मर्षिक्षत्रर्षयो नान्दीमुखाः स्थानेक्षणः कर्तव्यः । तृतीये दिव्यश्राद्धे वसुरुद्रा-दित्या नान्दीमुखाः । चतुर्थे मनुष्यश्राद्धे सनकसनन्दनसनातना नान्दीमुखाः । पञ्चमे भूतश्राद्धे पृथिव्यादिपञ्चमहाभूतान्येकादशचक्षुरादिकरणादि-चतुर्विध-भूतग्रामा नान्दीमुखाः । षष्ठे पितृश्राद्धे पितृपितामहप्रपितामहा नन्दीमुखाः । सप्तमे मातृश्राद्धे मातृपितामहीप्रपितामह्यो नान्दीमुखाः । अष्टमे आत्मश्राद्धे आत्मपितृपितामहा नान्दीमुखाः । आत्माऽन्तरात्मा परमात्मेति केचित् । इति द्वौ द्वौ विप्रौ वृणुयात् । सर्वत्र नान्दीमुखत्वं विशेषणं युग्मा विप्राः सत्यवसू दक्षक्रतू वा देवौ । ततः सर्वेषां पाद्यं दत्वा प्राङ्मुखानुदकसंस्थानुपवेश्य प्रार्थयेत् । "सन्न्यासार्थमहं श्राद्धं कुर्वे ब्रूत द्विजोत्तमाः । अनुज्ञां प्राप्य युष्माकं सिद्धिं प्राप्स्यामि शाश्वतीम् । गर्भवासभयाद्भीतस्तथा तापत्रयादति । गुहां प्रविष्टुमिच्छामि परंपदमनामयं ।" ॐ कुरुत इति प्रत्युक्तः सयवऋजुदर्वादि युग्मेनाब्दानपूर्वकं सम्बुद्ध्यन्ते इदमासनमित्यष्टादशस्वासनं दद्यात् । तत आश्वलायनानामर्घ्यपात्रा-सादनं आपस्तम्बादीनां सांकल्पिकत्वान्नार्घ्यं देवार्थमेकं पार्वणाष्टकार्थमष्टावित्येवं नव पात्राणि । सर्वत्र पवित्रद्वयान्तर्हितेषु । "शन्नोदेवीरभिष्टयआपोभवन्तुपीतये । शंयोरभिस्रवन्तुनः ।" इत्यप आसिच्य । विश्वेदेवपात्रे-"यवोऽसि सोमदेवत्यो गोसवे

देवनिर्मितः। प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् देवान् प्रीणया हि नः स्वाहा नमः।" इति मन्त्रस्योहेन यवानोप्य गंधादिपूजनं। अष्टपात्रेषु–यवोऽसिसोमदेवत्योगोसवेदेवनिर्मितः। प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दोमुखान् देवान् प्रीणया हि नः स्वाहा नमः इति प्रथमपात्रे। द्वितीये नान्दीमुखानृषीन् प्रीणया हि नः स्वाहा नमः तृतीये नान्दीमुखान् दिव्यान् प्रीणया हि नः स्वाहा नमः । चतुर्थे नन्दीमुखान् मनुष्यान् प्रीणया हि नः स्वाहा नमः। पञ्चमे नान्दीमुखानि भूतानि प्रीणया हि नः स्वाहा नमः। षष्ठसप्तमाष्टमेषु नान्दीमुखान् पितॄन् प्रीणया हि नः स्वाहा नमः। एकैकं पात्रं द्विधा विभज्य सर्वत्र। "यादिव्याआपःपृथिवीसंबभूवुर्यान्तरिक्षाउतपाथास्वयंजाः। समुद्रार्थायाःशुचयःपावकास्ताआपोदेवीरिहमामवंतु ।" इति मंत्रान्ते विश्वेदेवा नान्दीमुखा इदं वोऽर्घ्यमिति दत्वा ब्रह्मविष्णुमहेश्वरा नान्दीमुखा इदं वोऽर्घ्यं स्वाहा नम इत्यादिना यथायथं षोडशविप्रहस्तेषु दद्यात्। यादिव्यो इति स्रवदनुमन्त्रणं। पात्रं न्युब्जीकृत्य गन्धाद्याच्छादनान्तपूजां तत्र सर्वत्र सम्बुद्ध्यन्ते नान्दीमुखविशेषणयुक्त उच्चारः। भोजनपात्राण्यासाद्य ब्रह्मादिषोडशविप्रकरेष्वग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति मन्त्राभ्यामाहुतिद्वयं दद्यात् नेदमापस्तम्बादीनां। उपस्तीर्यान्नं परिविष्यान्नाभावे आमं तन्निष्क्रयं वा प्रोक्ष्य। "पृथ्वीतेपात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा।" इत्यनेन यथादैवतमन्नस्यामादेर्वा त्यागः। "येदेवादिव्येकादशस्थपृथिव्यामध्येकादशस्थ। अप्सुक्षितोमहिनैकादशस्थतेदेवासोयज्ञमिमंजुषंतां । प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव। यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणाम्।" ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणाहुतं । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना। हरिर्दाता हरिर्भोक्ता हरिरन्नं प्रजापतिः । हरिर्विप्रशरीरस्थो भुङ्क्ते भोजयते हरिः। चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु। अनेनाष्टश्राद्धे नान्दीमुखा देवादयः प्रीयन्तां । आपोशनदानान्ते बलिदानवर्ज्यं भुञ्जीयुः। तृप्तेषु— "उपास्मैगायतानरःपवमानायेन्दवे । अभिदेवांइयक्षसे ॥ अभितेमधुनापयोथर्वाणोअसिश्रयुः। देवंदेवायदेवयु ॥ सनःपवस्वशंगवेशंजनायशमर्वते। शंराजंनोषधीभ्यः॥ बभ्रवेनुःस्वतवसेरुणायदिविस्पृशे। सोमायगाथमर्चत ॥ हस्तच्युतेभिरद्रिभिःसुतंसोमंपुनीतन । मधावाजानांवसुः ॥ अस्रामोमदंतह्यवप्रियाअनुषत। अस्तोषतस्वभानवोविप्राशविष्ठयामतो। योजान्विन्द्रतेहरिः ॥" सम्पन्नमिति पृष्टे रुचिरमिति सर्वे ब्रूयुः नेदमामान्ने। आचान्तेषु द्विजेषु दूर्वायवलाज॰

दधिबदरीफलयुतमन्नेन आमपक्वे सक्तुना वा पिंडदानं कुर्यात्। यथा – गोमयोपलिप्तभूमौ "अपहतासुररक्षांसिवेदिषदः।" इति मंत्रेण दक्षिणारंभाः प्रागायता उदक्संस्था अष्टरेखाः कृत्वा ता अभ्युक्ष्य सर्वासु प्रागग्रान् कुशांश्चातिदीर्घदूर्वाश्वा आस्तीर्य तासु रेखासु दक्षिणरेखामारभ्य प्रतिरेखं पिण्डत्रयार्थं स्थलत्रये प्राक्संस्थं शुन्धन्तामित्यादि मंत्रैर्जलं सिञ्चेत्। तद्यथा—शुन्धन्तां ब्रह्मणो नान्दीमुखाः। शुन्धन्तां विष्णवो नान्दीमुखाः। शुन्धन्तां महेश्वरा नान्दीमुखाः। इति प्रथमरेखायां। तदुत्तररेखासु शुन्धन्तां देवर्षयो नान्दीमुखाः। शुन्धन्तां ब्रह्मर्षयो नान्दीमुखाः। इत्याद्यूहो ज्ञेयः। ततो ब्रह्मणे नान्दीमुखाय स्वाहेत्येकं पिण्डं दत्त्वा द्वितीय एवमेव देयस्तूष्णीम्वेति प्रतिदैवतं पिण्डद्वयमेवमग्रेऽपि। विष्णवे नान्दीमुखाय स्वाहेत्यादयः स्वाहान्ताः पिण्डदानमन्त्रा ऊह्याः। "अत्रपितरोमादयध्वं अमीमदंतपितरो यथाभागमावृषाईषत।" इत्यादि पुनः शुन्धन्तां तत्र मञ्जनमभ्यञ्जनञ्च कृताकृतं। पिण्डान् गन्धादिना सम्पूज्य नत्वोपसम्पन्नमिति विसृज्य विप्रेभ्यो दक्षिणादानादि सर्वं कुर्यात्। इति अष्टौ श्राद्धप्रयोगाः।

---

## १४—संन्यासोपकरणशोधनम्।

(गैरिकवस्त्रकौपीनकन्थाकमण्डलुदण्डादयः)

गैरिकवस्त्र-कौपीन-कन्था-कमण्डलु-दण्डाख्यानां संन्यासचिन्होपयोगिनां पञ्चोपकरणानामस्त्यत्र प्रयोजनीयता। प्रेषमन्त्रग्रहणमात्रेणैव गुरुनिदेशानुसारं निवृत्तिपथपथिकस्य मुमुक्षोः साधकस्य गैरिकवस्त्रादिसंन्यासचिन्हधारणाधिकारः शास्त्रसम्मतः। विना गुरुनिदेशं संन्यासचिन्हधारणं नितरां निषिद्धम्। दण्डप्रकारश्चाधो निर्दिश्यते—

वैणवं दण्डं सत्वचं शिरोभ्रूललाटान्यतमप्रमाणं समूलमङ्गुलिस्थूलं विप्रानीतमेकादशनवचतुस्सप्तान्यतमपर्वकं पर्वग्रन्थियुतं सम्पादयेत्।

कुटीचकसंन्यासिनो दण्डधारणविषये मतद्वयमवगन्तव्यम्। सर्वविधैरपि संन्यासिभिरेकदण्डिभिर्भवितव्यमिति प्रथमः पक्षः। कुटीचकेन त्रिदण्डिना भवितव्यमिति द्वितीयः पक्षः पक्षद्वयमपीदं शास्त्रसम्मतम्।

सर्वाण्यपि संन्यासोपकरणानि सप्रणवं सपुरुषसूक्तपाठं च शङ्खोदकेनाभिषिच्य संस्थापनीयानि।

अथ देवागारे अग्न्यगारे नदीतीरे गोष्ठे अरण्ये वा शुचौ देशे स्वकौपीनादि विवर्णं कृत्वा पूर्वोक्तलक्षणयुक्तं वैणवं सकल्माषग्रंथियुक्तं योनिरहितं अदग्धं

दंडं अकृशमस्थूलं समूलोत्पादितं समपर्वग्रंथियुक्तं समुद्रकं संपाद्य शंखोदकेन १०८ अष्टोत्तर शतप्रणवेन पुरुषसूक्तेन च केशवादिनाममंत्रैरभिषिच्य संस्थाप्य, दंडं जलपवित्रं च शिक्यं पात्रं कमंडलुं । आसनं कौपीनमाच्छादनं कंथा-पादुके इति दश । यष्टिं जलपवित्रं च शिक्यं पात्रं कमंडलुमिति वा पंच संस्थाप्य, उदगयनादौ एकादश्यां द्वादश्यां वा आतुरश्चेत्कस्मिंश्चित्काले वा महासंकल्पं कुर्यात् ।

---

## १५—महासंकल्पः ।

ॐतत्सत् अस्य श्रीमन्महाभगवतः सच्चिदानन्दस्वरूपस्य श्रीमदादिनारायणस्य अचिन्त्याऽपरिमितशक्त्याऽऽश्रयमाणानां महाजलौघमध्ये परिभ्रममाणानां अनेककोटिब्रह्माण्डानां एकतमे अव्यक्तमहदहंकारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृते अस्मिन् महति ब्रह्माण्डकटाहकरण्डे सकलजगदाधारकशक्तिकूर्म्मवराहानन्तैरावतपुण्डरीकवामनकुमुदाञ्जनपुष्पदन्तसार्व्वभौमसुप्रतीकाष्टदिग्गजोपरिप्रतिष्ठितस्य अस्य अतलवितलसुतलतलातलरसातलमहातलपातालाख्यसप्तलोकोपरिभागे भुवर्लोकस्वर्लोकमहर्लोकजनलोकतपोलोकसत्यलोकाख्यलोकषट्कस्य अधोभागे भूर्लोके महाकालायमानफणिराजशेषसहस्रफणामण्डलविधृते दिग्दन्तिशुण्डादण्डस्तम्भिते बहिरन्धतमसावृतेन अन्तःसूर्यप्रकाशितेन लोकालोकाचलेन वलयिते लवणेक्षुसुरासर्पिर्दधिक्षीरस्वादूदकाख्यसप्तसमुद्रविराजिते जम्बुप्लक्षशाककुशक्रौञ्चशाल्मलपुष्करद्वीपसहिते भूमण्डले तुहिनाचलहेमकूटनिषधनीलश्वेतशृङ्गिगन्धमादनपारियात्राख्याऽष्टसीमाचलैर्विभक्ते तन्मध्यवर्त्ति भारतकिंपुरुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालाख्यनववर्षशोभिते जम्बूद्वीपे इन्द्रद्वीपकशेरुमानताम्रपर्णगभस्तिमाननागद्वीपसौम्यगान्धर्ववारुणार्यावर्तोपद्वीपसहिते भारतवर्षे नानावर्णकेसराचलशिखररत्नबीजाञ्चितभूसरोरुहकर्णिकायमानस्य मेरोर्दक्षिणदिग्भागे दक्षिणोदधि हिमाचलयोर्मध्यप्रदेशे निखिलवेदोदितकर्म्मफलसाधनगंगासलिलवाहिन अन्तःस्थिताऽत्यन्तसन्तापसन्ततिकृतान्तवेदान्तवृत्तान्तश्रुतिस्मृतिपरिशीलनस्वान्तः शान्तिविधायिनि वेदविन्मुनिगणचरणविहरणतपश्चरणामृतवर्षिणि अस्मिन् पुण्ये भारतद्वीपे साम्यवर्तिकुरुक्षेत्रादिभूमध्यरेखायां, अयोध्यामथुरामायाकाशीकाञ्च्यवन्तिद्वारावत्यादिमुक्तिक्षेत्रवत्यां

अस्यां कर्म्मभूमौ भागीरथीविन्ध्याचलयोः उत्तरदिग्भागे श्रीशैलहेमकूट-किष्किन्धागरुडाचलव्यङ्कटाचलहस्तिगिरिप्रभृतिपुण्यशैलवति सकलभूमण्डल-शिरोवर्तिनि गिरिजागिरिजापतिराजिराजिते आर्य्यावर्तैकदेशे अविमुक्त-वाराणसीक्षेत्रे महाश्मशाने असीवरुणयोर्मध्ये आनन्दवने गौरीमुखे त्रिकण्टक-विराजिते उत्तरवाहिन्या भागीरथ्याः पश्चिमे तीरे अन्नपूर्णादुर्गाकेदारेश्वर-विश्वनाथभैरवढुंढिराजादिदेवमण्डलमण्डिते जन्हुतनयापरमपावनवनवाहिनि परमसुन्दरतरुराजिविराजिते शैवशाक्तसौरवैष्णवगाणपत्यादिपरमभक्तगण-विहरणस्वस्वोपास्यदेवमधुरनामकीर्त्तनपवित्रीकृते परमानन्दनिकेतने बुधजन-मानसानन्दविधायिनि श्रीकाशीधामनि[1] श्रीमदनेककोटिब्रह्माण्डघटनायाः सरोमविवरस्य विराड्रूपिणो भगवतो महापुरुषस्य शेषपर्य्यङ्कशायिनः श्रीविष्णोराज्ञया प्रवर्त्तमानस्य तन्नाभिस्थानसरोरुहादुत्पन्नस्य सकलवेदनिधेः जगत्स्रष्टुः परार्द्धद्वयजीविनो ब्रह्मणः प्रथमपरार्द्धपञ्चाशत्यतीतायां द्वितीयपरार्द्धे प्रथमवर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे उदयादित्रयोदशघटिकासु अतीतासु श्रीश्वेतवाराहकल्पे स्वायम्भुवस्वारोचिषोत्तमतामसरैवतचाक्षुषाख्येषु षट्सु मनुषु व्यतीतेषु उपरितनघटिकायां सप्तमे वैवस्वतमन्वन्तरे सप्तविंशति-महायुगेषु गतेषु अष्टाविंशतितमे महायुगे पुरुहूतनामेन्द्रसमये कृतत्रेताद्वापरेषु गतेषु वर्त्तमाने कलियुगे बौद्धावतारे विक्रमशके बार्हस्पत्यमानेन......नाम संवत्सरे......अयने......ऋतौ......मासे......पक्षे......तिथौ......वासरे...... नक्षत्रे......योगे......करणे......राशिस्थिते सूर्य्ये......राशिस्थिते चन्द्रे...... राशिस्थिते भौमे......राशिस्थिते बुधे......राशिस्थिते देवगुरौ......राशिस्थिते शुक्रे......राशिस्थिते शनौ......राशिस्थिते राहौ......राशिस्थिते केतौ एवं ग्रहगुणविशेषणविशिष्टायां शुभपुण्यतिथौ...लग्ने...गोत्रः...शर्म्मा जीवनमुक्ति-प्रदपरमहंसगतिप्राप्तिनिमित्तं कुटीचकसंन्यासव्रतग्रहणमहं करिष्ये।

तत्रादौ गणपतिपूजनं वसोर्द्धारासहितं गौर्यादिषोड़शमातृकापूजनं नान्दी-श्राद्धादिकं च करिष्ये।

---

१. स्थानान्तरपुरोधसस्तत्स्थानसम्बद्धं देशविभागस्थानमाहात्म्यादिकं प्राचीनाचारमव-गच्छन्ति तैःकिल वाराणसीविषयकं वर्णनं परिवर्तनीयं निजानुकूलं चानुष्ठेयम्।

## १६—गणपतिपूजनम् पुण्याहवाचनम् च ।

( कलशस्थापनं पूजनञ्च )

गणपतिपूजनम्— गणानांत्वा शौनको गृत्समदो गणपतिर्जगती । गणपत्यावाहने विनियोगः । "ॐ गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमं । ज्येष्ठराजंब्राह्मणांब्रह्मणस्पतआनंःश्रृण्वंनूतिभिःसीदसादनम् ।" महागणपतये नमः । आवाहनादि मंत्रपुष्पांजल्यन्तं । "निषुसीदगणपतेगणेषुत्वामाहुर्विप्रतमंकवीनां । नऋतेत्वात्क्रियतेकिंचनारेमहामर्कंमघवञ्चित्रमर्च ।" अनेन पूजनेन महागणपतिः प्रीयतां न मम ।

कलशस्थापनम्—"महीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां । पिपृतांनोभरीमभिः" । इति भूमिं स्पृष्ट्वा । "ॐओषधयःसंवदंतेसोमेनसहराज्ञा । यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि ।" तंडुलपुंजौ कृत्वा । "ॐ आकलशेषुधावतिपवित्रेपरिषिच्यते । उक्थैर्यज्ञेषुवर्धते ।" द्वौ कलशौ निधाय । "ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या । असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेश्रृणुह्यासुषोमया ।" इति तीर्थजलेन प्रत्येकं पूरयित्वा । "ॐ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं । ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ।" इति गंधं प्रक्षिप्य । "ॐ याओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा । मनैनुबभ्रूणामहंशतंधामानिसप्तच ।" सर्वौषधीः प्रक्षिप्य । "ॐ कांडात्कांडात्प्ररोहंतीपरुषःपरुषःपरि । एवानोदूर्वेप्रतनुसहस्त्रेणशतेनच ।" दूर्वाः । "ॐ अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता । गोभाजइत्किलासथयत्सनवथपूरुषं ।" पल्लवान् । "ॐ स्योनापृथिविभवानृक्षरानिवेशनि । यच्छानःशर्मसप्रथः ।" इति मृदः । "ॐ याः फलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुंचंत्वंहस ।" फलं । "ॐ सहिरत्नानिदाशुषेसुवातिसविताभगः । तंभागंचित्रमीमहे ।" रत्नानि । "ॐ हिरण्यरूपःसहिरण्यसंदृगपान्नपात्सेदुहिरण्यवर्णः । हिरण्ययात्परियोनेर्निषद्याहिरण्यदाददत्यन्नमस्मै ।" हिरण्यं । "ॐ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः । तंधीरासःकवयउन्नयंतिस्वाध्योमनसादेवयंतः ।" वस्त्रं । "ॐ पूर्णादर्विपरापतसुपूर्णापुनरापत । वस्नेवविक्रीणावहाइषमूर्जंशतक्रतो ।" सतंडुलाभ्यां पूर्णपात्राभ्यां कलशयोराननं पिदध्यात् । तत्वायामि शुनःशेपोवरुणस्त्रिष्टुप् । वरुणावाहने विनियोगः । "तत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः । अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः ।" अस्मिन् कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकं आवाह-

-यामि। संपूज्य। कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः। मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः। कुक्षौ तु सागरास्सर्वे सप्तद्वीपा वसुंधरा। ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः। अंगैश्च सहितास्सर्वे कलशं तु समाश्रिताः। अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा। आयान्तु मम शांत्यर्थं दुरितक्षयकारकाः। सर्वे समुद्रास्सरितस्तीर्थानि जलदा नदाः। आयांतु मम शांत्यर्थं दुरितक्षयकारकाः। उत्तरकलशे अक्षतान्क्षिपेत्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः। अवनिकृतजानुमण्डलः कमलमुकुलमंजलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णकलशं धारयित्वा आशिषः प्रार्थयते। प्रार्थनामाह एताः सत्या आशिषः सन्तु। दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानि च तेनायुः प्रमाणेन पुण्याहं दीर्घमायुरस्त्विति भवंतो ब्रुवन्तु। विप्राः—तेनायुः प्रमाणेन पुण्याहं दीर्घमायुरस्तु। ब्राह्मण-हस्ते शिवा आपः सन्तु। सन्तु शिवा आपः। सौमनस्यमस्तु। अस्तु सौमनस्यं। अक्षतं चारिष्टंचास्तु। अस्त्वक्षतमरिष्टं च। गन्धाः पान्तु। सौमंगल्यं चास्तु। अक्षताः पान्तु। आयुष्यमस्तु। पुष्पाणि पान्तु। सौश्रियमस्तु। ताम्बूलानि पान्तु। ऐश्वर्यमस्तु। दक्षिणाः पान्तु। बहुदेयं चास्तु। दीर्घमायुःश्रेयश्शान्तिःपुष्टिस्तुष्टिश्चास्तु। अस्तु दीर्घमायुः श्रेयश्शान्तिः पुष्टिस्तुष्टिश्च। श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चायुष्यं चास्तु। यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारंभाः शुभाः शोभनाः प्रवर्तन्ते तमहमोंकारमादिं कृत्वा ऋग्यजुःसामाशीर्वचनं बहुऋषिमतं संविज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये। वाच्यतामिति विप्राः ततो यजमानः। "ओं भद्रं कर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः। स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः॥ ॐद्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रयंसत्। द्रविणोदावीरवतीमिषंनोद्रविणोदारासतेदीर्घमायुः॥ ओंसवितापश्चात्तात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात्। सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः॥ ओंनवोनवोभवतिजायमानोऽह्नांकेतुरुषसामेत्यग्रं। भागंदेवेभ्योविदधात्यायंप्रचंद्रमास्तिरतेदीर्घमायुः॥ ॐउच्चादिवि दक्षिणावंतोअस्थुर्येऽअश्वदाःसहतेसूर्येण। हिरण्यदाअमृतत्वंभजंतेवासोदाःसोमप्रतिरंतआयुः॥ ॐआपउंदंतुजीवसेदीर्घायुत्वायवर्चसे॥ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि। जातवेदोयशोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वमश्यां॥ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवस्योनं। अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति॥ संस्था-

सिंचामियज्जुषाप्रजामायुर्धनं च ॥" व्रतनियमतपःस्वाध्यायक्रतुदमदान-विशिष्टानां ब्राह्मणानां मनः समाधीयतां । विप्राः । समाहितमनसः स्मः । यजमानः । प्रसीदंतु भवंतः । विप्राः । प्रसन्नाः स्मः । यजमानः । शांतिरस्तु । पुष्टिरस्तु । तुष्टिरस्तु । वृद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । शिवं कर्मास्तु । कर्मसमृद्धिरस्तु । धर्मसमृद्धिरस्तु । वेदसमृद्धिरस्तु । शास्त्रसमृद्धिरस्तु । पुत्रसमृद्धिरस्तु । धनधान्यसमृद्धिरस्तु । इष्टसंपदस्तु । बहिर्देशे सर्वारिष्टनिरसनमस्तु । यत्पापं तत्प्रतिहतमस्तु । यच्छ्रेयस्तदस्तु । उत्तरे कर्मण्यविघ्नमस्तु । उत्तरोत्तरमहरहरभिवृद्धिरस्तु । उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यंतां । इष्टाः कामाः संपद्यंतां । तिथिकरणमुहूर्तनक्षत्रसंपदस्तु । तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयंताम् । तिथिकरणे मुहूर्तनक्षत्रे सग्रहे सदैवते प्रीयेताम् । दुर्गापाचाल्यौ प्रीयेताम् । अग्निपुरोगा विश्वेदेवाः प्रीयंताम् । इन्द्रपुरोगा मरुद्गणाः प्रीयंताम् । ब्रह्मपुरोगाः सर्वे वेदाः प्रीयंताम् । विष्णुपुरोगाः सर्वे देवाः प्रीयंताम् । माहेश्वरीपुरोगाः उमामातरः प्रीयंताम् । वसिष्ठपुरोगा ऋषिगणाः प्रीयंताम् । अरुंधतीपुरोगा एकपत्न्यः प्रीयंताम् । ऋषयश्छंदांस्याचार्या वेदा देवा यज्ञाश्च प्रीयंताम् । ब्रह्म च ब्राह्मणाश्च प्रीयंताम् । श्रीसरस्वत्यौ प्रीयेताम् । श्रद्धामेधे प्रीयेताम् । भगवती कात्यायनी प्रीयताम् । भगवती माहेश्वरी प्रीयताम् । भगवती पुष्टिकरी प्रीयताम् । भगवती तुष्टिकरी प्रीयताम् । भगवती ऋद्धिकरी प्रीयताम् । भगवती वृद्धिकरी प्रीयताम् । भगवंतौ विघ्नविनायकौ प्रीयेताम् । भगवान्स्वामी महासेनः सपत्नीकः ससुतः सपार्षदः सर्वस्थानगतः प्रीयताम् । हरिहरहिरण्यगर्भाः प्रीयंताम् । सर्वा ग्रामदेवताः प्रीयंताम् । सर्वाः कुलदेवताः प्रीयंताम् । सर्वा वास्तुदेवताः प्रीयंताम् । बहिरपः । हता ब्रह्मद्विषः । हताः परिपंथिनः । हता अस्य कर्मणो विघ्नकर्तारः । शत्रवः पराभवं यांतु । शाम्यंतु घोराणि । शाम्यंतु पापानि । शाम्यंत्वीतयः । अन्तः शुभानि वर्धन्ताम् । शिवा आपः संतु । शिवा ऋतवः संतु । शिवा अग्नयः संतु । शिवा आहुतयः संतु । शिवा ओषधयः संतु । शिवा वनस्पतयः संतु । शिवा अतिथयः संतु । अहोरात्रे शिवे स्याताम् । निकामे निकामे नः पर्जन्यो वर्षतु । फलिन्यो न ओषधयः पच्यंताम् । योगक्षेमो नः कल्पताम् । शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वेग्रहाः प्रीयंताम् । भगवान्नारायणः प्रीयताम् । भगवान्पर्जन्यः प्रीयताम् । प्रीयतां भगवान्स्वामी महासेनः । पुण्याहकालान्वाचयिष्ये । वाच्यतामिति विप्राः । "आउद्गातेवशकुनेसामगायसिब्रह्मपुत्र-

इवसवनेषुशंससि। वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्व-तोनःशकुनेपुण्यमावद।" याज्यायजतिप्रत्तिर्वैयाज्ययापुण्यैवलक्ष्मीः पुण्यामेवत-ल्लक्ष्मींसंभावयतिपुण्यांलक्ष्मींसंस्कुरुते। "यत्पुण्यंनक्षत्रं। तद्बट्कुर्वीतोपव्युषं। यदावैसूर्यउदेति। अथनक्षत्रंनैति। यावतितत्रसूर्योगच्छेत्। यत्रजघन्यंपश्येत्। तावतिकुर्वीतयत्कारीस्यात्। पुण्याहएवकुरुते। तानिवाएतानियमनक्षत्राणि। यान्येवदेवनक्षत्राणि। तेषुकुर्वीतयत्कारीस्यात्। पुण्याहएवकुरुते।" मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय करिष्यमाण-कुटीचकसंन्यासग्रहणकर्मणः पुण्याहं भवंतो ब्रुवंतु। इति त्रिर्वदेत्। ॐ पुण्याहमिति त्रिर्विप्राः। "ॐस्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्य-यस्पतिः। बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयआदित्यासोभवंतुनः॥" आदित्य-उदयनीयःपथ्ययैवेतःस्वस्त्याप्रयंतिपथ्यांस्वस्तिमभ्युद्यंतिस्वस्त्यैवेतःप्रयंतिस्वस्त्यु-द्यंतिस्वस्त्युद्यंति। "ॐ स्वस्तिनइंद्रोवृद्धश्रवाः। स्वस्तिनःपूषाविश्ववेदाः। स्वस्तिनस्तार्क्ष्योअरिष्टनेमिः। स्वस्तिनोबृहस्पतिर्दधातु। अष्टौदेवावसवःसोम्या-सः। चतस्रोदेवीरजराश्रविष्ठाः। तेयज्ञंपांतुरजसःपरस्तात्। संवत्सरीणम-मृतꣳस्वस्ति।" मह्यमित्यादि पूर्ववत् पठित्वाकर्मणे स्वस्ति भवंतो ब्रुवंत्विति त्रिः। ॐआयुष्मते स्वस्तीति प्रतिवचनं त्रिः। "ॐऋध्यामस्तोमंसनुयामवाजमानोमंत्रं-सरथेहोपयातं। यशानपक्वंमधुगोष्वंतराभूतांशोअश्विनोःकाममप्राः॥" सर्वा-मृद्धिमृध्नुयामितितंवैतेजसैवपुरस्तात्पर्यंभवच्छंदोभिर्मध्यतोपरैरुपरिष्टाद्गायत्र्यास-र्वतोद्वादशाहं परिभूयसर्वामृद्धिमाप्नोत्सर्वामृद्धिमृध्नोतियएवंवेद। "ऋध्यास्म हव्यैर्नमसोपद्य। मित्रंदेवंमित्रधेयंनोअस्तु। अनूराधान्हविषावर्धयंतः। शतं जीवेमशरदःसवीराः। त्रीणित्रीणिवैदेवानामृद्धानि। त्रीणिच्छंदाꣳसि। त्रीणि-सवनानि। त्रयइमेलोकाः। ऋध्यामेवतद्वीर्यएषुलोकेषुप्रतितिष्ठति।" मह्य-मित्यादि पूर्ववत् पठित्वा कर्मणः ऋद्धिं भवंतो ब्रुवंत्विति त्रिः। ॐऋध्यता-मिति प्रतिवचनं त्रिः। "ॐ श्रियेजातःश्रियऽआनिरियायश्रियंवयोजरितृभ्यो दधाति। श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ॥" श्रियए-वैनंतच्छ्रियामादधातिसंततमृचावषट्कृत्यं संतत्यैसंधीयतेप्रजयापशुभिर्य-एवंवेद। "यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत्। अमुंचलोकमिदमुचसर्वं। तन्नोनक्ष-त्रमभिजिद्विजित्य। श्रियंदधात्वहृणीयमानं। अहेबुध्नियमंत्रंमेगोपाय। यमृषय-स्त्रयीविदाविदुः। ऋचःसामानियजूꣳषि। साहिश्रीरमृतासतां।" एतैर्मन्त्रै-र्नीराजनं कारयन्ति। मह्यमित्यादि पूर्ववत् पठित्वा कर्मणः श्रीरस्त्विति भवन्तो

ब्रुवंत्विति त्रिः । ॐ अस्तु श्रीरिति त्रिर्विप्राः । वर्षशतं पूर्णमस्तु । गोत्राभि-वृद्धिरस्तु । कर्मांगदेवता प्रीयंताम् । "ॐ शुक्रेभिरंगैरजआततन्वान्क्रतुंपुनानः कविभिःपवित्रैः । शोचिर्वसानःपर्यायुरपांश्रियोमिमीतेबृहतीरनूनाः ।" तद्-प्येषः श्लोकोऽभिगीतो मरुतः परिवेष्टारोमरुत्तस्यावसनगृहे । आविक्षितस्यकाम-प्रेर्विश्वेदेवाः सभासद इति । तत उत्तरकलशं दक्षिणहस्ते दक्षिणकलशं वाम-हस्ते गृहीत्वा ताभ्यां धाराद्वयं सन्ततं पात्रे निषिंचेदेभिर्मंत्रैः । वास्तोष्पत इति चतसृणां वसिष्ठो वास्तोष्पतिस्त्रिष्टुबंत्यागायत्री । उदकसेचने विनियोगः । "ॐवास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोअममीवोभवानः । यत्त्वेमहेप्रतितन्नोजुष-स्वशंनोभवद्विपदेशंचतुष्पदे ॥ वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिं-दो । अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व ॥ वास्तोष्पतेशग्मयासंसदा तेसक्षीमहिरण्वयागातुमत्या । पाहिक्षेमउतयोगेवरंनोयूयंपातस्वस्तिभिःसदानः ॥ अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् । सखासुशेवएधिनः ॥" शिवं शिवं । पात्रपातितजलेन पल्लवदूर्वाभिरुदङ्मुखास्तिष्ठन्तो विप्रा अभिषिञ्चेयुः ॥ समुद्र-ज्येष्ठा इति चतसृणां वसिष्ठ आपस्त्रिष्टुप् । त्रायंतामिति तिसृणां विश्वामित्र-जमदग्निवसिष्ठा आपोनुष्टुप् । इमाआप इति तिसृणामैतरेय आपोनुष्टुब्जगत्य-नुष्टुभः । देवस्यत्वेत्यस्यैतरेयः सविताश्विनौ पूषा च यजुः । समस्तव्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती । अभिषेके विनियोगः । ॐसमुद्रज्येष्ठा० ॥

---

## १७—मातृकापूजनम् ।

सर्वकर्मसु प्रधानसङ्कल्पानन्तरं मातृपूजनं कुर्यात्, पीठे पिष्टातकेन षोडशमातॄर्लिखित्वा गोमयेन दूर्वाभिर्विभूष्य अर्घ्यं संस्थाप्य पूजां कुर्यात् । एतन्तेति प्रतिष्ठा । "आएतन्तेदेवसवितर्यज्ञंप्राहुर्बृहस्पतयेब्रह्मणेतेनयज्ञमवतेन-यज्ञपतिंतेनमामव । मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञ-समिमंदधातु । विश्वेदेवासइहमादयंतामोंप्रतिष्ठ ।" ओंभूर्भुवः स्वः गणपति-सहितगौर्यादिषोडशमातरः इहागच्छन्तु इह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु । अथ ध्यानम् । गौरीपद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता । इति

# सूर्योदयः ।

एकादशे वर्षे | पौष-माघयोः-पूर्णिमा सं० १९९२ | सप्तम-अष्टम-संख्ये


## सम्पादकीया अभिप्रायाः ।

### कुम्भपर्व प्रयागश्च ।

प्रयागस्य महिमा बहुत्र पुराणेषु प्रगीतो विद्यते । महाभारते धौम्यतीर्थयात्राप्रसंगतः समुदीरितं विद्यते यत्—

'यत्रायजत भूतात्मा पूर्वमेव पितामहः ।
"प्रयाग" इति विख्यातस्तस्माद् भारतसत्तम ! ।"

श्रुतावपि प्रयागमहिमा गीतोऽस्ति ।

"सितासिते सरिते यत्र संगते तत्राप्लुतासो दिवमुत्पतन्ति ।"

कालिदासेनापि रघुवंशकाव्ये एवमेवोक्तम्—माघे मासि तु विशेषतस्तन्माहात्म्यं कीर्तितं विद्यते

"सितेसितेतु यः स्नानि माघमासे युधिष्ठिर ।
न तस्य पुनरावृत्तिरिह लोके प्रजायते"

इत्यादि बहुशः प्रयागमहिमा शास्त्रेषु संकीर्तितः समुपलभ्यते ।

कुम्भपर्वणो विषये विशेषवर्णनं न क्वापि समुपलभ्यते । बृहस्पतिग्रहो यदा कुम्भराशिस्थो भवति तदा प्रयागे माघे मासि, वृषराशिस्थे तस्मिन् वैशाखे हरद्वारतीर्थे, सिंहराशिस्थे च श्रावणे मासि नासिकक्षेत्रे, वृश्चिकराशिगे गुरौ कार्तिके मासे विशालायामुज्जयिन्यां (उज्जैननगरे) प्रति द्वादशवर्षं कुम्भपर्व भवति ।

एतस्येतिहासोऽपि सम्पूर्णः कोऽपि नैवोपलभ्यते । केऽपि कथयन्ति यद् समुद्रमन्थनतो निःसृतममृतघटमादातुं परस्परं कलहायमाना देवासुरा एषु

एव चतुर्षु स्थानेषु सुधाघटं संस्थाप्य परस्परं युयुधुरतस्तत्र तत्रामृतविन्दुनिपातेन तेषां स्थानानां पावित्र्याधिक्यं सञ्जातम् इति पावनातिशयेन तत्स्मृतिमूलतया चेदं पर्व तेषु तेषु विशेषस्थानेषु प्रतिष्ठापितं विद्यत इति ।

कियन्तश्च कथयन्ति यद् गरुड़देवोऽमृतकलसमादाय विष्णुलोकं प्रस्थितस्तेषु तेषु स्थानेषु श्रान्तः समुपविष्ट इति तत्रामृतविन्दुनिपातेन स्थानमाहात्म्यमुद्दिश्य तत्स्मृतौ पर्वप्रतिष्ठा जातेति ।

विशेषतः पर्य्यालोचनया प्रतीयते, यद् इद् कुम्भपर्व अनादिकालादेव प्रचलितं विद्यते । प्रथमं भारतीयेषु तेषु भौगोलिकसौविध्येन चतुर्षु स्थानेषु प्राचीना धार्मिका आचार्या विद्वांसः संघीभूय धर्मोपरि निर्णयं कुर्वन्तिस्म । तत्र निर्णयं कृत्वा पुनर्जगति प्रचाराय पर्य्यटनं कुर्वन्तिस्म । पुनश्च स्थानभेदेन द्वादशवत्सरानन्तरं समेता भूत्वा धर्मनिर्णयं कुर्वन्तिस्म । बौद्धकाले च हर्षवर्द्धन-प्रभृतयो राजानः एष्वेव स्थानेषु बौद्धविदुषां महतीं सभां कारयित्वा धर्मप्रचारव्यवस्थां विदधति स्म । चीनदेशयात्री इत्सिंगोऽपि अस्य जनसम्मर्दस्य विषये उल्लेखं कृतवानस्ति, इत्येवं परमप्रसिद्धमिदं महापर्व पूर्वं सर्वेषां महर्षीणां संगमस्थानमासीत् । सम्प्रत्यपि अटल, निर्वाणी, जूना, निरञ्जनी प्रभृति 'अखाड़ा' शब्दवाच्यानां मान्यानां साधुसम्प्रदायानां सम्मेलनं भवति। पूर्वं सर्वेऽपि धर्मप्राणाः हिन्दवो दूरदूराद्देशात् पद्भ्यां चलित्वा प्रतिनगरं साधवश्चोपदेशं ददतो गृहस्थाश्च नवं नवं स्थानं निरीक्षमाणा इह एकत्र समवेता भवन्तिस्म, मासं यावच्च कल्पवासं कुर्वन्तो धर्मसञ्चयं कुर्वन्तिस्म । सम्प्रति तु सर्वमेवान्यथा जातं विद्यते । धूम्रयानैस्त्वरयैव सर्वेऽत्र संघीभूय वर्तमानसभ्यतानुसारं स्वस्वभावानुरूपं धर्मादिविविधवस्तुजातसञ्चयं कुर्वन्तीति किं तद्वर्णनेन वयं स्वसमयं स्थानञ्चापवाहयाम इति विरमामः । अद्यत्वे ये दोषा ये वा गुणा महापर्वणोऽस्मात् समुद्भवन्तीति तन्मर्मज्ञानां सुविदितमेवास्तीति न कथयितुं पारयामः । केवलं भगवन्तं महाकालमेव प्रार्थयामहे यत्त्वरयैव स्वीय-स्वरूप-परिवर्तनेन पुनरपि—महापर्वणोऽस्य स्वरूपं परिष्कुर्वन् स्वभारतीयेषु धार्मिकभावोद्रेकेन सह प्राचीनधर्मसाम्राज्यमुपनयेदिति शम् ।

# दिवंगता महाराज्ञी खैरीगढ़ाधीश्वरी ।

खैरीगढ़राज्यस्याधिश्वरी महाराज्ञी भारतधर्मलक्ष्मी श्रीमतीसुरथकुमारी देवी महोदया गतजनवरीमासस्य षड्विंशतितमे दिवसे इमं नश्वरं लोकं विहाय परलोकं प्रस्थितेति तदीयो बन्धुवर्गः प्रजावर्गः परिचितगणो गुरुजनश्च शोकसन्तप्तस्तदीयां चिरशान्तिं परमेश्वरत प्रार्थयते ।

महाराज्ञी सप्ततिवर्षावस्थायां वातरोगेण निजप्रासादे एव नश्वरं शरीरं परित्यज्य परलोकं प्रस्थिता । महाराज्ञ्या गुणगरिमाणं स्मारं स्मारं परमं विषादमनुभवति मानसम् । सा हि राष्ट्रभाषाया (हिन्दी) इंग्लिशभाषायाश्च समानं ज्ञानं बिभर्तिस्म । महाराज्ञी हि श्रीभारतधर्ममहामण्डलसञ्चालकेषु प्रधानपदमाश्रितानां प्रातः स्मरणीयानां पूज्यपादानां श्री १०८ स्वामिज्ञानानन्द-योगिराजां शिष्या-भूत्वा गुरुदक्षिणा स्वरूपं लक्षत्रयादधिकं रूप्यकं समर्पितवती । येन स्वामिचरणैः महामायाद्रष्टनामकन्यासस्य स्थापनां विधाय महान् लोकोपकारः कृतः । यत्र आर्य्यमहिलाशिक्षणोद्देश्यमप्येकं विद्यते । वेदान्तयोगादि-दर्शन-ज्ञानमपि सा साधु सम्प्राप्योपासनामार्गेऽपि योग्या आसीत् । श्रीभारतधर्ममहामण्डलादिष्वर्थसाहाय्येन हृषीकेशे च गंगाभवननिर्माणेन नीलकण्ठेऽप्याश्रमप्रतिष्ठापनया दर्शनमहाविद्यालयप्रभृतिधार्मिक-संस्थानां संरक्षकतया च महाराज्ञ्या धर्मश्रद्धाधिक्यं परिदृश्यते स्म । तस्या आह्निकं कृत्यं दृष्टवतां नास्ति अविदितं यत्सर्वोऽपि दिवसस्तस्या धर्मकृत्यानुष्ठाने एव व्यत्येतिस्म । किम्बहुना राज्यपदमासीनाऽपि महाराज्ञी संयमनियमपरायणा सतीनामादर्शस्वरूपा पवित्रचरित्रा स्वप्रजानां श्रद्धाभाजनं वैराग्यमयं जीवनं यापितवती । परमेश्वरः तत् पोष्यवर्गेभ्यः प्रजावर्गेभ्यश्च तद्वियोग दुःखं सोढुं धैर्यं प्रदद्यात् इति तदीयशोकसंविग्ना वयमपि अल्पीयसैव विरमामः ।

---

## धन्यवादाः ।

ऐषमो राजसम्मानभाजोऽग्रोलिखिता विद्वांसोऽभूवन्निति ते श्रीभारत-धर्ममहामण्डलतोऽपि धन्यवादभाजः । प्रतिवर्षं भारतशासकानामयं नियमोऽस्ति यद्वर्षारम्भे सम्राजो जन्मदिवसे च बहवो विद्वांसो महाराजा राजानः श्रेष्ठिनो धनिनो जनसेवका उद्योगिनः राजकर्मचारिणश्चान्येऽपि विद्याबलधनशौर्य्यकीर्ति-शालिनो मानवा विविधोपाधिभिरलङ्क्रियन्ते । तत्र महामहोपाध्यायोपाधिभि-रिमे महात्मानोऽलङ्कृता इति सर्वेषां विदुषां श्रद्धाभाज इमेऽस्माकं धन्यवाद-

भाजनानि स्ववैदुष्येण भारतं विभूषयन्तु इति परमेश्वरं प्रार्थयामहे एतेषां चिर-जीवन-कामनया । तत्र श्रीमन्तः म० म० पण्डितविधुशेखरभट्टाचार्य्याः कलिकाता-विश्वविद्यालयस्य संस्कृताध्यापकाः सन्ति । श्रीमन्तः म० म० पण्डित लक्ष्मीधर-दिल्ली विश्वविद्यालयस्य संस्कृतहिन्दी गुरुमुखी वङ्गलाभाषाध्यापकाः, मैसूर राज्यस्थाः श्रीमन्तो म० म० ब्रह्म श्री विद्यानाथशास्त्रियरमहोदयाः । इमे त्रयो महापण्डिता महामहोपाध्यायोपाधिना विभूषिता विज्ञेयाः । एभ्यो श्रीभारत-धर्ममहामण्डलतो ऽपि वयं धन्यवादान् दद्मः ।

## भ्रमसंशोधनम् ।

### आयुर्वेदाचार्य्यपरीक्षायाम्

रोलनम्बरपरिवर्तनप्रमादात् विरञ्चीलालशर्मस्थाने भागीरथमल्लशर्मा इति मुद्रितम्, तत्र विरञ्चीलाल एवोत्तीर्णो ग्राह्यः ।

**आयुर्वेदप्रथमायाम्**—वैद्यभूषणपरीक्षाया द्वितीयविभागे कालिचरण त्रिपाठीति नाम मुद्रालयप्रमादात् मुद्रितम्, तत्र प्रथमपरीक्षायाः तृतीयविभागे तस्य नाम ग्राह्यम् ।

परीक्षामुद्रितसूच्यामध्यापकनामस्थले मुद्रालयप्रमादात् श्रीमान् पं० राम-चन्द्र जोशी वैद्यशास्त्री श्रीरामरसायनपाठशाला वेलनगञ्ज आगरा इति तत्र जोशीत्यत्र 'श्रोत्रिय' इति ज्ञेयम् ।

श्यामलालनामकः छात्रः प्रथमपरीक्षायां तृतीयश्रेण्यामुत्तीर्णः । स हि उपदेशकमहाविद्यालयलक्ष्मीकुण्डकेन्द्रे श्री पं० शिवकुमारशास्त्रिच्छात्रो विद्यते ।

ज्योतिश्चन्द्रभट्टाचार्यः, सेक्रेटरी काशी आयुर्वेदसंमिलनी ।

---

## कोऽसौ दयानन्दः ?

( १ )

प्रवर्त्तकस्त्वार्यसमाजिकानां, द्वेष्टा सुराणामथ मूर्त्तिकानाम् ।
देवालयानां सुरपूजकानां निन्दामकार्षीदनिशं पराचाम् ॥

( २ )

वादे स्वपक्षे परिपुष्टिहेतोः, स्मृतेरनर्थञ्च चकार नित्यम् ।
स्वामी दयानन्द सरस्वती यः, काश्यां स एवाऽजनि कायभेदात् ॥

( ३ )

तद्दोषदूरीकरणाय किं वा धर्माश्रितां वै परितोषणाय ।
काशीमहामण्डलनामधेये, स्वामी 'दयानन्द' इति प्रसिद्धः ॥

—विद्यार्थि नरसिंहपाण्डेयः 'पथिकः'
कविता-शिक्षालयः, काशी ।

## ईशस्तुतिः ।

लें० —रामचन्द्रशर्मा "संतप्त" ऋषिकुलमहाविद्यालय, मुरादाबाद ।

अयीश ! भारतस्यास्य विपन्नस्य दशां दृष्ट्वा
कथं शेषे पयोधौ त्वं श्रियायुक्तो विलासेन ।
धनेन विद्यया हीनास्तथा सर्वे कलाहीनाः
न जानन्ति स्वतन्त्रत्वं पुरास्थं भारतीयानाम् ॥
पुरासन् धीरवीराश्च धनुर्विद्याकलायुक्ताः
तपोभूमौ तपन्तश्च स्वकृत्ये धर्मतो लीनाः ।
इदानीं सन्ततिस्तेषां स्वतन्त्रत्वाच्चतोभ्रष्टा
विदेशीयप्रथाधीनास्ति "संतप्तो" वदत्येवम् ॥

---

## संस्कृतवादविवादोत्सवः ।

अयिमहनीयचरिता माननीयाः सुरभारतीकृपाकटाक्षकञ्चुकिता विपश्चित्प्रवराः !

अनादिकालात् सर्वज्ञैर्महर्षिभिः ; "कामदुधा" इयमिति सादरं संभाविताऽक्षय्यकोशा सर्वभाषाप्रसूरियं सुरभारती कलिकालप्रभावादद्यत्वे शिक्षितंमन्यैः समुत्सार्यमाणाऽपि सरससरलनिरवद्यगद्यपद्यरचनाचतुरविरञ्चिवल्लभानुगृहीतसूक्तिसमुदाय समुद्यदधरीकृतपीयूषमाधुरीक सूक्तिगुम्फविजृम्भणैः कमप्यनिर्वचनीयं प्रमोदं विदाञ्चेतःसु जनयन्ती दिशन्तीव समाधिसुखमनादिरनन्तासंविदिव भगवती साम्प्रतमनुभूयते विरलशिथिलसन्धिबन्धा गीर्वाणगीर्विद्वद्वरैः ।

अस्याः सर्वाङ्गपोषपुरःसरं सुप्रचारं कामयमाना देशकालपरिस्थितिविदश्चतुरा नेतारः सुरगिरा मिथोविवादशैलीप्रचारमप्यमोघेषूपायेषु परिगणयन्ति ।

विद्वज्जनपुरस्कृतां तामेव प्रणालीमनुसृत्य समजनि सानन्दं काश्यां श्रीस्याद्वादमहाविद्यालये "प्रचलिता बलिदानप्रथा साधीयसी न वे" ति विषयावलम्बिवादविवादोत्सवः पौषकृष्णद्वादश्यां ( ता० २२।१२।३५ ) भानुवासरे मध्यान्हे विद्वच्चूड़ामणीनां श्रीमतां डाक्टर मंगलदेवशास्त्रि एम० ए० महोदयानां, बी० विश्वनाथन् आई० सी० एस० महोदयानां, प्रो० चिन्नंस्वामिमहोदयनाञ्च निर्णेतृतायाम् । वक्तृत्वकलाविदग्धतया लब्धश्चैकैकं राजतपदकं श्रीस्याद्वादमहाविद्यालयीयविद्यार्थि राजकुमारताराचन्द्राभ्यां नास्त्यस्ति पक्षावलम्बिभ्य विजयचिह्नमपि च ( राजतीमूर्ति ) स्याद्वादमहाविद्यालयेन बहुलाङ्कभाक्त्वादुभयोः ।

विदुषामनुचरः — हर्षचन्द्रो जैनः बी० ए० एल० एल०बी० वकील, अध्यक्षः ।

## समालोचनासारः।

अभिज्ञान शाकुन्तलं सुबोधिनीटीकोपेतम् प्राप्ति स्थानम् मैनेजर शारदाभवन ६३ अगस्तकुण्ड, बनारससिटी मू० १॥) सार्द्धरूप्यकम्।

नाटकमिदं संस्कृतसाहित्यस्य सर्वोत्तमरत्नमिति सर्वेषामेव विदितम्। तत्रापि सर्वत्रैव परीक्षाप्रवर्तकविश्वविद्यालयैः पाठ्यत्वेन निर्धारितत्वात् परीक्षार्थिनां कृते परमोपयोगि विद्यते। एतन्नाटकानुकूला कापि समीचीना संस्कृतटीका मया नाद्यापि समुपलब्धा। साहित्याचार्येण विद्यासागरेण महोपाध्यायेन पं० श्रीगौरीनाथपाठकेन निर्मितामस्य सरलां मञ्जुलां भावपूर्णाञ्च संस्कृतटीकां विलोक्य मम चेतश्चमत्कृतमिवाजनि।

टीकायामस्यां सर्वेषामेव कविकालिदासीय-मनोगतभावानां साधु सुस्फुटं विवरणं विद्यते। पद्यार्थविशदीकरणेऽद्वितीयः सिद्धहस्तोऽयं टीकाकृन्महाशयः प्रतिभाति।

पुराणोपाख्यानप्रदानेन, संक्षिप्तकथासारसंग्रहेण अलङ्कारादि विशदीकरणेन पात्रपरिचयप्रदानेन सर्वत्रैव व्यङ्ग्यार्थस्फुटीकरणेन च साधु समुद्दीपितं नाटकीयं मर्मेति संक्षेपतः सुबोधिनीनामकं टीकारत्नमिदं काञ्चनेनाभिज्ञान-शाकुन्तलेन संगतं सद् 'रत्नं समागच्छतु काञ्चनेनेति' कालिदासोक्तिं साधु संगमयतीत्येतावदेवोक्त्वा संक्षेपेणैव विरमामि।

## मञ्जूषा।

एतन्नामिका संस्कृतमासिकपत्रिका ६१ ए. रमाकान्तबोसष्ट्रीट बागबाजार कलिकात्तातो निःसरति। यस्या वार्षिकं मूल्यं १) एकं रूप्यकं विद्यते। अस्याः सम्पादकाः श्रीमन्तः श्रीक्षितीशचन्द्रचट्टोपाध्यायाः सन्ति। लेखाश्चास्या-मुपदेशप्रदाः पठनीया दृश्यन्ते। मुद्रणकर्गजादिसौष्ठवमपि साधु विद्यते। परन्तु १८५६ शकीय गत फाल्गुनमासस्य प्रथमवर्षीया द्वितीया संख्या मत्पार्श्वे समागतास्ति। किमियमेतावता विलम्बेन प्रसरति, इति विलम्बदोषे तु सर्वाण्यपि संस्कृतपत्राणि अतिक्रामति।

## संस्कृतपद्यवाणी।

इयं त्रैमासिकी संस्कृतपत्रिका २।१ रामकृष्णलेन, बागबाजार कलिकात्तातो निःसरति। अस्याःसाधारणवार्षिकवृत्तिः १॥) सार्धरूप्यकं वर्तते। प्रधान-सम्पादकाः श्री कालीपदतर्काचार्याः। सहायकौ पं० श्री गांगेयनरोत्तमशास्त्री

पं० श्रीरामकृष्णचक्रवर्ती ( विद्याभूषण एम्० ए० ) च विद्येते । अत्र लेखा वैदुष्यपूर्णाः सन्ति । समस्यापूर्ति-पद्यबन्धोपन्यासप्रभृतिभिः साधु सुसज्जिता विद्यते । मुद्रण कर्गजाकार प्रकारादयोऽपि दर्शनीयाः सन्ति । विलम्बदोषेण तु इयमपि मुक्ता न दृश्यते । यतो हि वैशाखज्येष्ठाषाढ़ीया संख्या सम्प्रति मत्पार्श्वे समुपस्थिता विद्यते । अस्या नियमे "अत्र साम्प्रतिकराजनीत्यादिवस्तूनि अन्ये न्याय-बाह्याश्च विषया नोपादीयेरन्" इति नियमेन तु संस्कृताध्यायिनां प्रयोजनीय राजनीतिविषयविमुखाणामुपकाराधानमावश्यकमित्यतोऽपि स्वात्मानं गोपयन्ती संस्कृतपत्रान्तरात् किं वैशिष्ट्यमावहतीति न प्रतीयते ।

## संस्कृतरत्नाकरस्य ( जयपुरीयस्य )

### आयुर्वेदाङ्कः ।

प्रकाशकाः म. म. पं० श्रीगिरिधरशर्माणश्चतुर्वेदाः, जयपुरराजकीय-सं० विद्यालयाध्यक्षाः । विशेषाङ्कोऽयं श्रीमतामायुर्वेदमार्तण्डानां प्राणाचार्य्याणां वैद्यरत्नभिषगाचार्य्य श्रीलक्ष्मीरामस्वामिमहाभागानां राजकीयविद्यालयतो विश्रमावसरे अभिनन्दनार्थं प्रकाशितो विद्यते । सुपररायलआकारे विविध- चित्रमसृणमञ्जुल-कर्गजप्रभृति-चित्ताकर्षकमुद्रणादि-सामग्री-सम्पत्ति-समेतः शतत्रयपृष्ठात्मकः साधु दर्शनीयः सम्पादितो विद्यते । अत्र प्राथमिका लेखाः श्री स्वामिनां चरितविषकाः सन्ति । अन्तिमाश्चायुर्वेदसम्बन्धे बहुभि-र्विद्वद्भि र्गवेषणा पूर्णा लिखिता विद्यन्ते । यैश्चायुर्वेद विद्यार्थिनामन्येषाञ्च तज्जि-ज्ञासावतां महांल्लाभः स्यादिति ।

## वाग्वल्लभः ।

पण्डितप्रवर दुःखभञ्जनकविविरचितः ग्रन्थोऽयं संस्कृत-हिन्दीभाषासु समागतानां सर्वेषामेव छन्दसां लक्षणोदाहरणनिदर्शकः संस्कृतमयो विद्यते । ग्रन्थकर्तुरात्मजेन महामहोपाध्यायेन स्वर्गीय पण्डितदेवीप्रसादशुक्लकवि-चक्रवर्तिना वरवर्णिनी टीकयाऽलङ्कृतः, पण्डितसम्राजा सर्वतन्त्रस्वतन्त्रेण साहित्यदर्शनाद्याचार्य गोस्वामि-श्रीदामोदरशास्त्रिणा विरचितया भूमिकया सनाथीकृतः । काशीसंस्कृतसिरीज-पुस्तकमालायाश्चतुर्थपुष्पतया प्रका-शितः । मसृणमञ्जुल कर्गज मुद्रणादि परिष्कृतः । छन्दोज्ञानार्थिभिः संग्रहणीयो विद्यते । छन्दोविषयकं सर्वमपि ज्ञातव्यमिह ग्रन्थरत्ने तत्कर्त्रा निबद्धं विद्यते । 'डिमाई' आकारे सार्धत्रयशत पृष्ठात्मकस्यास्य ग्रन्थस्य मू० ४) रूप्यक-चतुष्टयं संस्कृतविद्यार्थिनां कृते यद्यप्यधिकं प्रतिभाति । परन्तु स्वपुस्तकालया-

लङ्करणायावश्यं सर्वैः संग्राह्यमिदं ग्रन्थरत्नं विद्यते । प्राप्तिस्थानम् जयकृष्णदास चौखम्भा संस्कृत सीरीज बनारस सिटी ।

### चतुर्वेदीयरुद्रसूक्तम् ।

सान्वयसार्थगौरी व्याख्यासहितम् । श्रीस्वामि शङ्करानन्दगिरिविर-विरचितम् श्रेयस्तत्र राजपीपला ( गुजरात ) इति सङ्केतेन ग्रन्थकर्तुः सकाशात समुपलभ्यम् । मू० ३) रुप्यकत्रयम् । पुस्तकमिदं वेदचतुष्टयस्योपयोगिसू-क्तानां सान्वयहिन्दीव्याख्यासहितं विद्यते । ग्रन्थकर्त्रा महता परिश्रमेण गवेषण-पूर्वकं तत्तद् ब्राह्मण ग्रन्थानामध्ययनं विधाय सायणभाष्यच्छायामादाय लिखि-तमिदं पुस्तकं वेदमन्त्रार्थजिज्ञासूनां महोपकारि प्रतिभाति । सम्प्रति वैदिक-साहित्यज्ञानशून्याः प्रायः संस्कृतज्ञा अपि भवन्ति । संस्कृतज्ञानविरहिता-नान्तु कथैव का । तत्र स्वामिपादानामयं प्रयासः प्रशंसनीयो विद्यते । स्वामिपादैश्च ग्रन्थमालारूपेणान्यान्यपि पुस्तकानि प्रकाशयितुं प्रतिज्ञातं विद्यते । यदि ग्राहकमहोदयैः धर्मानुरागिभिः श्रेष्ठिभिश्च स्वामिनामर्थसाहाय्येन हस्तालम्बो वितीर्णः स्यात्तर्हि महानुपकारः स्यात्संस्कृतवाङ्मयस्येति ।

समालोचकः श्री गोपाल शास्त्री दर्शनकेसरी

## सत्सङ्गः ।

पं० शिवदुलारे दीक्षित. ( हरदोई प्रान्तान्तर्गत कुरसथा ग्राम निवासी )

विद्याभ्यास इव सत्सङ्गोऽपि स्वभावशासनस्य महानुपायः दृश्यते तावद-स्माभिः, अयस्कान्तमणे र्योगाल्लोहोऽपि सद्गुणं लभमान एवाकर्षको भवति । निम्बवृक्षारूढ़ा मधुरलता कटुकायते। विषसम्पृक्तं मिष्टभोजनपि रुक्षायतेऽभोज्यम्।

कीटोऽपि सुमनः सङ्गादारोहति सतां शिरः ।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ।

तापनेन शोधनेन वा विषमप्यमृतायते । मूढमतीनां जनानां मूढत्वम् सागर-पारमेति । ये च कटुभाषिणस्ते मधुरालापिनः संजायन्ते । ये पापकर्मप्रियास्ते धर्मबुद्धयोः जायन्ते। पानीयं सर्वत्र मूल्यमन्तरा लभ्यते । तदेव तोयं यदा दुग्धसंसर्गि भवति तदा दुग्धमूल्येन विक्रीयते । यदि सामान्यप्रस्तरो मुकुटे निहितोऽपि स्यात्तर्हि सोऽपि जनानां गौरवं लभते स्वस्थाने स्थितः कापुरुषो ऽपि सिंहायते । केचन मानवा सत्संग भूषिताः सन्तः मनुष्यपदगौरवं वर्द्धयन्ति । कियन्तश्च पुरुषाः दुर्जनसंगात् पशुभिः समानाः परिगण्यन्ते ।

अस्योदाहरणानि बहूनि वेविद्यन्ते' किमिह बहुलेखनेन । सत्सगस्यैतादृशो महिमा ये दुर्जना अपि ते सज्जनाः, तस्करा अपि साधवः, वञ्चका अप्युपकारकाः, प्रतारका अपि सुधारका जायन्ते । अत एव साधुसत्संगे सर्वैरेवावस्थेयमिति ।

# वेदपुराणयोरेकवाक्यता ।

( ले० पं० दीनानाथशर्मा सारस्वतः शास्त्री, सनातनधर्म कालेजाध्यापकः मुलतानस्थः ( क्रमागता )

स्वा० दयानन्द प्रणीत 'संस्कारविधौ' विवाहप्रकरणे—'इमं ते उपस्थं मधुना सँ सृजामि, प्रजापतेर्मुखमेतद्द्वितीयम् । तेन पुँ सोऽभिभवासि सर्व्वान् अवशान् वशिन्यसि राज्ञि ! । २ । 'स्त्रीणामुपस्थमृषयः पुराणाः' । ३ । मन्त्र० ब्रा० १।१।२-३ ॥ 'ताभिर्यासि दूत्यां सूर्य्यस्य कामेन' ऋ० ६।५८।३ ॥ 'ते स्त्रियमाविशतः, तस्या उपस्थमेवाऽऽहवनीयं कुर्व्वाते, धारकाँ ( स्त्रीभगं ) समिधं, धारका ह वै नामैषा, एतया ह वै प्रजापतिः प्रजा धारयाञ्चकार, रेत एव शुक्रामाहुतिं, ते स्त्रियं तर्प्पयतः, स य एवं विद्वान् मिथुनमुपैति—अग्निहोत्रमेवाऽस्य हुतम्भवति, यस्ततः पुत्रो जायते, स लोकः प्रत्युत्थाय्येतदग्निहोत्रं याज्ञवल्क्य ! नाऽतः परमस्ति' शतपथ० ११।६।२।१० ॥ 'रेतो मूत्रं विजहाति योनिं प्रविशदिन्द्रियम्' यजुः १६।७६ ॥ 'आहन्ति गभे पसो निगल्गलीति धारका' यजुः २३।२२ गभे इत्यस्य भगे इत्यर्थः, आद्यन्तविपर्य्यय आर्षः, पसः-शिश्नम्, भगे शिश्नम् आहन्तीत्यर्थः, धारका-योनिः-निगल्गलीति गलगलशब्दं करोतीत्यर्थः । पसश्शब्दस्य शिश्नवाचित्वम् 'आहतं गभे पसो निजल्गुलीति धाणिका' तै० ७।४।१६।३ इत्यादिमन्त्रान्तरप्रसिद्धम् ।

'त्रिः स्म माह्नः श्नथयो वैतसेन' ऋ० १०।९५।५ उर्व्वशी पुरूरवसं ब्रूते-(यतोऽस्य मन्त्रस्य ऋषिरुर्व्वशी, देवता च पुरूरवा ऐलः—इत्यजमेरीय वैदिक यन्त्रालयीयर्ग्वेदेऽपि मुद्रितम् )—( अस्य मन्त्रस्योत्तरार्द्धे 'पुरूरव' इति सम्बुद्धिरपि स्पष्टा )—अस्याऽर्थः-त्रिः स्म माऽह्नः—त्रिरह्नो मां त्वं वैतसेन-पुंस्प्रजननेन इति यास्कः ३।२९।३ 'पुंव्यञ्जनेन' इति सायणः, शिश्नेनेत्यर्थः, श्नथयः-अताडयः । एवं 'दिवा नक्तं श्नथिता वैतसेन' ऋ० १०।९५।४ इत्यस्याऽपि पूर्व्ववदेवाऽर्थो ज्ञेयः । एतदेवाऽभिप्रेत्य शतपथब्राह्मणे ११।५।१।१ 'उर्वशी हाऽप्सराः, पुरूरवसमैडं चकमे । तँ ह विन्दमानोवाच—त्रिः स्म माऽह्नो वैतसेन दण्डेन हतादकामाँ स्म मा, निपद्यासै मों स्म त्वा नग्नं दर्शमेष वै न स्त्रीणामुपचारः ॥ १ ॥ सा हाऽस्मिन् योगुवास, अपिहाऽस्माद् गर्भिण्यास ॥ २ ॥ तदेतदुक्तप्रत्युक्तं पञ्चदशर्चं बह्वृचाः प्राहुः शत० ११।५।१।१० इत्यादि ॥ 'शिश्नदेवाः' ऋ० ७।२१।५ अब्रह्मचर्य्या इत्यनुक्त्वाऽयं शब्द उपात्तः, योऽश्लीलः ॥ 'सरस्वती

योन्यां गर्भमन्तरश्विभ्यां पत्नी सुकृतम्बिभर्त्ति' यजुः १६।६४॥ 'आनन्दनन्दावाण्डौ मे, भगः सौभाग्यं पसः' यजुः २०।६ ॥ मेढ्रं ते शुन्धामि पायुन्ते शुन्धामि' यजुः ६।१४ ॥ 'वृषणमाण्डाभ्याम्' यजुः २५।१ ॥ 'सविता ते शरीराणि मातुरुपस्थ आवपतु' यजुः ३५।५ ॥ 'शेपो रोमण्वन्तौ भेदौ' ऋ० ६।११२।४ ॥ 'मा नो मघेव निष्षपी' ऋ० १।१०४।५ निष्षपी' इत्यस्याऽर्थो नित्यविनिर्गतशेपाः, अत एव यास्केन 'स्त्रीकामो विनिर्गतपसाः' इत्यर्थो लिखितः, स हि नित्यविनिर्गतशेपा भवति; सपः-सपतेः स्पृशतिकर्म्मणः नि० ५।१६।२ ॥ सपःशेपः, तेन हि स्त्री स्पृश्यते इति दुर्गाचार्य्यः । निःषपी-विनिर्गतपसो विनिर्गतशेपो यथेष्टचारी-इति सायणः ॥ 'किमु त्वावान् मुष्कयोर्बद्ध आसते' ऋ० १०।३८।५ मुष्कयोः-अण्ड-कोषयोः ॥ 'यस्य ऊरू विहरत्यन्तरा दम्पती शये । योनिं यो अन्तरारेह्रि' ऋ० १०।१६२।४ ॥

'यस्मा ऋणं, यस्य जायामुपैमि.......ते वाचं वादिषुर्मोत्तरां मद्' अथ० ६।११८।३ अस्याऽर्थः—यस्य पुरुषस्य जायां-भार्याम्, उपैमि-कामुकः सन्नुप-गच्छामि, स पुरुषो मत्प्रतिकूलां वाचं मा वदतु' इति प्रार्थना ॥

'सरज्जारो न योषणाम्, वरो न योनिं' ऋ० ६।१०१।१४, साम० उत्त० १२।१।३।२ अत्र न उपमार्थक इति तु व्यक्तमेव निरुक्तविदां विदाम् । एवं 'जारं न कन्या' ऋ० ६।५६।३ अत्राऽपि नकार उपमाऽर्थीयः । 'गच्छन् जारो न योपि-तम्' ऋ० ६।३८।४, साम० उत्त० १०।३।३ । 'जार आ ससतीमिव' ऋ० १।१३४।३ 'योषा जारमिव प्रियम्' ऋ० ६।३२।५ । 'प्रियां न जारो' ऋ० ९।६६।२३ । पमीदेषां निष्कृतं जारिणीव' ऋ० १०।३४।५ यदि 'विधवेव देवरं मर्य्यं न योषा' ऋ० १०।४०।२ इत्युपमया विधवाविवाहो वैदिको मन्येत ; तर्हि उक्तर्ग्वेद-सामवेदीयोपमाभिर्योषितां पार्श्वे जाराणामपि गमनं वैदिकम्मन्तव्यम्, उक्त-मन्त्रेषु सोमस्य मानुषीषु प्रजास्वागमनेऽश्लीलोपमा निर्द्दिष्टा ; एवं ये इतिहासे-नाऽपि धर्म्मविधिं मन्यन्ते, ते इतिहासरूपयाऽनयोपमयाऽपि जाराणां योषिद्गमनं धार्मिकं मन्यन्ताम् । अथ च 'यस्य जायामुपैमि' अथ० ६।११८।३ इति पूर्व्व-प्रदर्शितमन्त्रेण अपरस्त्रीगमनमपि वैदिकम्मन्यन्ताम् ; परं मैवम् । यद्यप्यत्र परजायागमने परप्रातिकूल्याऽपसरणप्रार्थना ; परमयं विधिस्तु न मनुष्यकृते, अन्यथा-'यन्मातरं पितरं वा जिहिंसिम' अ० ६।१२०।१ 'यो मातृहा पितृहा' एतदादिकमन्त्रे मातापितृहिंसाजन्यपापदूरीकरणायाऽपि प्रार्थना ; तर्हि किं मातापित्रोर्हिंसा वैदिकी मंस्यते ? नहि २ । एवं 'विधवेव देवरं मर्य्यं न योषा' ऋ० १०।४०।२ इत्युपमाविषयेऽप्यवसेयम् । वस्तुतस्तु 'विधवेव देवरम्' इत्युपमा

व्यभिचारिण्या × विधवाया वर्त्तते, यथा—'गच्छन् जारो न योषितम्' इत्यादिषु प्रागुपनिबद्धमन्त्रेषु व्यभिचारिण्या उपमा दर्शिताः। तयोपमया च विधवाव्यभिचार ̆ प्रदर्शितो न तु विधवाविवाहः; विवाहे पतिपत्नीत्वसम्बन्धो भवति। यदि 'विधवेव देवरम्' इत्यनेनोभयो ̆ पतिपत्नीत्वसम्बन्धो वेदाऽभिमतोऽभविष्यत्; तर्हि तयैवोपमया सह 'मर्य्यं न योषा' इति पतिपत्न्योर्द्वितीयोपमा तस्मिन् मन्त्रे नाऽभविष्यत्, पूर्वोपमयैव तदुपमाया गताऽर्थत्वात्; परं 'विधवेव देवरम्, मर्य्यं न योषा' इति एकस्मिन्नेव मन्त्रे पृथक् पृथगुपमाद्वयम्, प्रथमोपमायां तद्वाचक इव शब्दो द्वितीयस्याञ्च 'न' शब्दस्तद्वाचकः; तेन 'विधवादेवरयोः' 'मर्य्ययोषयोश्च' पृथग्ग्रहणाद् विधवाया देवरगमनं व्यभिचार एव सिद्धो न पतिपत्नीभावः; पतिपत्न्युपमाया ̆ पार्थक्येन ग्रहणात्; अन्यथा यदि पूर्व्वोपमया विधवादेवरयोर्व्यभिचारोऽपि वैदिक आम्नायेत; तर्हि जाराणां योषितां पार्श्वे गमनमपि वैदिकम्मन्तव्यम्, जारशब्दो हि चौर्य्यव्यभिचाररतवाचकः * नचैवं सति वैदिककालेऽपि पापं मन्तव्यम्भविष्यतीति वाच्यम्, अग्रिमसम्भावनया 'आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि' ऋ० १०।१०।१० इतीव भविष्यत्सम्भावनया तथोक्तत्वात्। अथ च वैदिककालेऽपि पापस्याऽसम्भवो नास्ति कामं तत्पापं न्यूनतमं स्यात्। तदैव तु वेदे कृतस्य कर्त्तव्यस्य च पापस्य क्षमाऽर्थं बहुत्र प्रार्थना कृता, इति अग्रे २१ सङ्ख्याके निबन्धे द्रष्टव्यम्। न चैतेन विधवाव्यभिचारोऽपि वेदाऽभीष्टो वाच्यः; ईदृश्य उपमा लोकेऽपि वर्त्तन्ते, यथा—'ज्यों कामी को नारि' अर्थात्-हे परमात्मन्! त्वं ममेत्थं प्रियः, यथा कामिपुरुषस्य नारी प्रिया भवति; नैतयोपमया लोक ̆ कामिन ̆ कामं शुद्धं समर्थयते इति कोऽपि मन्येत; फलतोऽमुया उपमया विधवाविवाहनियोगादिस्वप्नद्रष्टारो भ्रान्ता एव-इत्यूह्यम्।

अस्तु-पुन ̆ क्रमागता अश्लीलमन्त्रा दर्श्यन्ते—

'यस्यां बीजं मनुष्या वपन्ति। या न ऊरू उशती विश्रयाति यस्यामुशन्तः

---

× अथवाऽस्यास्तात्पर्यं वाग्दत्तविधवायां नेयम्; एतदनुसार्येव मनुश्लोकः—'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजो विन्देत देवरः' म० ९।६९ वाग्दत्तत्वेऽपि पतिशब्दप्रयोग एतच्छ्लोकाऽनुसारं दृश्यते; तेन तन्मरणे 'विधवा' शब्दो नाऽशिष्टो गौणरूपेण।

* यथा निम्नमन्त्रे—'शूद्रा यदर्य्यजारा न पोषाय धनायति' यजुः २३।३० 'शूद्र यदर्य्यायै जारो न पोषमनुमन्यते' यजुः २३।३१

प्रहरेम शेपः' अथ० १४।२।३८, ऋ० १०।८५।३७ ॥ 'आरोहोरुमुपधत्स्व हस्तं, परिष्वजस्व जायाम्' अथ० १४।२।३९ अत्र स्त्रिया ऊरूपर्य्यारोहणस्य, तद्धस्त-ग्रहणस्य, आलिंगनस्य चाऽऽज्ञा ॥ 'यथा पसस्तायादरं वातेन स्थूलभं कृतम् । यावत् परस्वतः पसस्तावत्ते वर्द्धतां पस' अ० ६।७२।२ परस्वत—मृगविशेषस्य, पसः-शिश्नं, स्थूलभं-स्थूलम् ॥ 'कन्यानां विश्वरूपाणां मनो गृभायौषधे' अ० २।३०।४ ॥ 'एवा मथ्नामि ते मनो यथा मां कामिन्यसो यथा मन्नपगा असः' अ० २।३०।१ ॥ 'वृत्तं वृक्षमारोहसि वृषण्यन्तीव कन्यला' अ० ५।५।३ ॥ 'तां त्वा वयं खनामसि ओषधिं शेपहर्षणीम् ' अ० ४।४।१ 'यथा वृत्तं लिबुजा (लता) समन्तात् परिषस्वजे । एवा परिष्वजस्व मां यथा मां कामिन्यसो यथा मन्नाऽपगा असः' अ० ६।८।१ ॥ 'आ ते योनिं गर्भ एतु . आ वीरोऽत्र जायतां पुत्रस्ते दशमास्यः'—अ० ३।२३।३ ॥ 'आत्मन्वत्युर्व्वरा नारीयमागमन्, तस्यां नरो ! वपत बीजमस्याम् । सा व प्रजां जनयद् वक्षणाभ्यो बिभ्रती दुग्धमृषभस्य रेतः' अ० १४।२।१४ ॥ 'एयमगन् पतिकामा जनिकामोऽहमागमम् । अश्वः कनिक्रदद् यथा भगेनाऽहं समागमम् । अ० २।३०।५

'स्वसावेशितं पसः' अ० २०।१३६।९ ॥ 'क्लीबं कृध्योपशिनमथो कुरीरिणं कृधि । अथाऽस्येन्द्रो ग्रावभ्यामुभे भिनत्त्वाण्डयौ' अ० ६।१३८।२ ॥ 'प्र ते भिनद्मि मेहनम्' अ० १।३।७ मेहनं–शिश्नम् ॥ 'ये ते नाड्यौ देवकृते ययोस्तिष्ठति वृष्ण्यम् ते ते भिनद्मि शम्ययाऽमुष्या अधिमुष्कयोः' अ० ६।१३८।४ ॥ 'एवा भिनद्मि ते शेपोऽमुष्या अधि मुष्कयोः' अ० ६।१३८।५ ॥ 'अपि नह्यामि ते भगम्' अ० १।१४।४ ॥ 'इषुः कामस्य या भीमा तया विध्यामि त्वा' अ० ३।२५।१ ॥ 'एवा निशुष्य मां कामेनाऽथो शुष्कास्या चर' अ० ६।१३९।४ ॥ 'एवा कामस्य विछिन्नं सन्धेहि वीर्यावति । अ० ६।१३९।५ ॥ 'भिनद्मि मुष्कावपि यामि शेपः' अ० ४।३७।७ ॥ 'मुष्काविदस्या एजतो' अ० २०।१३६।१ ॥ 'आऽहं तनोमि ते पसो अधिज्यामिव धन्वनि' अ० ४।४।७ धनुर्ज्याया आतननमिव पससः (शिश्नस्य) आतननं निर्दिष्टम् ॥ 'अद्याऽस्य ब्रह्मणस्पते ! धनुरिवाऽऽतानय पसः' अ० ४।४।६ ॥

'यभ मामद्ध्यौदनम्' अ० २०।१३६।११,१३ यभ-मैथुने ॥ 'अप्सरसामयं स्मरः । देवाः ! प्राहिणुत स्मरम्, असौ मामनुशोचतु' अ० ६।१३०।१ अत्र देवाः स्मर-(कामदेव) प्रेषणाऽर्थं प्रार्थिताः, यद्-द्वारा काचित् स्त्री प्रार्थकस्य वशे भवेत । एवमग्रेऽपि, यथा—'उन्मादयत मरुत ! उदन्तरिक्ष ! मादय । अग्न ! उन्मादया त्वम्, असौ मामनुशोचतु' अ० ६।१३०।४ अत्र कस्याश्चित् स्त्रिया उन्मादनप्रार्थना ॥ 'यं देवाः स्मरमसिञ्चन्' अ० ६।१३२।१ इति मन्त्रेण

प्रतीयते, देवा ँ कामं प्रेरयन्ति स्म; येन मुनीनामपि तपोभङ्गो भवति स्म; इति वेदिकता सिद्धा। 'वितिष्ठन्तां मातुरस्या उपस्थात्' अ० १४।२।२५॥

'प्रजापतिर्वै स्वां दुहितरमभिदध्यौ, दिवं वोषसं वा, मिथुन्येनया स्यामिति, ता ँ सम्बभूव........तस्य सामि रेतः प्रचस्कन्द' शतपथ० १।७।४।१-३। 'तदेतदृषिणाऽभ्यनूक्तम्—'पिता यत् स्वां दुहितरमधिष्कन् दमया रेतः सञ्जग्मानो निषिञ्चत्' (ऋ० १०।६१।७) शत० १।७।४।४॥ 'योषा वा अग्निर्गौतम! तस्या उपस्थ एव समित्, लोमानि धूमाः, योनिरर्चिः, यदन्तः करोति, तेऽङ्गाराः, तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति, तस्या आहुत्यै पुरुषः सम्भवति' शतप० १४।६।१।१६, बृहदार० ८।३।१३, छान्दोग्य ५।८।१॥ 'स स्त्रिय ँ ससृजे, तां सृष्ट्वा अध उपास्त, तस्मात् स्त्रियमध उपासीत' शत० १४।६।४।२॥ 'अहल्यायै जार!' शत० ३।३।४।१८॥ 'अहल्या ह मैत्रेय्या जार आस (इन्द्रः)' षड्विंशब्राह्म० १।१ इत्यादि॥ एतदतिरिक्ताऽश्लीलताप्रतिपादका मन्त्रा 'अवैदिकतानिरासे' प्रथमनिबन्धे प्रदर्श्येरन्।

यद्येषामर्था भावा वा मन्त्राणामन्ये सन्ति-इति व्याज उद्भाव्येतः तर्हि वेदेन सरलं मार्गं विहाय कुतोऽश्लीलताऽऽद्रियत, याऽऽपाततो द्रष्टॄणां लज्जावहा वर्त्तते; अत्र यदुत्तरं प्रदास्यते; तदेवोत्तरं पुराणाऽश्लीलता-विषये द्रष्टव्यम्। तत्राऽप्यापाततोऽश्लीलता प्रतीयते; परमुपक्रमोपसंहाराऽनुसारमन्वयव्यतिरेकेण तदीयो भाव उत्तमतागर्भितः; परं तज्ज्ञाने वैदुष्यस्य, पक्षपातकृष्णोपनयनाऽपनयनस्य, आग्रहत्यागस्य, सर्व्वेषां वेदशास्त्राणां स्वाध्यायस्य, प्रतिभायाः, दूरदर्शितायाः, स्वसाम्प्रदायिकपुस्तकेषु तादृशवार्तादर्शनाऽनुपेक्षायाश्च प्रयोजनीयता।

पुराणैर्येषां येषां यादृंशि चरित्राण्यासँस्तथैव तानि निबद्धानि; अत्र तु पुराणानां सत्यतैव। पुराणेषु स्वार्थप्रवीणस्याऽधार्म्मिकस्य दुर्य्योधनस्याऽपि चरितम्, तद्विरुद्धं परोपकारपरस्य पूर्णधार्म्मिकस्य गविष्ठिरस्य युधिष्ठिरस्याऽपि। तत्र परमात्मभक्तस्य प्रह्ला (ह्ला) दस्याऽपि चरित्रम्; नास्तिकानां हिरण्यकशिपु-वेन प्रभृतीनामपि। पितृभक्तस्य गोब्राह्मणदिरक्षकस्य रामस्याऽपि वर्णनम्; पितु ँ कारागारे निवेशकस्य गोब्राह्मणाघातकस्य कंसस्याऽपि। कुम्भकर्णप्रभृतीनां भूयिष्ठमांसमद्यादिघस्मराणामपि चरित्रं, वाताऽम्बुपर्णाशनानां मुनीनामपि। 'ध्रुव'-सदृशबालभक्तानामपि वर्णनम् 'असमञ्जस' प्रभृतीनां कुकर्म्मणामपि ×। एकपत्नीकानामपि वर्णनम्, अनेकपत्नीकाना-

× इयम्। असमञ्जस, स्य पूर्व्वकथा।

मपि। यत्र नलयुधिष्ठिरादीनां धार्मिकतावीरतादिनिदर्शनम्ः तत्र तद्दौर्बल्यप्रयुक्तानां द्यूतदेवनादिव्यसनानामपि। यत्र ब्राह्मणस्यैव सर्व्वश्रेष्ठत्वं दर्शितम्, तत्राऽधीतवेदस्याऽपि कुकर्म्मणी रावणस्य क्षत्रिय-(राम) द्वारा वधोऽपि दर्शितः। यदि कश्चिन्नलयुधिष्ठिरादिभक्तस्तद्-दूषणं द्यूतक्रीडादिकं प्रक्षिप्तं मत्वा तन्निष्कासयेत्; तर्हि भाविसन्ततयो द्यूतहानिज्ञानाद्वञ्चिताः स्युः। प्रत्युत नलयुधिष्ठिरादिकथा निम्नवेदमन्त्राणामुदाहरणीभूताः सन्तिः ते मन्त्रा इमे—'न मा मिमेथ न जिहील एषा, शिवा सखिभ्य उत मह्यमासीत्। अक्षस्याऽहमेकपरस्य हेतो रनुव्रतामप जायामरोधम्, ऋ० १०।३४।२ एतन्मन्त्रप्रोक्तोऽर्थो नलयुधिष्ठिरे सम्यग्घटते, अथवैतदेव कथ्यताम्, अस्य मन्त्रस्य नलयुधिष्ठिरावुदाहरणम्, अस्यार्थः एषाऽस्मदीया जाया मां-कितवं प्रति न चुक्रोध, न चाऽलज्जयत्, स्वसखीभ्यः—('सख्यशिश्वीति भाषायाम्' इति कथनाद् वेदे ङीष् न भवति सखिशब्दस्य)—शिवाऽभूद्, मह्यमपि शिवाऽऽसीत्, इत्थमनुव्रताम्-अनुकूलां जायाम्, एकपरस्याऽक्षस्य कारणादहं परित्यक्तवानस्मीति सायणः। 'अन्ये जायां परिमृशन्त्यस्य यस्याऽगृधद् वेदने वाज्यक्षः' ऋ० १०।३४।४ युधिष्ठिर एतस्यैव मन्त्रस्योदाहरणीभूतः। अस्य-कितवस्य भार्य्यामन्ये प्रतिकितवाः परिमृशन्ति-वस्त्रकेशाद्याकर्षणेन संस्पृशन्तीति सायणः, स्मर्त्तव्याऽत्र द्रौपदी कथा॥

फलतः पुराणसागरे मथ्यमानेऽमरत्वकारकममृतमपि लभ्यते, गरलमपि मारकम्ः सुराऽपि समुद्भाव्यते, जनमनोमोददाता सुधांशुरपि; मुक्ता अपि प्राप्यन्ते शुक्तयोऽपि। लक्ष्मीरपि समुत्पाद्यते, शङ्खश्चाऽपि। परं तत्र किं किं चरित्रमनुकरणीयं किञ्च न, इति तु वेदव्यासनिबद्धेभ्य उपक्रमोपसंहारकथापरिणामेभ्यो निर्णीयते; यान् खलु (उपक्रमोपसंहार-कथा परिणामाऽऽदीन्) छद्मसद्मभूता पुराणप्रत्नसपत्नभूता विरोधिनो जनतायाः समक्षं निह्नुवते: येन चाऽर्थस्याऽनर्थो भवति। एवञ्चैतादृशः स्थूलदृक्का आपाततोऽवगाहिनश्च पुराणाऽर्णवमथनेन हालाहलशुक्तिप्रभृतिफलान्येव लभन्ते, न सुधां नवा सुधांशुं न च लक्ष्मीम्। फलतः पुराणैस्सत्यचरित्राण्येव प्रकटीकृतानि। एतच्चु भवतामेव दुस्साहसिक्यं भवति, यत् स्वमतप्रवर्त्तकानां ÷ चरित्रसङ्कलने तदीय-

÷ प्रवर्त्तकानाम्। निषिद्धत्वघानान्न णः। 'सूर्योदय' स्य १०।६ संख्यायां २४३ पृष्ठे ८ पङ्क्तौ 'द्विरात्रेन' इति नकारस्तु मुद्राकाणां भ्रमान्मुद्रितः, ७, ६ पङ्क्त्योस्तु 'रात्रेण' इति शुद्धमेव मुद्रितम्।

वीभत्सचरित्राणामङ्कनामेव भवन्तो न कुर्व्वन्ति । तादृशानामेव चरित्राणां 'गप्प-त्वम्' नतु सत्यचरित्राणाम् ।

अथ च देवचरित्राणि प्रदर्श्य पुराणान्येतन्न साधयन्ति; यन्मनुष्यैरप्येवं कर्त्तव्यम् । देवयोनिर्मनुष्ययोनितो भिन्नाऽस्ति । तेनोभयोः कर्म्मणामेका मर्य्यादा न भवितुमर्हति । देवमनुष्ययोर्भेदो वेदमन्त्रद्वारा प्रदर्श्यते—तथाहि—

'विश्वे देवा अमर्त्याः' यजुः २१।१७ ॥ 'सत्यमेव देवा अनृतं मनुष्याः, शतपथ० ३।६।४।१ । 'देवाः पितरो मनुष्या गन्धर्व्वाऽप्सरसश्च ये' अथर्व० १०।८।६, 'उच्छिष्टाज्जज्ञिरे सर्व्वे', इतिकथनाद् देवपितृमनुष्याणां मिथो भिदा विस्पष्टा । 'देवेषूत मानुषेषु' अ० ४।२८।५ अत्र 'उत' शब्दो भेदग्राहक उभयोः । 'नहि त्वा शूर ! देवा न मर्त्तासो दित्सन्तम्' साम० उत्त० २।२।२।३, ऋ० ८।८१।३ ॥ 'अदेवः ·····मर्त्यः' ऋ० १०।७० (५६)। * 'देवानामुत मानुषाणाम्' अ० ४।३०।३ ॥

'प्रजापतिं वै भूतान्युपासीदन्' इत्यारभ्य-'ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन्, तानब्रवीद्-यज्ञो वोऽन्नम्, अमृतत्वं व ऊर्ग्', शतपथ० २।४।२।१ 'अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदन्, तानब्रवीद्-मासि मासि वोऽशनं स्वधा वो, मनोजवो वः' शत० २।४।२।२। अथैनं मनुष्याः प्रावृता उपस्थं कृत्वोपासीदन्, तानब्रवीत्-सायं प्रातर्वोऽशनम्, प्रजा वो, मृत्युर्वः' शत० २।४।२।३ 'अथैनं पशव उपासीदँस्तेभ्यः स्वैषमेव चकार, यदैव यूयं कदा च लभाध्वै, तस्मादेते यदैव कदा च लभन्ते, यदि काले यद्यनाकालेऽथैवाऽश्नन्ति' शत० २।४।२।४। 'अथैनं शश्वदप्यसुरा उपसेदुः, तेभ्यस्तमश्च मायाञ्च प्रददौ, अस्त्यहैवाऽऽसुरमाया, ता इमाः प्रजास्तथैवोपजीवन्ति, यथैवाऽऽभ्यः प्रजापतिर्व्यदधात्, श० २।४।२।५। । 'नैव देवा अतिक्रामन्ति, न पितरो, पशवो, मनुष्या एवैकेऽतिक्रामन्ति' शत० २।४।२।३ इतिशतपथ प्रमाणाद् देवानां पितॄणां पशूनाम् असुराणाञ्च भेदः स्पष्टतमो जातः । एवम्-'ऋषियज्ञं, देवयज्ञं, भूतयज्ञञ्च सर्व्वदा । नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत्, मनुः ४।२१ अत्र सर्व्वेषां पृथग्ग्रहणम् । यदि देवर्षिपितृनरः समानयोनिमन्तः स्युस्तर्हि महायज्ञानां पञ्चता न घटते ।

* 'देवानामुत यो मर्त्यानाम्' ऋ० ६।१५।१३ । 'अमृता देवाः' शत०

* 'देवस्त्वा सविता श्रपयत्विति, न वा एतस्य मनुष्यः श्रपयिता, देवो ह्येष तदेनं देवएव सविता श्रपयति शत० १।२।१।१४ इति स्पष्टमुभयोर्भेदः ।

२।१।३।४। न तथा मनुष्याः । 'देवस्य वा ‡ मरुतो ! मर्त्यस्य वा ईजानस्य' ऋ० ६।४८।२० । अत्र 'वा' शब्देनोभयोर्भेदः स्पष्टः । 'पुनर्वै देवा अददुः पुनर्मनुष्या अददुः' अथ० ।५।१७।१० पृथग् ग्रहणादुभयेषां भेदः 'द्राघीयो हि देवायुष ँ ह्रसीयो मनुष्यायुषम्' शतपथ० ७।३।१।१० इत्युभयोर्भेदो विशदः । यं देवा उत मर्त्यासो' ऋ० ८।४८।१। 'न वै देवाः स्वपन्ति' शत० ३।२।२।२२ परं मनुष्यास्तु स्वपन्ति । 'देवो न मर्त्यो' ऋ० १०।२२।५। 'तिर इव वै देवा मनुष्येभ्यः' शत० ३।१।१।८ इति भेदः स्पष्टः । 'सुप्रावीरिन्द्र ! मर्त्यस्तवोतिभिः' अथ० २०।२५।१ हे इन्द्र ! मनुष्यस्तवरक्षाभी रक्षितो भवतीत्यर्थः; एतेन इन्द्रस्य मर्त्यव्यतिरिक्तत्वं (देवत्वं) सिद्धम्, तथा च मन्त्रः—'इन्द्रौ जिष्ठौजिष्ठस्त्वन्देवेष्वस्योजिष्ठोऽहम्मनुष्येषु भूयासम्' यजुः ८।३६ । 'मनो ह वै देवा मनुष्यस्याऽऽजानन्ति' शत० २।१।४।१। 'नहि देवो न मर्त्यो' ऋ० १।१६।२। 'द्वया वै देवा देवाः, अहैव देवाः, अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः । यज्ञ आहुतय एव देवानाम्, दक्षिणा मनुष्यदेवानां ब्राह्मणानाम्' शत० २।२।२।६ 'आहुतिभिरेव देवान् प्रीणाति, दक्षिणाभिर्मनुष्यदेवान्.......त एनमुनये देवाः प्रीताः स्वर्गं लोकमभिवहन्ति' शत० ४।३।४।४ इति देवानां मनुष्येभ्य ँ पार्थक्यं दर्शितम्, मनुष्यदेवशब्दस्तु भूदेवा-( ब्राह्मण-)-ऽर्थः; तथा च-'अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानस्ते मनुष्यदेवाः' शत० ४।३।४।४ मनुष्येषु देवा इव इति तेषु देवत्वारोप एव, वस्तुतस्तु न ते देवाः, यतो 'यज्ञो हि देवानामन्नम्' शतपथपञ्चमकाण्डारम्भे; न तथा ब्राह्मणानाम् ।

'यत्र देवाश्च मनुष्याश्च' अथ० १०।८।३४ अत्रत्यं चकारद्वितयं देवमनुष्याणां भिन्नताद्योतकम् । 'देवान् मनुष्याँ ३ असुरानुत ऋषीन्' अथ० ८।९।२४ । 'परो हि मर्तैरसि, समो देवैः' ऋ० ६।४८।१९ अत्र पूषा देवता । एको देवत्रा दयसे हि मर्त्यान्' अ० २०।११।५ अस्याऽर्थः-हे इन्द्र ! देवेषु मध्ये त्वमेक एव मनुष्याणां × दयसे; एतेनाऽपि सिद्ध्यति,—देवा मनुष्येभ्यो व्यतिरिक्ताः, परन्तु तेषां-दयन्ते नह्यस्या अपरञ्चन जरसा मरते पतिः' ऋ० १०।८६।११ इतीन्द्र

‡ देवमनुष्ययोर्भेदो मरुत्सूक्तविवेचना च श्रीनगरस्य 'श्री' पत्रिकायां मल्लेखे द्रष्टव्या चतुर्थवर्षारम्भिकसङ्ख्यायाम् ।

× मनुष्याणां दयसे । 'अधीगर्थदयेशां—' इति कर्म्मणः शेषत्वे षष्ठी । 'षष्ठी शेषे' इत्यनेनैव सिद्धायां षष्ठ्यामस्य विशेषफलं 'मनुष्याणां दयनम्' इत्यादिषु प्रतिपदविधाना षष्ठी न समस्यते' इति समासनिषेधः । दयेशाम्' अत्र दय-ईशाम' इतिच्छेद' ईशामित्यनेन ईशधातुर्ग्रहते ।

पत्न्या इन्द्राण्या ... पत्युः ( इन्द्रस्य जरसाऽपि मरणाऽभावसूचनेन देवमनुष्याणां भेदः स्पष्टं प्रतिपादितः, मानुषाणां स्त्रीणान्तु पतिर्जरसा म्रियते ; देवीषु तु 'देवा मृत्युमपाघ्नत' अ० ११।५।१६ इत्यमृतत्वम्भवति । न ते वर्त्ताऽस्ति राधस इन्द्र ! देवो न मर्त्यः' अ० २०।२७।४ हे इन्द्र ! यस्मै त्वं धनं दित्ससि, तस्य वारयिता न कोऽपि देवो न मर्त्यः, अनेनाऽपि स्पष्टं भेदः सिद्ध्यति ॥ 'सत्यमित्तन्न त्वावाँ अन्यो अस्तीन्द्र ! देवो न मर्त्यो ज्यायान्' ऋ० ६।३०।४ अत्र इन्द्रस्य देवमर्त्येभ्यो ज्यायस्त्वम्, एतेन देवमर्त्यानां भेदोऽपि सिद्धः । अस्वप्ना.... देवाः' अ० १२।१।७ न तथा मनुष्याः । 'देवानामुत मर्त्यानाम्' यजुः १७।६६ ऋ०८।६७।२४, ऋ० ४।१२।५ ॥ 'मानुषीणां विशां दैवीनामुत' अ० २०।११।२ 'दैवीश्च विसो मानुषीश्च' यजुः १७।८६ । यं देवाः पितरो मनुष्या उपजीवन्ति सर्व्वदा' अ० १०।६।३२ इति देव-पितृ-मनुष्याणां पार्थक्यम् ॥ 'तस्माद् ब्राह्मण उभयीं वाचं वदन्ति, या देवानां या च मानुषाणाम्, निरुक्त १३।६।१०। (सावशेषा)

## शारदा-वन्दनम् ।

ले०---वासुदेवद्विवेदी छात्रः साहित्यशास्त्री,

( श्रीच्छत्रधारि संस्कृत विद्यालयः हथुवा राज्यम् )

भगवति तव पादपद्ममेतत्—
प्रणमति मातरसौ नितान्तरक्तम् ।
कुरु मम धिषणामशेष-शास्त्र—
श्रुति-परिशीलन-पाटवी-प्रवीणाम् ॥१॥

तदिह न भुवि वस्तु विद्यते यत्—
तव दयया न लभेत कामिलोकः ।
किमु धनमुचिता मतिः, स्पृहा वा
विषयचयेष्वथवाऽस्तु नाम मुक्तिः ॥२॥

मम न रतिरुदेति वित्तवर्गे—
विषय-सुख-स्खलितो न मे निसर्गः ।
तदपि मम मनो दुनोति नित्यं

उदयमभवदन्वये सुधीनां
न च निगमाऽगमगन्धितोऽप्यभूवम् ।
तदवतु भवती वितीर्य वीर्यं—
जननि ! कुलागत-गौरवं गरीयः ।।४।।

अथ तव पदयोर्निवेद्य वन्द्ये !
भव-भय-मोचिनि ! वन्दनान्यमन्दम् ।
पुनरग-जगदेक—वन्दनीये !
कलय दयामिति याचयामि यामि ।।५।।

( वसन्तपञ्चम्यां सरस्वतीपूजनोत्सवे पठितमिदं शारदावन्दनम् )

---

# सुरभाषा-पत्र-सञ्चालकान् प्रति विनयः ।

[ लेखकः—आचार्यः, गोपालकृष्णः, साइंस-मास्टर ( दिल्ली, पञ्जाप )
कौमर्स वैचलर ( लण्डन ), कोंग्यिा राजकुमाराणां संरक्षकः शिक्षकश्च,
( शीलांग, आसाम प्रान्तः । )

संस्कृतभाषा, यस्याः गीः, वाणी, अमरभारती, सुरवाणी, देवभाषा विबुधगीः, गीर्वाणवाणी, इत्यादयो बहवः पर्यायवाचिनः शब्दाः सन्ति । या सर्वस्मिन् जगति सर्वासु भाषासु प्राक्तनी, सम्पूर्णा, आह्लादजनिका, वैज्ञानिकपरा, एवं चोत्तमा—ऊररीक्रियते, न तत्र कृत्रिमः स्नेहो न चान्धश्रद्धा विद्यते । तदित्थं स्वीकारे तत्र तदुत्तमगुणा एव कारणम् । एनमुच्चादर्शं समक्षे निधायैव सर्वाणि कार्य्याणि सम्पादनीयानि संस्कृतपत्रसञ्चालकैरिति । अयं तेषां मुख्यं कर्तव्यं परमो धर्मश्च वरीवर्ति । अस्माद्धेतो स्तत्रावश्यकमिदं प्रतीयते यत् तत्र दृष्टिगाम्भीर्यस्य, अध्ययनविस्तारस्य तुलनात्मकनिरीक्षणस्य, महतः त्यागस्य च परमावश्यकता विद्यते । अत्र विचाराणां स्वातन्त्र्यं मनोदृढ़ता चानिवार्यरूपेणापेक्ष्येते ।

## विचारार्हा दशा—

हृदयं विदीर्यते यद् वयं संस्कृतपत्राणां दीनामवस्थामवलोकयामः, नेत्रेभ्योऽश्रुप्रवाहः प्रसरति, प्रत्यहं तासां खेदजनककथां कर्णगोचरीकृत्य खिद्यते मनः । अयमेव हेतुः तेषां विलम्बतः प्रकाशनस्य, कियत् कालाय मध्ये निरोधस्य च । तेषा मार्थिकी दशा दरिद्रताया चरमसीमां भजति, संरक्षकसंख्याऽतिन्यूना विद्यते, ग्राहक-संख्याऽल्पतरा वरीवर्ति, विज्ञापनदातृसंख्या तु सर्वथाऽ

भवतुल्यैवास्ति । अत एव संचालकमहोदयाः सर्वदोत्साहं विहाय चिन्तासागरे निमग्ना भवन्ति । अत्र आर्यजनतया किञ्चिदपि ध्यानं न प्रदीयते । हा ! शोकास्पदमिदं यत् संसार-मौलिपूजितभाषाऽद्यत्वेऽधोगतिपथिका विद्यते ।

## मूलकारणम्—

अत्र महती स्खलितिरस्ति यत् संस्कृतस्पृहयालवः केवलं देववाणीं प्राक्तन विध्यनुसारिणीं संस्कृतप्रकाण्डपण्डितानां ज्ञानवृद्ध्यर्थमियं भाषेति स्वीकुर्वन्ति । यद्यार्यावर्तः स्वतन्त्रोऽभविष्यत् तर्हीयं वाक् नितरामवश्यं राजभाषा, विद्यालयभाषा सभ्यभाषा चाभविष्यत्, नास्ति चात्र सन्देहलवलेशोऽपि । यदा भारतवर्षः स्वतन्त्रतामालिङ्गिष्यति तदावश्यं .संस्कृतभाषा निजयोग्यपदवीं प्राप्स्यति । मौलिकभावदृष्टेः परिवर्तनस्य परमावश्यकता वरीवर्ति । देववाणी तदैवोन्नतमार्गगामिनी भवितुमर्हति यदा कोटिशः वर्णचतुष्टयस्य आचरणात्मिका भाषा भविष्यति सर्वव्यवहारेषु चेयमेव प्रयुक्ता भवेत् । अत एवैनां दैनिकव्यवहारभाषारूपप्रदानाय यथासाध्यं प्रयत्नो विधेयः, वैयक्तिकाः सामष्टिकाश्च सर्वे व्यवहारा यथासंभवं यथाशक्ति समयानुसारमस्यामेव सम्पादनीयाः सर्वैः । अयमेव मुख्यकर्तव्यो विद्यते प्रतिसुरभाषाप्रियस्येति ।

## आचरणात्मिकोन्नतेरुपायाः—

(१) **दानरूपेण पत्रसञ्चालनम्**—सर्वविधा विद्या दानरूपेण दातव्या विशेषतस्तु धर्म सम्बन्धिन्यां संस्कृत भाषायां लिखिता ननु शुल्करूपेण । इदं पुण्य कार्यं धर्मार्थं सम्पादनीयं न तु धनार्थम् । संस्कृतवाणीप्रचारः परमपवित्र-धर्मकार्यं विद्यतेऽत एवैतद् धनलाभदोषेण न दूषणीयम् । हन्त ! अद्यत्वे सुरभाषाप्रचारोऽप्यन्यसांसारिककार्यवत् धनभावनायत्तो वरीवर्ति । शास्त्रविध्यनुसारन्तु विद्यादानं सर्वदानेषूत्तमदानमस्ति, एवं च विद्यादानेनैवास्माकं—परमकल्याणं भविष्यति न तु वणिग्वृत्त्याऽस्याः क्रयविक्रयरूपेण । तत्र योगिराजेन भगवता कृष्णेन प्रत्यपादि गीतायामिदम् (श्रीभगवद्गीता, १६-२३-२४)

> यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
> न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥
> तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
> ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥

अस्माद्धेतोः साम्प्रतं सर्वाणि संस्कृतपत्राणि धनलिप्सया नैव प्रकाशनं भजन्ते । न च कोऽपि वास्तविकरूपेण धनलाभं लभते । परं नाममात्रं शुल्कं निश्चितं कृत्वा भाषापत्राणा मनुकरणं विधाय तत्सञ्चालकैः साधारणनीते

रालम्बनं क्रियते। अभ्यर्थयेऽहं तान् प्रति यत्ते नूनं चिरधारयाऽनुद्विग्नमनसो भूत्वा, औदार्यं भजिष्यन्ति । दानरूपेण संस्कृतपत्राणि संचाल्योच्चादर्शस्य परिचयं दद्युः । स्वातन्त्र्येण निजनिजपत्राणां प्रकाशनसंख्या मा भूत्। पात्रतां संध्याय योग्यपुस्तकालयवाचनालयेभ्यो व्यक्तिभ्यश्च विना शुल्कं पत्राणि प्रेषणीयानि । अन्यच्च प्रसिद्धनगराणां विद्यालयेषु चाश्रमेष्वपि न्यूनातिन्यूनतोऽपि वाष्पगत्या शतप्रतयः प्रेषयितव्याः । कुम्भाद्युत्सवेषु सम्मेलनेषु तथान्ये ये केचन स्ववसराः स्युः तत्र तत्रापि मूल्यरहितं निजपत्राणि वितीर्य संस्कृत पाठकानां संख्यावृद्धिः करणीया । अत्रचित्रमेतत् यत् प्रतिवर्षं कोटिशः रूप्यकाणां व्ययो मन्दिरनिर्म्माणे आश्रमविद्यालयोः स्थापनसंचालनाय क्रियते । परं देववाण्या उन्नत्यर्थमुपेक्षाभावं भजन्ते । किमयं संभवो नास्ति यत्—उच्चदृष्टिभावेन संस्कृतपत्र संचालननिभ शुभकार्यार्थं, देववाण्याः, सभ्यतायाः, धर्मस्य च स्पृहयालवः प्रियाश्चेदं शुभकार्यं पुण्यञ्च मन्यमाना यथानुरूपां सहायतां दास्यन्ति ? नैवावश्यं ते तनुमनोधनादिभि स्तत्कृते सहायतां कृत्वा पुण्यभाजो भविष्यन्ति ।

(२) धर्मार्थविज्ञापनानि—वैयक्तिक—सामष्टिकौदार्येणाचरणात्मिकसहायतार्थं विना शुल्केन धर्मार्थविज्ञापनान्यवश्यं संस्कृतपत्रेषु प्रकाशतां लभेरन्, अन्यच्च जीवननिर्वाहकार्याणां विज्ञापनानि-शिल्पव्यापारयोः सेवासेवकयोः धनधरण्योः, पाणिपीडनादेश्च, विना शुल्कं निजपत्रेषु प्रकाश्य क्रियात्मिकरूपेण संस्कृतज्ञानामवश्यं सहायता विधेया ।

(३) विषयेषु वैशेष्यम्—अद्यत्वे सर्वेषु संस्कृतपत्रेषु केवलं शीर्षकभेदेन समानाः समानभावा लेखाः—प्रकाशिता भवन्ति । यथेष्टलाभार्थं लेखेषु भावेषु चावश्यमनिवार्यरूपेण भेदो विशिष्टता चापेक्षिते स्तः । सर्ववर्णानां भिन्न भिन्न पत्रैर्भवितव्यम् , तथैवमाश्रमाणामपि ।

## विनम्रीभावेन निवेदनम्

संस्कृतपत्रसंचालकैः स्वतन्त्रविचारशक्तेरादर्शरूपेण परिचयो दातव्यः । अन्धपरम्परयाऽन्यभाषापत्राणां नियमा नैवानुकरणीयाः । पुरुषार्थचतुष्टयस्य कार्याणि शुद्धभावनयौदार्येण च सम्पादनीयानि, न तु मिश्रितभावेन कदाचित् । उच्चादर्शान् शास्त्रविध्यनुसारमेव पालयन्तो वयं कल्याणपात्राणि भवितुं शक्नुमो नान्यथेति । आशासे यत् संस्कृतप्रिया ममाभ्यर्थनायामाचरणात्मिकदृष्ट्या विविच्य निजशक्त्यनुरूपमधिकं न्यूनं वा किञ्चिदाचरणात्मककार्य्यमवश्यं विधा-

स्यन्ति। यद्यस्मिन् विषये कैश्चन संस्कृतपत्रसञ्चालकैः स्वस्पृहा प्रकटीकृता तर्हि वयं विस्ताररूपेण निजलेखसन्दोहैर्निवेदयिष्यामः।

# शोकोद्गारः।

[ श्री १०८ माझाधिपतिमाधवेश्वरेन्द्रशर्मणो निधने ]

लें०—रामानन्दशर्मा साहित्यरत्नम्।

माझा स्टेट छपरा।

विहारप्रान्तस्थितराजधानी माझेतिनाम्ना नगरी प्रसिद्धा।
साधिष्ठिता भूमिसुरैः सुरैर्हि पुरीव शक्रस्य विराजतेऽद्य ॥ १ ॥
तस्याःपतिर्माधवसाहिशर्मा वसुन्धरां शासितवान् यशोभिः।
राज्यं स्वसूनौ प्रणिधाय सर्वं स्वर्गस्य यानाय मतिं व्यधत्त॥२।
एवं विधां तस्य मतिं निरीक्ष्य दुःखेन सम्यग् विरहीभवन् सन्।
शोकाग्निसंतप्तमनाः स्वधैर्यं विहाय काश्यां विलपामि नित्यम्॥३॥
मृदुलं सुकुमारमर्भकं परिहृत्य क्व गतो जनाधिप!।
दयितामपहाय सांप्रतं गमनं ते नहि रोचते भृशम्॥ ४॥
विलपन्त्यनुजीविनः सदा क्व गतो नाथ! वदन्त इत्यहो।
अनुजौ तव शोकविह्वलौ जहितो वै नयनाम्बुसंततिम्॥५॥
विरहानलतप्तमानसा तव माता न जहाति दुःसहम्।
कठिनं तव कर्म वीक्ष्य सा पतिताऽज्ञानतमोऽम्बुधाविहि॥६॥
सततं विलपत्यहो यतो धरणी शोकसमन्विताऽभवत्।
हृथुवानृपतेर्महीयसी निजमाता बहुशोकशंकुला॥७॥
जननाथ! भवत्समीक्षणं नहि दृष्टं विकृतिं भजेत्क्वचित्॥
कुपितोऽपि जनस्य लिप्सया कुरुते तद्धृदये यदीप्सितम्॥ ८ ॥
इत्थं विलापं बहुशोकवादं कुर्वत्सु तत्रेषु महेश्वरस्ते॥
दुःखार्णवं तर्तुमशक्नुवत्सु पुत्रादिवर्गेषु तनोतु भव्यम्॥

—:o:—

# वार्षिकोत्सवः।

विदितचरमेव तत्रभवतां भवतां यल्लक्ष्मीपुरीयसनातनधर्म्मसभायाः षट्चत्वारिंशत्तमो वार्षिकोत्सवः श्रीमतां पण्डितमोहनलालत्रिपाठि बी० ए० महोदयानां सभापतित्वे महता समारोहेण सुसम्पन्न इति।

प्रथमदिवसे कार्तिकशुक्लनवम्यां प्रातःकाले गणपत्यादिपूजनं हवनं ब्राह्मण-भोजनश्चाभूत्। सायाह्ने प्रोफेसर पं० श्रीभगवत्किशोर "व्याकुल" महोदयानां तथा पं० श्री आत्माराम "शोख" दिल्लीवास्तव्यानां मनोहराणि ललितललितानि गायनानि नागरिकजनानां चेतांसि हर्षोत्फुल्लानि कुर्वन्त्येवासन् ।

द्वितीयदिवसे प्रतिवादिभयङ्कराणां श्रीमाधवाचार्य्यशास्त्रिमहोदयानां "सनातनधर्म्म, विज्ञानञ्चेति विषयमवलम्ब्य श्री पं० कालूराम शास्त्रियुक्ति-विशारद महोदयानां "वर्णव्यवस्था" तथा काशीवास्तव्यानां श्री स्वामीलाल-नाथानां "सम्प्रति सनातनधर्म्मणां किंकर्तव्यमिति विषयमवलम्ब्य सप्रमाणं युक्तियुक्तानि सुमधुराणि व्याख्यानानि च समभूवन् ।

तृतीयदिवसे श्रीमतां खीरीमण्डलाधिपतिडेपुटीकमिश्नर खेरीमहोदयानां सभापतित्वे पारितोषिकवितरणोत्सवः संवृत्तः ।

तत्र श्रीसनातनधर्म सभा संस्कृतविद्यालयस्थच्छात्रा ईशस्तवनमकार्षुः, आंगलभाषाध्यापिनोऽन्तेवासिनश्च कतिपयानि हास्यरसोत्पादकानि क्रीडनानि प्रादर्शयन् । ततः मण्डलाधिपतिमहोदयेन वार्षिकपरीक्षायां समुत्तीर्णेभ्य-श्छात्रेभ्यः पारितोषिकं व्यतारि । तदनन्तरं धर्मसभाया हाईस्कूलमन्त्रि-महोदयेन वार्षिकविवरणं श्रावितम् । मध्ये महोत्सवं विशेषकार्यव्यापृततया मण्डलाधिपतिना स्वासने श्रीयुवराजदत्तसिंह वैल नरेशं सभापतिं नियुज्य गमनमकारि । ततः सनातनधर्मसभाया उपसभापतिना श्रीमता पं० श्रीसंकटाप्रसाद वाजपेयि महोदयेन समागतेभ्यः समस्तमहानुभावेभ्यः सादरं साधुवादाः प्रदत्ताः । अनन्तरं सुधारकम्मन्यमानै "बुद्धगयामन्दिरबिल," अन्तर्जातीयविवाहबिल" आदि प्रचालितनियमानां विरोधिनः कतिपये प्रस्तावाः प्रस्तुता अभूवन् । ते सर्वसम्मत्या स्वीकृताश्चाभवन् । पश्चात्सनातनधर्मस्य जयपूर्वकं सभाविसर्जनमभूदिति शम् ।

भवतांविधेयतमः

शम्भुदत्तशास्त्री, लक्ष्मीपुरवास्तव्यः ।

## छात्रसभा ।

गतमार्गकृष्णप्रतिपदि रोसड़ास्थभारतीभवनविद्यालयान्तर्गत-वाणी विनोदिनीसभाया दशममधिवेशनं व्याकरणाचार्य्यसाहित्यशास्त्रि-पदवीकानां प्रधानाध्यापकानां श्रीमाधवशर्म्मणां सभापतित्वे शतावधिकच्छात्राणामुपस्थितौ महता समारोहेण समजनि । यत्र शान्तिविषयमवलम्ब्य दैवज्ञतल्लजानां श्रीराम-

नारायणशर्म्मणां, तथा छात्रप्रमुखाणां, माधुर्य्यमिश्रितं शान्तिमयं भाषणमभृत् ।

ततो माननीयसभापतिमहोदयैश्चित्ताकर्षिव्याख्यानेन समुपस्थितजनमानन्दयद्भिः समुपयोगि कार्य्यजातं विदधद्भिश्च शान्तिपाठद्वारा सभा विसर्ज्जिता ।

## ( प्रश्नौ )

( ब्राह्मण्यां क्षत्रियाच्चौर्य्याद्रथकारः प्रजायते । शूद्रवत्तस्य वृत्तिः स्यात् द्विजत्वं प्रतिषिध्यते ) इत्यौशनसस्मृति रीत्या रथकारस्य ब्राह्मण्यां क्षत्रियसंसर्गेण, विश्वकर्म्मा च शूद्रायां गर्भाधानश्चकार स इत्यादि ब्रह्मवैवर्त्तपुराणवचनेन शूद्रायां ब्राह्मणसंसर्गेण, रथकारस्तु राजन्यात्करण्यां यस्य सम्भव इत्यमररीत्या च करण्यां राजन्यसंसर्गेणोत्पत्तिरिति शास्त्रकाराणां कथं मतभेदः ? का वा वर्णव्यवस्था ? इति प्रश्नद्वयं विविच्य युक्तियुक्तमनुशासयिष्यन्ति शास्त्रवाम्मनावासिताः ॥

भूदेवमिश्रः, रोसड़ा ( दरभंगा )

## अन्त्याक्षरीस्पर्धा ।

अयि भोः भारतभूमण्डल महनीयमहिमानो महाभागाः !

बेङ्गलूरुपत्तने श्रीचामराजेन्द्र वेदसंस्कृतमहापाठशालायां गीर्वाणविद्याभिवर्धनीति काचन सभा अचिरात् प्रवर्तिता । इहत्यैः माणवकैः सहृदयैः एतत्सभासंबन्धेन गततुलामासे अत्राधिकृतपुरुषानुमत्या अन्त्याक्षरीस्पर्धा इति कोऽपि विषयः प्रचालितः तत्र प्रौढ बाल इति कक्षाद्वयं प्रकल्पितम् एकैकस्यामपि कक्षायां विद्वांसः त्रयस्त्रयो निर्णेतारः स्थापिताः ।

तत्र लौकिकवैदिकमहानुभावाः मैसूर आस्थानविद्वांसः विद्यार्थिनश्च आसन् । तत्र प्रौढकक्षोत्तीर्णानाम् त्रयाणाम् बालकक्षोत्तीर्णानाम् त्रयाणां च पारितोषिकं दीयेत इति पूर्वनिर्धारितम् । पश्चाच्च उदारविद्याभिमानिजनसाहाय्येन एकैकस्यां कक्षायां पंचानां पारितोषिकदानं व्यवस्थितम् ।

एतत्पारितोषिकदाने श्रीमन्तः इँगितज्ञाः रिटायर्ड जज वि० आर० कृष्णमाचार्याः सभाध्यक्षस्थानम् अलंकुर्वन्तिस्म । ततः विद्यागणपतिसेवा महोत्सवः प्राचलत् । तदनु एतत्सभाध्यक्षाः मैसूर आस्थानविद्वांसः आर० ए० कृष्णमाचार्याः सभा कार्यकलापोदन्तम् मूलादारभ्य समाजे व्याजिज्ञपन्, ततश्च यथासंख्यं सन्मानमदीयत । तत्र क्रमोऽयम्—

### प्रौढ कक्ष्यायां

( 1 ) B. सीतारामशास्त्री ( 2 ) विद्वान् E. V. परशुरामशर्मा ( 3 ) A. सत्यनारायणः ( 4 ) विद्वान् G. नारायणशर्मा ( 5 ) P. R. गणेशः ।

### बालकक्ष्यायाम्

( 1 ) A. R. सुन्दरेशः ( 2 ) M. S. रामाचार्यः ( 3 ) नरसिंहशर्मा ( 4 ) T. A. सुब्रह्मण्यः ( 5 ) गुंडु भट्टः—इति

ततः सभाध्यक्षाः एतत्सभाप्रोत्साहकं सरसं विशदञ्च विषयम् अव्याज करुणया सुस्पष्टम् प्रावोचन् ततः सभा विरराम ।

---

## शोकसमाचारः ।

श्रीमतां राजकीय-ज्योतिषपाठशालाप्रधानाध्यापक पं० नारायणव्यास-दैवज्ञानां ३०।११।३५ दिने हृदयगतिस्तम्भनेन आकस्मिको मृत्युरभवत् ।

तदर्थं पं० चम्पकलालशास्त्रिणां सभापतित्वे ६।१२।३५ दिवसे सायाह्ने स्थानीय श्रीबलवंत सं० पाठशालान्तर्गत सं० वाग्वर्धिनीसभायां "शोकसभा" जाता । तत्र स्वीकृतः प्रस्तावश्चायम् ।

इयं सभा प्रस्तौति–श्रीमन्तःपरमपूज्याः महात्मानः सिद्धान्तवागीश लब्धोपाधयो महामहाध्यापकाः दैवैकनिष्ठाः सरस्वतीकृपास्पदीभूतास्त्रि-स्कन्ध ज्योतिषशास्त्राध्यापने छात्रसंरक्षणे च लब्धकीर्तयः श्रीगुरुमहाराजाः नारायणव्यास इतिनाम्ना 'व्यासोनारायणः' साक्षादिति वचनं याथार्थ्यमानयन्तो व्यासवंशोज्वलन्तश्चावन्तिकविदुषां नेतृत्वं शिष्याणां पुत्राणां च संरक्षणं, तथैवात्रत्यानां जनानां दृढ सौहार्दं, स्वकीयं नश्वरं देहं च सहैव हित्वा दिवंगतास्तेन दंदह्यते चेतोऽस्माकं दुःखार्तानां धातॄणां मातॄणां च तथैव समदुःख-भाजो वयं स्वेष्टदेवं श्रीमहाकालेश्वरं पुनः पुनः प्रार्थयामहे । सः सर्वेभ्यः शिवं वितरत्विति ।

---

दण्डात्मनोस्तु संयोगः सर्वथा हि विधीयते । न दण्डेन विना गच्छेदिषुक्षेपत्रयं बुधः ॥६७॥ सन्न्यासिनं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः । एष मे मण्डलं भित्त्वा परं ब्रह्माऽधिगच्छति ॥ ६८ ॥ षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च । कुलान्युद्धरते प्राज्ञः सन्न्यस्तमिति यो वदेत् ॥ ६९ ॥ ये च सन्तानजा दोषा ये दोषा देहसम्भवाः । प्रेषाऽग्निर्निर्दहेत्सर्व्वांस्तुषाऽग्निरिव काञ्चनम् ॥७०॥ कपालं वृक्षमूलानि कुचैलमसहायता । उपेक्षा सर्वभूतानामेता-वद्भिक्षुलक्षणम् ॥ ७१ ॥ यस्मिन् वाचः प्रविशन्ति कूपे त्रस्ता द्विपा इव । न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥ ७२ ॥ नैव पश्येन्न शृणुयादवाच्यं जातु कस्यचित् । ब्राह्मणानां विशेषेण नैव ब्रूयात्कथञ्चन ॥ ७३ ॥ यद्ब्राह्मणस्य कुशलं तदेव सततं वदेत् । तूष्णीमासीत निन्दायां कुर्व्वन्भैषज्यमात्मनः ॥ ७४ ॥ येन पूर्णमि-वाकाशं भवत्येकेन सर्व्वदा । शून्यं येन जनाकीर्णं तं देवा ब्राह्मणं विदुः ॥ ७५ ॥ येन केनचिदाच्छन्नो येन केनचिदाशितः । यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः ॥ ७६ ॥ अहेरिव गणाद्भीतः सौहि-त्यान्नरकादिव । कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ॥ ७७ ॥ न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः । सर्व्वभूतेष्व-भयदस्तं देवा ब्राह्मणं विदुः ॥ ७८ ॥ अनभ्याहतचित्तः स्यादन-भ्याहतवाग्भवेत् । निर्मुक्तः सर्वपापेभ्यो निरमित्रस्य किं भयम् ॥ ७९ ॥ अभयं सर्वभूतेभ्यो भूतानामभयं यतः । तस्य मोहाद्वि-मुक्तस्य भयं नाऽस्ति कुतश्च न ॥ ८० ॥ यथा नागपदेऽन्यानि पदानि पद्गामिनाम् । एवं सर्वमहिंसायां धर्म्मार्थमपि धीयते ॥ ८१ ॥ वसति सोऽमृतो नित्यं यो हिंसां न प्रपद्यते । अहिंसकः समःसत्यो धृतिमान्नियतेन्द्रियः ॥ ८२ ॥ शरण्यः सर्व्वभूतानां गतिमाप्नोत्यनुत्तमाम् । एवं प्रज्ञानतृप्तस्य निर्भयस्य निराशिषः ॥ ८३ ॥ न मृत्योरतिगो भावः स मृत्युमधिगच्छति । विमुक्तं सर्व्वसङ्गेभ्यो मुनिमाकाशवत्स्थितम् ॥ ८४ ॥ अस्वमेकचरं शान्तं तं देवा ब्राह्मणं विदुः । जीवितं यस्य धर्म्मार्थं धर्म्मो हर्य्यर्थमेव च ॥ ८५ ॥ अहोरात्राश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः । निरा-

मूत्रितो वाऽङ्गैर्बहुधैवं प्रकम्पितः । श्रेयस्कामः कृच्छ्रगत आत्मना-त्मानमुद्धरेत् ॥ ३१ ॥ सम्माननं परां हानिं योगर्द्धेः कुरुते यतः । जनेनावमतो योगी योगसिद्धिञ्च विन्दति ॥ ३२ ॥ तथा चरेत वै योगी सतां धर्ममदूषयन् । जना यथाऽवमन्येरन् गच्छेयुर्नैव सङ्गतिम् ॥३३॥ जरायुजाण्डजादीनां वाङ्मनःकायकर्मभिः । युक्तः कुर्व्वीत न द्रोहं सर्व्वसङ्गांश्च वर्जयेत् ॥३४॥ सर्वत्र विचरन्मौनी वायुवद्वीतकल्मषः । समदुःखसुखः क्षान्तो हस्तप्रासश्च भक्षयेत् ॥ ३५ ॥ जीवन्मुक्तोऽपि मुनयः ! ब्रह्मकोटेरयं पुनः । मूकस्तब्धो बालचेष्टो बहिरेव हि लक्ष्यते ॥ ३६ ॥ अन्तःकरणमध्ये तु ब्रह्म-सद्भावमाप्तवान् । आत्मारामोभवन्नित्यं लोकदृष्टौ जडो मतः ॥ ३७ ॥ साक्षात्तु जगतः कश्चित्तस्माल्लाभो न दृश्यते । जीव-न्मुक्तस्येशकोटेर्विपरीता त्वितो दशा ॥ ३८ ॥ सकलं कर्म्म कुर्वा-णोऽप्यकर्मी गीयते हि सः । ऋषिश्रेष्ठाः ! ब्रह्मकोटेर्जीवन्मुक्ता मतास्त्विमे ॥ ३९ ॥ सनकः प्रथमो ज्ञेयो द्वितीयस्तु सनन्दनः । सनातनस्तृतीयः सनत्कुमारस्तुरीयकः ॥ ४० ॥ ईशकोटेर्भव-न्तश्च दृष्टान्ताः समुदीरिताः । जिज्ञासुतेयं भवतामाचार्य्यत्वं तथा मम ॥ ४१ ॥ इदानीं स्थापिते एते युष्माभिर्जगतीतले । प्रचारार्थं निवृत्तेर्हि धर्म्मस्य स्तो मुनीश्वराः ? ॥ ४२ ॥ भवद्भिरत्र यत्किञ्चिदिदानीं कृतमुत्तमम् । कर्म्मैतद् गीयतेऽकर्म्म महायज्ञश्च वै सदा ॥ ४३ ॥ कर्म्मणो ह्यपि बोद्धव्यं बोद्धव्यञ्च विकर्म्मणः । अकर्म्मणश्च बोद्धव्यं गहना कर्म्मणो गतिः ॥ ४४ ॥ कर्म्मण्य-कर्म यः पश्येदकर्म्मणि च कर्म्म यः । स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ ४५ ॥ यस्य सर्व्वे समारम्भाः काम-सङ्कल्पवर्जिताः । ज्ञानाऽग्निदग्धकर्म्माणं तमाहुः पण्डितं बुधाः ॥ ४६ ॥ त्यक्त्वा कर्मफलाऽसङ्गं नित्यतृप्तो निराश्रयः । कर्म्म-ण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥ ४७ ॥ अयं निजः परो वेति गणना लघुचेतसाम् । उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥ ४८ ॥ गुरुर्मनुष्यजातेस्तु ह्यार्य्यजातिर्मता शुभा । आर्य्यजातेर्ब्राह्मणा हि ब्राह्मणानान्तु न्यासिनः ॥ ४९ ॥ ब्राह्मणेषु

तपोवृद्धाः श्रेष्ठास्तत्र प्रकीर्तिताः । तेष्वपि ज्ञानवृद्धा ये तत्राऽपि तत्त्वदर्शिनः ॥ ५० ॥ तत्त्वदर्शिषु ये युक्ता आत्मारामाश्च तेषु वै । न्यासिषु क्रमशः श्रेष्ठाः कुटीचकबहूदकौ ॥ ५१ ॥ हंसः परमहंसश्च यद्यप्येतत् तथापि ह । आत्मारामत्वमेवैषां लक्ष्यमत्र प्रकीर्तितम् ॥ ५२ ॥ मानवः प्रथमं स्वस्मिन्नार्य्यभावं विधारयन् । धर्म्मं हि मनुते मुख्यं तदा गार्हस्थ्यमाश्रितः ॥ ५३ ॥ पुत्रेषु च कलत्रेषु तथेष्टमित्रबन्धुषु । आत्मत्त्वं तेषु नियतं विलीनयति धर्मवित् ॥ ५४ ॥ देशवासिषु तत्पश्चाज्जगत्सु च ततः परम् । विलीने त्वेवमात्मत्वे वसुधैव कुटुम्बकम् ॥ ५५ ॥ मनुते तत्त्व-विज्ज्ञानी जगद्धितपरायणः । इयं परमहंसस्य गतिः श्रेष्ठा निगद्यते ॥ ५६ ॥ जीवन्मुक्तदशाऽपीयं ज्ञानिनः परिकीर्तिता । निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायणम् ॥ ५७ ॥ सन्तो ब्रह्मविदः शान्ता नौ दृढेवाप्सु मज्जताम् । सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः ॥ ५८ ॥ देवता बान्धवाः सन्तः सन्तो ब्रह्मस्वरूपिणः । नापेक्षते भविष्यञ्च वर्त्तमाने न तिष्ठति ॥ ५९ ॥ न संस्मरत्यतीतञ्च सर्व्वमेव करोति च । अन्तःसर्व्व-परित्यागी नित्यमन्तरनीषणः ॥ ६० ॥ कुर्व्वन्नपि बहिः कार्य्यं सममेवावतिष्ठते । बहिः प्रकृतसर्व्वेहो यथाप्राप्तक्रियोन्मुखः ॥ ६१ ॥ स्वकर्म्मक्रमसम्प्राप्तबन्धुकार्य्यानुवृत्तिमान् । समग्रसुख-भोगात्मा सर्व्वाशास्विव संस्थितः ॥ ६२ ॥ करोत्यखिलकर्म्माणि त्यक्तकर्तृत्वविभ्रमः । उदासीनवदासीनः प्रकृतक्रमकर्म्मसु ॥६३॥ नाऽभिवाञ्छति न द्वेष्टि न शोचति न हृष्यति । अनुबन्धपरे-जन्तावसंसक्तेन चेतसा ॥ ६४ ॥ भक्ते भक्तसमाचारः शठे शठ इव स्थितः । बालो बालेषु वृद्धेषु वृद्धो धीरेऽतिधैर्यवान् ॥ ६५ ॥ युवा यौवनवृत्तेषु दुःखितेष्वनुदुःखितः । प्रवृत्तवाक् पुण्यकथो दैन्याद्व्यपगताशयः ॥ ६६ ॥ धीरधीरुदितानन्दः पेशलः पुण्य-कीर्तनः । प्राज्ञः प्रसन्नमधुरः पूर्णः स्वप्रतिमोदये ॥ ६७ ॥ निर-स्तखेददौर्गत्यः सर्वस्मिन्स्निग्धबान्धवः । उदारचरिताकारः समः सौम्यसुखोदधिः ॥ ६८ ॥ सुस्निग्धः शीतलस्पर्शः पूर्णचन्द्र इवो-

दितः । न तस्य सुकृतेनाऽर्थो न भोगैर्न च कर्मभिः ॥ ६९ ॥ न दुष्कृतैर्न भोगानां सन्त्यागेन च बन्धुभिः । न कार्यकारणारम्भैर्न निष्कृतितया तथा ॥ ७० ॥ न बन्धेन न मोक्षेण न पातालेन नो दिवा । यथा वस्तु यथा दृष्टं जगदेकमयात्मकम् ॥ ७१ ॥ तदा बन्धविमोक्षाभ्यां न किञ्चित्कृपणं मनः । सम्यक् ज्ञानाऽग्निना यस्य दग्धाः सन्देहजालिकाः ॥ ७२ ॥ निःशङ्कमलमुड्डीनस्तस्य चित्तविहङ्गमः । स तिष्ठन्नपि कार्य्येषु देशकालक्रियाक्रमैः ॥ ७३ ॥ न कार्य्यसुखदुःखाभ्यां मनागपि हि गृह्यते । बहिः प्रकृत-सर्व्वार्थोऽप्यन्तः पुनरनीहया ॥ ७४ ॥ न सत्तां योजयत्यर्थे न फलान्यनुधावति । नोपेक्षते दुःखदशां न सुखाशामपेक्षते ॥ ७५ ॥ कार्योदये नैति मुदं कार्य्यनाशे न खिद्यते । आमूलान्मनसि क्षीणे सङ्कल्पस्य कथा च का ॥ ७६ ॥ तिलेष्विवाग्निदग्धेषु तैलस्य कलना कुतः । न त्यजन्ति न वाञ्छन्ति व्यवहारं जग-द्गतम् ॥ ७७ ॥ सर्वमेवानुवर्त्तन्ते पारावारविदो जनाः । सुशू-न्येऽपि न खिद्यन्ते देवोद्याने न सङ्गिनः ॥ ७८ ॥ नियतिञ्च न मुञ्चन्ति महान्तो भास्करा इव । विहरन्नपि संसारे जीवन्मुक्त-मना मुनिः ॥ ७९ ॥ आदिमध्यान्तविरसो विहसेज्जागतीर्गतीः । रुदतो हसतश्चैव जीवन्मुक्तस्य कुत्रचित् ॥८०॥ न दुःखं न सुखं किञ्चिदन्तर्भवति न स्थितम् । वीतरागाः सरागाभा अकोपाः कोपसंयुताः ॥ ८१ ॥ अमोहा मोहवलिता दृश्यन्ते तत्त्वदर्शिनः । इदं सुखमिदं दुःखमित्यादि कलनास्तु ताः ॥ ८२ ॥ अलं दूर-गतास्तेषां अङ्कुरा नभसो यथा । यस्य स्थिता भवेत् प्रज्ञा यस्यानन्दो निरन्तरः ॥ ८३ ॥ प्रपञ्चोऽपि स्मृतप्रायः स जीव-न्मुक्त इष्यते । लीनधीरपि जागर्ति यो जाग्रद्धर्म्मवर्जितः ॥ ८४ ॥ बोधो निर्वासनो यस्य स जीवन्मुक्त इष्यते । वर्तमानेऽपि देहे-स्मिञ्छायावदनुवर्त्तिनि ॥८५॥ अहंताममताऽभावो जीवन्मुक्तस्य लक्षणम् । न प्रत्यग्ब्रह्मणो भेदं कदापि ब्रह्मसर्गयोः ॥ ८६ ॥ प्रज्ञया यो विजानाति स जीवन्मुक्तलक्षणः । जीवः शिवः सर्व एव भूतेष्वेवं व्यवस्थितः ॥ ८७ ॥ एवमेवाभिपश्यन्ति जीव-

न्मुक्तास्त ईरिताः । अतीताऽननुसन्धानं भविष्यदविचारणम् ॥ ८८ ॥ औदासीन्यमपि प्राप्तं जीवन्मुक्तस्य लक्षणम् । साक्षाद्-ब्रह्मस्वरूपास्ते जीवन्मुक्ताः सदेहशाः ॥ ८९ ॥ मूर्तिमद्ब्रह्म-रूपा हि सत्यमेतद्ब्रवीम्यहम् ॥ ९० ॥

इति श्रीसन्न्यासगीतायां परमहंसधर्म्मनिरूपणं नाम
दशमोऽध्यायः ॥

---

## एकादशोऽध्यायः ।

शुक उवाच ।

प्रभो ! परमहंसानामादर्श ! विश्वपूजित ! जगद्गुरो ! हे सर्वज्ञ ! सर्व्वधीरत्नवारिधे ? ॥ १ ॥ शृण्मः परमहंसस्य रूपं स्म लक्षणानि च । ब्रह्मकोटीशकोट्योश्च जीवन्मुक्तस्य तत्वतः ॥ २ ॥ पृथक् पृथक् लक्षणानि ज्ञातव्यानि विशेषतः । प्रसादादेव भवतो जानीमो वयमाश्रिताः ॥ ३ ॥ योगीनामारुरुक्षूणां साधनायां कलौ युगे । कीदृक् लक्ष्यं विधेयं तत् स्फुटं विज्ञापय प्रभो ! ॥ ४ ॥ त्वयैवाऽभिहितं पूर्वं कलिकालो दुरत्ययः । सन्न्या-सिनोऽपि नो यान्ति निष्कृतिं कालधर्मतः ॥ ५ ॥ सन्न्यासिनः कृतार्थाः स्युर्यया धारणया कलौ । सम्यक्तदुपदेशेन कृतार्थान् कुरु नो गुरो ! ॥ ६ ॥

याज्ञवल्क्य उवाच ।

सन्न्यासिनां द्वे अवस्थे भेदात् प्रकृतिलक्ष्ययोः । यथा विविदिषाविद्वत्सन्न्यासाविति साधकाः ! ॥ ७ ॥ द्विविधस्यास्य भेदस्य वस्तुतो मूलकारणम् । ज्ञानानां तारतम्यं स्यादत्र मान-मृषिस्मृतिः ॥ ८ ॥ सन्न्यासिनोऽन्तःकरणे यावज्ज्ञानं विकाशते । दृढं दृश्येषु वैराग्यं तावदेव प्रजायते ॥ ९ ॥ यावद् विषयवैरा-ग्यमेधते योगिनां हृदि । उदेति तावदेवाऽत्र योगसिद्धिरनाविला ॥ १० ॥ विद्वत्सन्न्यासतः पूर्व्वं शुभा विविदिषा ध्रुवा ।

आयातीत्येष नियमः क्वचिद् व्यभिचरत्यपि ॥ ११ ॥ कदाचित्साधकः कश्चित् पूर्वसंस्कारतः क्वचित् । प्रागेव विद्वत्सन्न्यासमासाद्यैति कृतार्थताम् ॥ १२ ॥ यथा प्रारब्धकर्माणि जात्यादीन् जनयन्ति हि । धारणामप्यत्र तद्वज्ज्ञानलाभोपयोगिनीम् ॥१३॥ प्रधानधारणाकर्म्मण्यधिकारित्वमागताः । कर्त्तुं स्वरूपोपलब्धिं शक्नुवन्त्यविलम्बिताम् ॥ १४ ॥ इत्थन्ते योगिनः सम्यगनायासमनाविलम् । योगारूढत्वमापन्ना लभन्ते परमं पदम् ॥ १५ ॥ नैवमस्त्यारुरुक्षूणां किन्तु नूनमपेक्ष्यते । तैरत्र क्रमसन्न्यासः कृतकृत्यस्वसिद्धये ॥ १६ ॥ ततो हि वेदे सन्न्यासाश्रमस्य परिवीक्ष्यते । भेदश्चतुर्धा यत् पूर्वमहं सुस्फुटमुक्तवान् ॥ १७ ॥ प्रारब्धज-प्रकृतितः क्रमसन्न्याससंजुषाम् । ब्रह्मनिष्ठाऽऽत्मनिष्ठेति नाम्ना भेदो द्विधा मतः ॥ १८ ॥ पूर्व्वं गृहीतप्रवृत्तिनिवृत्तिधर्म्मसम्भवः । संस्कार एव हेतुः सोऽवस्थयोरनयोर्मतः ॥ १९ ॥ वासनातो विना नैव संस्कारो जायते क्वचित् । संस्कारतः कर्म्म तस्मात् संस्कारो जायते पुनः ॥ २० ॥ संस्कारस्य विशुद्धत्वे कर्म्मणोऽपि विशुद्धता । विशुद्धकर्म्मजनितज्ञानान्मोक्षः प्रकाशते ॥ २१ ॥ तत्वज्ञानं मनोनाशो वासनायाः क्षयोऽपि च । आविर्भवन्ति युगपदपवर्गदशाक्षणे ॥ २२ ॥ निवृत्तिधर्माज्जीवानां यत्परं घटते पदम् । भावशुद्धप्रवृत्त्युत्थधर्मतोऽप्यन्त एव तत् ॥ २३ ॥ अस्य भेदद्वयस्यैतत्कारणं मूलमीक्ष्यते । ब्रह्मनिष्ठाऽऽत्मनिष्ठत्वदशा भवति संस्कृतेः ॥ २४ ॥ स्वार्थश्च परमार्थश्च परोपकार इत्यपि । चतुर्विधाऽस्ति परमोपकार इति वासना ॥ २५ ॥ ऐहिकाऽभ्युदयस्तत्र स्वार्थो विद्वद्भिरुच्यते । स्वीयाऽऽमुष्मिककल्याणं परमार्थः प्रकीर्तितः ॥ २६ ॥ अपरैहिककल्याणं परोपकार उच्यते । अपराऽऽमुष्मिकशिवं सकलान्तस्य लक्षणम् ॥२७॥ स्वार्थः परोपकारश्च जीवानां लक्ष्यतामितः । परमार्थश्च परमोपकारश्चोच्चयोगिनाम् ॥ २८ ॥ सन्न्यासिनस्त एवाऽत्र केचनैव निरामयम् । स्वमोक्षमेवाप्नुवन्तो यान्त्येव कृतकृत्यताम् ॥२९॥ अन्येऽधिकारिणः केचित् आत्मनो जगता समम् । संस्थाप्यैकत्व-

सम्बन्धं यतन्ते सर्व्वमुक्तये ॥ ३० ॥ ब्रह्मकोटिर्यदाप्नोति पदं सुखमनामयम् । यदीशकोटिर्लभते तदेकमेव यद्यपि ॥ ३१ ॥ तथापि भेद आद्येन परोक्षं जगतो हितम् । अन्त्येन जीवन्मुक्तेन साक्षाद् भवति मङ्गलम् ॥ ३२ ॥ न विश्वं लभते किञ्चित् प्रत्यक्षं फलमादितः । भाविकालाश्रयाद्यस्मात्तत्कर्म विश्वभद्रकृत् ॥ ३३ ॥ जीवन्मुक्त ईशकोटिः पूर्वस्मादेव वस्तुतः । परमोपकारतत्त्वाधिकारित्वं समाश्रयन् ॥ ३४ ॥ जगद्गुरुत्वमापन्नोऽध्यात्मज्ञानं प्रचारयन् । विश्वप्रभूतकल्याणं जनयत्यविलम्बितम् ॥ ३५ ॥ तत्कर्माण्यपि साधूनि कालमाश्रित्य भाविनि । भुवने कालसर्गस्य कारणानि भवन्त्यलम् ॥ ३६ ॥ सतः समुचितात् केन्द्रान्नूनं भगवदिङ्गितैः । स कर्त्तुं भगवत्कार्यं प्रभवत्यनुपद्रवम् ॥ ३७ ॥ एतादृगेव परमहंसादर्शो जगद्गुरुः । जीवन्मुक्तो हि सर्वेषां कल्याणं कर्तुमर्हति ॥ ३८ ॥ सन्न्यासमिच्छतां काले योगिनां सावधानता । विशेषतोऽपेक्षणीया यस्मात् कालो दुरत्ययः ॥ ३९ ॥ कुटीचको वा भवतु विद्यतां वा बहूदकः । हंसो वाऽऽस्तां हि परमो हंसो वाऽस्तु विवेकवान् ॥ ४०॥ विधाय दृष्टिं परमोपकारे तत्त्व इष्टदे । जगदेव परं ब्रह्म ब्रह्मैव परमं जगत् ॥ ४१ ॥ इत्यस्य सम्यङ् मीमांसाद्वयसिद्धान्तमाश्रयन् । सन्न्याससोपानततौ सर्व्वो ह्यग्रसरो भवेत् ॥ ४२ ॥ सत्कर्मोपासनाज्ञानमेतद् यज्ञत्रयं क्रमात् । त्रिविधानां हि शुद्धीनां कारणं कीर्तितं परम् ॥४३॥ अधिभूतं कर्मयज्ञात् शुद्धिं समधिगच्छति । पूर्णाहुतिर्भवत्यस्य निष्कामकर्मयोगतः ॥ ४४ ॥ अधिदैवविशुद्धिः स्यादुपास्तियज्ञयोगतः । पूर्णाहुतिः पराभक्तावद्वैतभावसंजुषि ॥ ४५ ॥ अध्यात्मशुद्धिः सर्व्वेषां भवति ज्ञानयज्ञतः । अहं ब्रह्मास्मीति चिन्तासिद्धावेवास्य पूर्णता ॥ ४६ ॥ यथाधिकारमेते हि साधयन्तो न योगतः । विच्युताः स्युः कदापीहाऽन्यथा भावेऽन्यथा भवेत् ॥ ४७ ॥ सिद्धान्तानारुरुक्षूणां एतान्निश्चित्य यत्नतः । ईशकोटिकमुक्तानामादर्शं परिचिन्तयन् ॥ ४८ ॥ निष्कामकर्मयोगात्मपरकर्मपरां गतिम् । परां भक्तिं परज्ञानमाश्रयन् मानवः

स्वधर्मम् ॥ ४६ ॥ सम्यक् कृतार्थतामाप्तो जगन्त्यपि कृतार्थतां । नूनं गमयितुं सम्यक् शक्नोत्यत्र न संशयः ॥ ५० ॥ कलिकालप्रभावेण सन्न्यासिष्वपि सुव्रताः ! बहवः सम्प्रदायाः स्युर्लिङ्गान्यपि च भूरिशः ॥ ५१ ॥ द्वैतभेदनिरासायाऽद्वैतभेदस्य सिद्धये । यः सन्न्यासाश्रमः प्रोक्तस्तत्राज्ञानप्रभावतः ॥ ५२ ॥ मतभेदो लिङ्गभेदोऽहङ्कारस्य भिदा तथा । आचारस्यापि भेदश्च भविष्यति कलौ ध्रुवम् ॥ ५३ ॥ प्रकृतिः कारणं तस्य माया या विश्वमोहिनी । कलौ सन्न्यासभेदा ये तेषां चक्रे पतिष्यताम् ॥ ५४ ॥ भाविन्यधोगतिर्विप्राः ! भवचक्रे विघूर्णिनी । आध्यात्मिकोन्नतिं तद्वत् लब्ध्वा ज्ञानस्य पूर्णताम् ॥ ५५ ॥ पदश्चाभयमव्यग्रं य इच्छेन्नियतात्मवान् । न पतेदीदृशे सोऽसावविद्यापाशबन्धने ॥ ५६ ॥ सन्न्यासाश्रममभ्येत्य मुमुक्षुर्यदि सम्पतेत् । उक्तेऽविद्याचक्रचक्रे तदा कष्टा बहिर्गतिः ॥ ५७ ॥ तन्मायाचक्रतो घोरात् सत्यं सत्यं ब्रवीम्यहम् । ममैतद्वचने पूर्णं विश्वस्तव्यमलं सदा ॥ ५८ ॥ जीवन्मुक्तपदं तद्वन्न्यासिनश्च जगद्गुरोः । पदं प्राप्तुमपेक्ष्येत क्रमन्यासो ध्रुवं ध्रुवं ॥ ५९ ॥ चतुर्धा संविभक्तोऽसौ पूर्वमुक्तोऽत्र विस्तरात् । स्वाभाविकास्ते चत्वारो विभागाः सम्प्रकीर्तिताः ॥ ६० ॥ यथा प्राकृतिका वर्णाश्रमाद्याः खलु सर्वथा । तेषामेवाश्रयः श्रेयांस्तत्त्वविद्भिरुदीरितः ॥ ६१ ॥ महर्षयोऽतिदुर्ज्ञेयं स्वरूपं कर्मब्रह्मणः । कर्मज्ञैर्योगिभिः कर्म विराड्रूपं त्रिधा स्मृतम् ॥ ६२ ॥ सहजं जैवमैशं च भावत्रयविभेदतः । ब्रह्माण्डस्य हि संस्कारसमष्ट्या यस्य यस्य च ॥ ६३ ॥ सम्बन्धः कर्मणस्तिष्ठेत् सहजं कर्म तन्मतम् । जङ्गमस्थावरस्रष्टेर्मूलं कर्मैतदीरितम् ॥ ६४ ॥ असङ्ख्या देवनिचयाश्चालका अस्य कर्मणः । परिणामः स्थावरेषु क्रमान्मर्त्येतरेषु हि ॥ ६५ ॥ जङ्गमेषु च जीवेषु या क्रमोन्नतिरीदृशी । जायते कारणं तत्र प्रभावो ह्यस्य कर्मणः ॥ ६६ ॥ पिण्डसम्बन्धि यत्कर्म मनुष्यैर्व्यष्टिरूपतः । कृतं सद्भिस्तत्त्वविद्भिर्जैवं कर्म तदुच्यते ॥ ६७ ॥ नरादयः स्वतन्त्रा वै जीवा एतस्य कर्मणः । निरन्तरं सर्वथैव भवन्ति फलभोगिनः ॥ ६८ ॥

कुर्वन्ति जीवन्मुक्ता यदेशं कर्म तदुच्यते । जीवन्मुक्तः कार्य-भूमिरीश्वरेच्छा तु कारणम् ॥ ६९ ॥ ततः कर्म भवेदैशमीश-कोटिकमुक्ततः । ईश्वराधीनमेवैतज्जगत्कल्याणहेतवे ॥ ७० ॥ ईशकोटिकमुक्तानां सञ्चितक्रियमाणके । कर्मणी बन्धनेऽनीशे स्वकर्तुस्सर्वथैव हि ॥ ७१ ॥ भविष्यत्कालजनने साहाय्यमधि-तिष्ठतः । जगतां जीवनायैव जीवन्मुक्तस्य जीवनम् ॥ ७२ ॥ जगत्पवित्रतासिद्ध्यै जीवन्मुक्तस्य कर्म वै । भगवन्महिमख्याति-प्रचाराय निरन्तरम् ॥ ७३ ॥ जीवन्मुक्तकृतोपास्तिः केवलं समु-दीरिता । जीवन्मुक्तस्य यज्ज्ञानं तत्त्वज्ञानप्रचारतः ॥ ७४ ॥ जगज्जीवोद्धारणाय केवलं तत्प्रकीर्तितम् । अत एव महाभागा स्तीर्था अपि भवादृशाः ॥ ७५ ॥ जगत्पवित्रयन्तो हि तीर्थेऽटन्त्य-निशं स्वतः । महर्षयः सत्यमेव ब्रवीमि भवतां पुरः ॥ ७६ ॥ जीवन्मुक्ते ब्रह्मणि च न भेदः कोऽपि विद्यते । एतावानेव भेदोऽस्ति मूर्तिमद् ब्रह्म ते मताः ॥ ७७ ॥ तेषां कर्म ब्रह्मकर्म स्मर्यैतैतदहर्निशम् ॥ ७८ ॥

इति श्रीसन्न्यासगीतायां जीवन्मुक्तविज्ञाननिरूपणं
नाम एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः

सर्व्वे ऊचुः ।

ब्राह्मणानां गुरो ! सन्न्यासिनां तद्वच्छिरोमणे । जगद्गु-रोऽद्य भवतः कृपया धन्यतामगात् ॥ १ ॥ इदं तीर्थं तथा सर्वे वयं धन्याः कृतास्त्वया । रहस्यं धर्म्मविज्ञानस्यातिदुर्ज्ञेयमद्भुतम् ॥ २ ॥ पुंसां साधारणो धर्म्मो धर्माङ्गस्य तथैव च । स्वरूपं तेऽनु-कम्पातः श्रुत्वा पुलकिता वयं ॥ ३ ॥ प्रबलस्य कले रूपं करालं च विचित्रितम् । श्रुत्वाश्चर्यपराः सर्वे वयं जातास्तपोनिधे ! ॥ ४ ॥ ततोऽतिपुण्यरूपस्य त्रैलोक्यपावनस्य च । सन्न्यासधर्मस्य

विभो ! रूपं श्रुत्वा पवित्रिताः ॥ ५ ॥ एवं कुटीचकादीनां चतुर्णां धर्ममुत्तमम् । विशेषं कृतकृत्याः स्म श्रुत्वा सर्व्वे वयं मुने ! ॥ ६ ॥ उपदिष्टं त्वया सर्वमिदं नौरेव कीर्तिता । कलिदुस्तरनद्या वै तरणे मुनिपुङ्गव ! ॥ ७ ॥ आत्मज्ञानं श्रावयास्मानधुना कृपया विभो ! । लक्ष्यस्थैर्य्यं यतोऽस्माकं संसाराब्धिं तरेम च ॥ ८ ॥

याज्ञवल्क्य उवाच ।

सर्वेषां दृश्यवस्तूनां त्रिधा दर्शनमस्ति यत् । आध्यात्मिकाधिदैवाधिभौतिकत्रयरूपतः ॥ ९ ॥ दृश्यकारणरूपाया मायाया वै गुणत्रये । दृष्टिश्च सततं विप्राः ! तत्त्वज्ञाने हि कारणम् ॥१०॥ अनादिसान्ता या माया शक्तिः सा परमात्मनः । परमात्मनि लीनायां तस्यामेव हि जायते ॥ ११ ॥ अद्वैतरूपज्ञानस्याविर्भूतिर्योगिनो हृदि । ब्रह्मणोऽभिन्नशक्तिस्तु ब्रह्मैव खलु नाऽपरा ॥१२॥ तथा सति वृथा प्रोक्तं शक्तिरित्यविवेकिभिः । शक्तिशक्तिमतोर्धीराः ! भेदाभेदस्तु दुर्घटः ॥ १३ ॥ सृष्टिर्मतैतज्जगतः शक्तिद्वारैव ब्रह्मणः । द्वैतमेतत्तथाऽद्वैतद्वैताऽद्वैतविवर्जितम् ॥१४॥ यतो हि कारणब्रह्म भिन्नं न कार्यब्रह्मणा । इत्थं स्थितमिदं विश्वं सदसद्देवरूपि च ॥ १५ ॥ द्वैतैक्यपदनिर्मुक्तं युक्तं द्वैतैक्यमध्यतः । चितेः कलंकवैरूप्यमिति संसारतां गतम् ॥ १६ ॥ अकलंकमसंसारि तद्याभिन्नाद्वयात्मकम् । इयमस्मीति सम्प्राप्तकलंका चिन्निबध्यते ॥ १७ ॥ एतामेव कलां बुध्वा स्वकाङ्क्षिनां विमुच्यते । चिदर्थाकारताऽभावाद् द्वित्वात् सत्त्वं समुज्झति ॥ १८ ॥ सुखादि-मिलितां धत्ते न सत्यां सदिति क्षणात् । शुद्धा निरंशा सत्या वाऽसत्या वेत्येवमादिभिः ॥ १९ ॥ विमुक्ता नामशब्दार्थैः सर्वैः सर्वात्मिकाऽपि खम् । सर्व्वं निरुपमं शान्तं मनसैतात्त्रिमार्गगम् ॥ २० ॥ ब्रह्मेदं बृंहितं ब्रह्म शक्त्याकाशविकासया । मनसा मनसि च्छिन्ने स्वेन्द्रियावयवात्मनि॥२१॥ सत्यालोकाज्जगज्जाले प्रच्छन्ने विलयं गते । छिद्यते शीर्णसंसारकलना कल्पनात्मिका ॥ २२ ॥ भ्रष्टबीजोपमा सत्ता जीवस्य इति

नामिका । आसाक्तिशून्या भवति पश्यन्ती चेत्य-चर्वणम् ॥ २३ ॥ मनोमोहाभ्रनिर्मुक्ता शरदाकाशकोशवत् । शुद्धा चिद्भाव-मात्रस्था चेत्यचिच्चापलं गता ॥ २४ ॥ समस्तसामान्यवती भवतीर्णभवार्णवा । अपुनर्भवसौषुप्तपदपाण्डित्यपीवरी ॥ २५ ॥ परमासाद्य विश्रान्ता विश्रान्ता वितते पदे । एतद्वो मनसि क्षीणे प्रथमं कथितं पदम् ॥ २६ ॥ द्वितीयं शृणुत प्राज्ञाः ! शक्ते-रस्याः सुपावनम् । एषैव मनसोन्मुक्ता चिच्छक्तिः शान्ति-शालिनी ॥ २७ ॥ सर्व्वज्योतिस्तमोमुक्ता वितताकाशसुन्दरी । घनसौषुप्तलेखावच्छिलान्तःसन्निवेशवत् ॥ २८ ॥ सैन्धवान्तः-स्थरसवद्वातान्तःस्पन्दशक्तिवत् । कालेन यत्र तत्रैव परां परिणतिं यदा ॥ २९ ॥ शून्यशक्तिरिवाकाशे परमाकाशगा तदा । चेत्त्यांशोन्मुखतां नूनं त्यजत्यम्भिव चापलम् ॥३०॥ स्पन्दनं वात-लेखेव पुष्पलेखेव सौरभम् । कालताकाशते त्यक्त्वा सकले सकला कला ॥ ३१ ॥ न जड़ा नाऽजड़ा स्फारा धत्ते सत्तामना-मिकाम् । दिक्कालाद्यनवच्छिन्नमहासत्तापदं गताम् ॥ ३२ ॥ तूर्यतूर्यांशकलितामकलङ्कामनामयाम् । काञ्चिदेव विशालाक्ष-साक्षिवत् समवस्थिताम् ॥ ३३ ॥ सर्व्वतः सर्व्वदा सर्व्वप्रकाश-स्वाद्भुतत्पराम् । एषा द्वितीया पदता कथिता वः सुधीवराः ॥३४॥ तृतीयं वः प्रवक्ष्यामि पदं पदविदां वराः ! एषा दृक् चेत्यबलना-दनामार्थी पदं गता ॥ ३५ ॥ ब्रह्मात्मेत्यादिशब्दार्थादतीतोदेति केवला । स्थैर्येण कालतः स्वस्था निष्कलङ्का परात्मना ॥ ३६ ॥ तुर्यातीतादिनामस्वादपि याति परं पदम् । सापरा परमाकाष्ठा प्रधानं शिवभावतः ॥ ३७ ॥ चिद्रूपा निरवच्छेदा तृतीया पावनी स्थितिः । चिरमस्यां प्रतिष्ठायां सर्व्वाध्वाध्वगदूरगा॥३८॥ सा ममाप्यङ्ग वचसां न समायाति गोचरम् । सत्यं ब्रह्म जगच्चैकं स्थितमेकमनेकवत् ॥ ३९ ॥ सर्व्वं वा सर्ववद्भाति शुद्धश्चाऽशुद्ध-वत्ततम् । अशून्यं शून्यमिव च शून्यं वाऽशून्यवत्स्फुटम् ॥ ४० ॥ स्फारमस्फारमिव तदस्फारं स्फारसन्निभम् । अविकारं विकारीव समं शान्तमशान्तवत् ॥ ४१ ॥ सदेवाऽसदिवाऽद्वयं तदेवाऽत-

दिक्षोदितम् । अविभागं विभागीव निर्जाड्यं जडवद्गतम् ॥४२॥ अचेत्यं चेत्यभावीव निरंशं सांशशोभनम् । अनहं सोऽहमिव तदनाशमिव नाशवत् ॥ ४३ ॥ अकलङ्कं कलङ्कीव निर्वेद्यं वेद्यवोहिवत् । आलोकि ध्वान्तघनवन्नववच्च पुरातनम् ॥ ४४ ॥ परमाणोरपि तनु गर्भीकृतजगद्गणम् । सर्वात्मकमपि त्यक्तदृष्टं कष्टेन भूयसा ॥ ४५ ॥ अजालमपि जालाढ्यश्चाशेषवदनेकधा । निर्मायमपि मायांशुमण्डलामलभास्करम् ॥ ४६ ॥ ब्रह्म विन्त विदांनाथाः ! स्वपामिव महोदधिम् । जगद्रत्नमहाकोषतुलायां तूलकाल्लघु ॥ ४७ ॥ मायामरीचिशशिनमपि नेक्षणगोचरम् । अनन्तमपि निष्पारं न च क्वचिदपि स्थितम् ॥ ४८ ॥ आकाशे वनविन्यासनगनिर्माणतत्परम् । अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम् ॥ ४९ ॥ गरीयसां गरिष्ठञ्च श्रेष्ठञ्च श्रेयसामपि । अकर्तृकर्म्मकरणमकारणमकारकम् ॥ ५० ॥ अन्तःशून्यतयैवैताचिराय परिपूरितम् । जगत्समुद्गकमपि नित्यं शून्यमरण्यवत् ॥ ५१ ॥ अनन्तशैलकठिनमप्याकाशलवान्मृदु । प्रत्येकं प्रत्यहं प्रायः पुराणं पेलवं नवम् ॥ ५२ ॥ आलोकमन्धकाराभं तमस्त्वालोकमाततम् । प्रत्यक्षमपि दुर्लक्ष्यं परोक्षमपि चाग्रगम् ॥ ५३ ॥ चिद्रूपमेव च जडं जडमेव चिदात्मकम् । अहमेवानहम्भावमनहं वाऽहमेव च ॥५४॥ अन्यदेव तदेवाऽहमहमेवाऽन्यदेव तत् । अस्य पूर्णार्णवस्यान्तरिमे त्रिभुवनोर्मयः ॥ ५५ ॥ स्फुरन्त्य इव तिष्ठन्ति स्वभावद्रवतात्मिकाः । विभर्ति सर्वमङ्गस्थं तुषारमिव शुक्लताम् ॥ ५६॥ भाति सर्गस्त्वनेनैव तुषारेणेव शुक्लता । अदेशकालावयवोऽप्येष देवो दिवानिशम् ॥५७॥ असज्जगत्तनोतीव यथा वारि तरङ्गकम् । एतस्मिन् विकसन्तीमा विपुलाकाशकानने ॥ ५८ ॥ जगज्जरठमञ्जर्यः प्रसरत्पत्रपञ्चकाः । एष स्वप्रतिबिम्बस्य स्वयमालोकनेच्छया ॥ ५९ ॥ अत्यन्तनिर्मलाकारः स्वयं मुकुरतां गतः । व्योमवृक्षफलस्यास्य स्वेच्छावयव उज्ज्वलाः ॥ ६० ॥ त्रैलोक्यात्मनि देदीप्ताः सूर्य्यचन्द्रादयो ग्रहाः तदुत्पन्नानीन्द्रियाणि चक्षुरादीनि सर्वथा ॥ ६१ ॥ जीवस्य

सार्वोपालम्भे चमत्कुर्व्वन्ति संविदि । अन्तःस्थेन वहिष्ठेन नानाऽनानातयात्मनि ॥ ६२ ॥ एष सोऽन्तर्बहिर्भाति भावाभावविभावया । एतद्रूपा पदार्थश्री रेतस्मिन्नेतदिच्छया ॥ ६३ ॥ चमत्करोत्येतदर्थं जिह्वेव स्वास्यकोटरे । ज्ञाता ज्ञानं तथा ज्ञेयं द्रष्टा दर्शनदृश्यभूः ॥ ६४ ॥ कर्ता हेतुः क्रिया यस्मात्तस्मै ज्ञप्त्यात्मने नमः । यत्तद्व्यक्तस्थमव्यक्तं विचिन्वन्ति महर्षयः ॥६५॥ क्षेत्रे क्षेत्रज्ञमासीनं तस्मै क्षेत्रात्मने नमः । अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः ॥ ६६ ॥ शान्ता सन्न्यासिनो यान्ति तस्मै मोक्षात्मने नमः । यस्मात्सर्वाः प्रसूयन्ते सर्गप्रलयविक्रियाः ॥६७॥ यस्मिंश्चैव प्रलीयन्ते तस्मै हेत्वात्मने नमः । अप्रमेयशरीराय सर्व्वतो बुद्धिचक्षुषे ॥६८॥ अपारपरमेयाय तस्मै दिव्यात्मने नमः । परः कालात्परो यज्ञात्परात्पर तरो हि यः ॥ ६९ ॥ अनादिरादिर्विश्वस्य तस्मै विश्वात्मने नमः । आत्मज्ञानमिदं ज्ञानं ज्ञात्वा पञ्चस्ववस्थितः ॥ ७० ॥ यं ज्ञानेनाऽधिगच्छन्ति तस्मै ज्ञानात्मने नमः । महतस्तमसः पारे पुरुषं ह्यतितेजसम् ॥७१॥ यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः । स्फुरन्ति शीकरा यस्मादानन्दस्याऽम्बरेऽवनौ ॥ ७२ ॥ सर्व्वेषां जीवनं तस्मै ब्रह्माऽनन्दात्मने नमः । यस्मिन् सर्व्वं यतः सर्व्वं यः सर्व्वं सर्व्वतश्च यः ॥ ७३ ॥ यश्च सर्व्वमयो देवस्तस्मै सर्व्वात्मने नमः । शृणुध्वं मुनयः सर्व्वं सत्यं सत्यं वदाम्यहम् ॥ ७४ ॥ अस्याः सन्न्यासगितायाः प्रकाशाज्जगतीतलम् । धन्यत्वमगमत्तद्वन्नरजातिः कृतार्थताम् ॥ ७५ ॥ इयं तूपनिषत् प्रोक्ता न देया यस्य कस्यचित् । देया तु गुरुभक्ताय सदाचारान्विताय च ॥ ७६ ॥ आस्तिकाय महाभागाः ! सत्यशीलयुताय च अध्यापनं चाध्ययनं यत्राऽस्या जायते सदा ॥ ७७ ॥ तत्र वाग्देवता ज्ञानजननी ह्युपतिष्ठते । अध्यापयति यश्चैनां तस्याऽनेकगुणैधते ॥ ७८ ॥ विद्या प्रारब्धकर्मभ्यो महामाहिमशालिनः । अस्यास्तु पुस्तकं यैश्च गृहस्थै दीयते मुदा ॥ ७९ ॥ ऐश्वर्यहीनं न भवेत्तद् गृहं वै कदाचन । पाठः प्रवर्त्तते यस्य गृहस्थस्य गृहे सदा ॥ ८० ॥ पुस्तकस्या-

स्यात्तद् गेहं धनधान्ययुतं भवेत् । विदुषी जायतेऽवश्यं तदीया सन्ततिः सदा ॥ ८१ ॥ वानप्रस्थगणश्चास्याः पाठेन लभते ध्रुवम् । परां काष्ठां तपस्यायाः स्वस्या ज्ञानपरायणः ॥ ८२ ॥ सन्न्यासिनां तु गीतेयं सर्वसिद्धिकरी मता । यदि सन्न्यासिनो ह्यस्याः पाठं कुर्य्युर्निरन्तरम् ॥ ८३ ॥ तापत्रयविनिर्मुक्ता लभन्ते मुक्तिमुत्तमाम् । तथैव परभक्तेस्ते लाभे वै परमात्मनः ॥ ८४ ॥ आत्मज्ञानस्य प्राप्तौ च भवेयुरधिकारिणः । ऋषिश्रेष्ठाः ! अहं मन्त्र मोंतत्सदिति संपठन् ॥ ८५ ॥ समाप्तिं प्रापयामीमं ब्रह्मयज्ञं महत्तमम् । यज्ञे ब्रह्मणि च ज्ञेयो न भेदोऽणुरपि क्वचित् ॥ ८६ ॥ अनन्ता ईरिता यज्ञा ऋषिभिस्तत्त्वदर्शिभिः । द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथैव च ॥ ८७ ॥ स्वाध्यायज्ञानयज्ञाश्च कर्मयज्ञा अपि ध्रुवम् । ब्रह्मप्राप्तिनिदानत्वात् सर्व्वे ब्रह्ममया इमे ॥८८॥ एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे । कर्म्मजान् विद्ध तान्सर्वानेवं ज्ञात्वा विमोक्ष्यथ ॥ ८९ ॥ ब्रह्माऽर्पणं ब्रह्महवि र्ब्रह्माऽग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्म समाधिना ॥ ९० ॥

इति श्रीभगवद्दत्तात्रेयकृपया प्राप्तायां श्रीसन्न्यासगीतायां आत्मस्वरूपनिरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥



ध्यात्वा । ॐ गणपतये नमः । ॐ गौर्यै नमः । ॐ पद्मायै नमः । ॐ शच्यै नमः । ॐ मेधायै नमः । ॐ देवसेनायै नमः । ॐ स्वधायै नमः ॐ स्वाहायै नमः । ॐ मातृभ्यो नमः । ॐ लोकमातृभ्यो नमः । ॐ धृत्यै नमः । ॐ पुष्ट्यै नमः । ॐ तुष्ट्यै नमः । ॐ आत्मनः कुलदेवतायै नमः । इति नाममन्त्रैः आवाहनं आसनं पाद्यं अर्घं स्नानं आचमनं वस्त्रं गन्धं अक्षताः पुष्पाणि धूपं दीपं नैवेद्यं भूषणार्थे द्रव्यं मंत्रपुष्पांजलिं समर्प्य वसोर्धारापूजनं कुर्यात् । मन्त्रः । "आज्येयतोऽस्तिदेवानामशनं मङ्गलात्मकं । ततो मातृः समुद्दिश्य घृतधारा ददाम्यहम् । ॐ वसोःपवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारं देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्ता । कुड्यस्तम्भसु संलग्ना मातॄणामुपरिस्थिताः । कारयेत् पञ्च तिस्रो वा सप्त वोदङ्मुखस्थिताः ।" इति मन्त्रैः तिस्रः पञ्च सप्त धाराः पातयित्वा तच्छेषघृतं ललाटे धृत्वा नीराजनं कुर्यात् । पुष्पाञ्जलिः । षोडशमातॄणां स्तोत्रं पठेत् । हरात्मजचतुर्बाहो वारणास्य महोदर । प्रसन्नो भव मह्यं त्वं गौरीपुत्र नमोऽस्तुते ॥ १ ॥ चन्द्रास्ये चन्द्रकलया विभूषितकपालके । प्रसन्ना भव मह्यं त्वं शिवगौरि नमोऽस्तुते ॥ २ ॥ दुग्धोदसम्भवे भव्ये सरोजोपरि संस्थिते । प्रसन्ना भव मह्यं त्वं हरिपद्मे नमोस्तुते ॥ ३ ॥ सदा सौभाग्यसंयुक्ते मन्दारकुसुमार्चिते । प्रसन्ना भव मह्यं त्वमिन्द्रकान्ते नमोऽस्तुते ॥४॥ शुक्लाम्बरधरे देवि वीणापुस्तकधारिणि । प्रसन्ना भव मह्यं त्वं सरस्वत्यै नमोऽस्तुते ॥ ५ ॥ सौभाग्ययुक्ते सौभाग्यदायिके दुःखवर्जिते । प्रसन्ना भव मह्यं त्वं विजये ते नमोऽस्तुते ॥ ६ ॥ वारुणा शुभपद्मेन राजमानेऽर्कसन्निभे । प्रसन्ना भव मह्यं त्वं भो जये ते नमोऽस्तु च ॥ ७ ॥ अनेकवर्णसंयुक्ते नानाशास्त्रसमन्विते । प्रसन्ना भव मह्यं त्वं देवसेने नमोऽस्तुते ॥ ८ ॥ पितॄणां वल्लभे शान्ते शान्तियुक्ते शुभंकरे । प्रसन्ना भव मह्यं त्वं स्वधे देवि नमोऽस्तुते ॥ ९ ॥ सप्तार्चिवल्लभे सप्तस्वरसन्तानसंयुते । प्रसन्ना भव मह्यं त्वं स्वाहे देवि नमोऽस्तुते ॥ १० ॥ वराऽभयकराभव्याः प्रसन्नमुखपङ्कजाः । सुप्रसन्नाः प्रजायन्तां मह्यं ताभ्यो नमो नमः ॥११॥ रक्षिकाः सर्वलोकानां नितरां लोकमातरः । सुप्रसन्नाः प्रजायन्तां मह्यं ताभ्यो नमोनमः ॥ १२ ॥ धृतिसञ्जनिके धैर्य्ययुक्ते सर्वसमर्चिते । प्रसन्ना भव मह्यं त्वं धृतिदेवि नमोऽस्तुते ॥ १३ ॥ सर्वेषां पुष्टिजनिके पूर्णकामसमन्विते । प्रसन्ना भव मह्यं त्वं पुष्टिदेवि नमोऽस्तुते ॥ १४ ॥ सर्व्वसन्तोषजनिके सन्तोषेण समन्विते । प्रसन्ना भव मह्यं त्वं तुष्टिदेवि नमोऽस्तुते ॥ १५ ॥ कुलदेवि महाभागे कुलाद्रिकृतकेतने । प्रसन्ना भव मह्यं त्वं कुलदेवि नमोऽस्तुते ॥ १६ ॥ गौरी पद्मा

शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ १७ ॥ धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता । गणेशेनाधिका ह्येता वृद्धौ पूज्याश्च षोडश ॥ १८ ॥ ब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लीलया । कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी वाराही घनघोरघर्घरमुखी चैन्द्री च वज्रायुधा । चामुण्डा गणनाथरुद्रसहिता रक्षन्तु नो मातरः ॥ १९ ॥ इति पुष्पाञ्जलिं समर्प्य दक्षिणा सङ्कल्पः । अद्येहेत्यादि देशकालौ सङ्कीर्त्य अमुकगोत्रोऽमुकराशिरमुकशर्माऽहं संन्यासग्रहणकर्मनिमित्तकं सर्वाभ्युदयप्राप्त्यै गणपतिसहितगौर्यादिषोडशमातॄणां पूजाकर्मणः साद्गुण्यार्थं इमां दक्षिणां ब्राह्मणाय दास्ये । तत्सत् इति सङ्कल्प्य दक्षिणां दत्त्वा मन्त्रपाठ कुर्यात् । "समख्ये देव्याधियासंदक्षिणयोरुचक्षसामामआयुःप्रमोषीर्मोअहंतववीरंविधेहितवदेविसंदृशि । ॐ अम्बेअम्बिकेअम्बालिकेनमानयतिकश्चन । ससस्त्यश्वकः सुभद्रिकांकाम्पिलवासिनीम् ।" इति पठित्वा मन्त्राशिषं दद्यात् । इति मातृपूजा ।

---

## १८—नान्दीश्राद्धम् ।

आचम्य प्राणानायम्य संन्यासग्रहणकर्मांगभूतं नांदीश्राद्धमहं करिष्ये । इति संकल्प्य हस्ते दूर्वा पवित्रं धृत्वा । सत्यवसुसंज्ञका विश्वेदेवाः नांदीमुखाः भूर्भुवः स्वः इदं वः पाद्यं स्वाहानम इय च वृद्धिः । मातृपितामहीप्रपितामह्यः नांदीमुखाः भूर्भुवः स्वः इदंवः पाद्यं० । पितृपितामहप्रपितामहाः नांदीमुखाः भूर्भुवः स्वः इदं वः पाद्यं० । मातामहमातृपितामहमातृप्रपितामहाः पत्नीसहिता नांदीमुखाः भूर्भुवः स्वः इदं वः पाद्यं० । पुनः सत्यवसु० इदं वः आसनगंधाद्युपचारकल्पनं स्वाहा नम इयंच वृद्धिः । मातृपिता० इदं वः आसनगंधा० । पितृपितामह० इदं वः आसनगंधा० । मातामहमातृपितामहमातृप्रपितामहाः-पत्नीसहिताः इदं वः आसनगंधा० । विनायकगार्यादिषाडशमातरः भूर्भुवः स्वः इदं वः युग्मब्राह्मणभोजनपर्याप्तमन्ननिष्क्रयीभूतं किंचिद्धिरण्यं स्वाहा नम इयंच वृद्धिः । सत्यवसु संज्ञ० इदं वः युग्मब्राह्मण० । मातृपिता० इदं वः युग्मब्राह्मण भोजन० । पितृपितामह० इदं वः युग्मब्राह्मण भोजन० । मातामहमातृ० इदं वः युग्मब्राह्मण० । ॐ उपास्मैगायता० ॐ अक्षन्न० । [मंत्रस्तु अष्टश्राद्धे द्रष्टव्यः । "ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव यत्कामास्तेजुहुमस्तन्नो अस्तु वयंस्यामपतयोरयीणां ।" कृतस्य नांदीश्राद्धस्य प्रतिष्ठाफलसिध्यर्थं

द्राक्षामलकनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे। माता पितामही चैव तथैव प्रपितामही। पिता पितामहश्चैव तथैव प्रपितामहः। मातामहस्तत्पिता च प्रमातामहकादयः। एते भवंतु सुप्रीताः प्रयच्छंतु च मंगलं। "ॐ इळामग्नेपुरुदंससनिंगोःशश्वत्तमहवमानायसाध। स्यान्नःसूनुस्तनयाविजावाग्नेसातेसुमतिर्भूत्वस्मे।" यथाचारं हिरण्येन भांडवादनं। अनेन नांदीश्राद्धेन नांदीमुखदेवताः प्रीयंतांवृद्धिः। इति नांदीश्राद्धम्।

---

## १९—ब्रह्माञ्जलिकरणम् ब्रह्मयज्ञश्च।

आचम्य प्राणानायम्य ब्रह्माञ्जलिं विधाय मनसा जपेत्। ओं ब्रह्मणे नमः। ओं विष्णवे नमः। रुद्राय नमः। ओं सूर्याय नमः। ओं सोमाय नमः। ओं आत्मने नमः। ओं अन्तरात्मने नमः। ओं परमात्मने नमः। इत्युच्चार्य वेदादीन् जपित्वा ब्रह्मयज्ञं कुर्यात्। तद्यथा—

अद्य शुभपुण्यतिथौ ऋषिगणप्रीत्यर्थं ब्रह्मयज्ञाख्यं कर्मकरिष्ये। ओंअग्निमीळे पुरोहितंयज्ञस्यदेवमृत्विजं। होतारंरत्नधातमं॥ अग्निःपूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत। सदेवाँएहवक्षति॥ अग्निनारयिमश्नवत्पोषमेवदिवेदिवे। यशसंवीरवत्तमं॥ अग्नेयंयज्ञमध्वरंविश्वतःपरिभूरसि। सइद्देवेषुगच्छति॥ अग्निर्होताकविक्रतुःसत्यश्चित्रश्रवस्तमः। देवोदेवेभिरागमत्। यदंगदाशुषेत्वमग्नेभद्रंकरिष्यसि। तवेत्तत्सत्यमंगिरः॥ उपत्वाग्नेदिवेदिवेदोषावस्तर्धियावयं। नमोभरंतएमसि॥ राजंतमध्वराणांगोपामृतस्यदीदिविं। वर्धमानंस्वेदमे॥ सनःपितेवसूनवेग्नेसूपायनोभव। सचस्वानःस्वस्तये॥ (ऋग्वेदः) पूर्णमदःपूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्यपूर्णमादाय पूर्णमेवावशिष्यते॥ (उपनिषद् इषेत्वोर्जेत्वावायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मणे। आप्यायध्वमघ्न्याइन्द्रय भागंप्रजावतीरनमीवाअयक्ष्मामावस्तेन ईशतमाघश ँ सोध्रुवाअस्मिन् गोपतौस्याताबह्वीर्यजमानस्यपशून्पाहि। (यजुर्वेदः) अग्नआयाहिवीतयेगृणानोहव्यदातये। निहोतासत्सिबर्हिषि॥ (सामवेदः) शंनोदेवीरभिष्टयआपोभवंतुपीतये। शंयोरभिस्रवंतुनः॥ (अथर्ववेदः) अग्निर्वैदेवानामवमोविष्णुःपरमः। (ऐतरेय ब्राह्मणः) अथमहाव्रतं (उपनिषद्) एषपंथाएतत्कर्म (उपनिषद्)। (अथातः संहितायां उपनिषत्) (उपनिषद्)। विद्यामधवविद्या। (उपनिषद्) (महाव्रतस्य पंचविंशतिं सामिधेन्यः। (उपनिषद्) अथैतस्य समाम्नायस्य (सूत्रं)। समाम्नायः

समाम्नातः । (निरुक्तम्) मयरसतजभनलगसंमितं । (छन्दः)—गौः । ग्मा । (निघण्टुः) पंचसंवत्सरमयं । (ज्योतिषम्) अथशिक्षां प्रवक्ष्यामि । (शिक्षा) । वृद्धिरादैच । (व्याकरणम्) अथातोधिकारः फलयुक्तानि कर्माणि (कल्पसूत्रम्) अथातो गृह्यस्थालीपाकानां कर्म (गृह्यसूत्रम्)—

१—प्रमाणप्रमेयसंशयप्रयोजन-दृष्टान्त-सिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः । (न्यायदर्शनम्) ।

२—अथातो धर्मं व्याख्यास्यामः । यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । (वैशेषिकदर्शनम्) ।

३—अथ योगानुशासनम् । योगश्चित्तवृत्तिनिरोध (योगदर्शनम्) ।

४—अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः (सांख्यदर्शनम्) ।

५—अथातो धर्मजिज्ञासा । धारको धर्मः । (भरद्वाजकर्ममीमांसा) ।

६—अथातो धर्मजिज्ञासा । चोदनालक्षणोऽर्थोधर्मः । (जैमिनीय कर्ममीमांसा)

७—अथातो भक्तिमीमांसा । रसरूपः परमात्मा जडरूपामाया (दैवीमीमांसा)

८—अथातो ब्रह्मजिज्ञासा । जन्माद्यस्य यतः । शास्त्रयोनित्वात् । तत्तुसमन्वयात् ॥ (ब्रह्ममीमांसा)

९—मनुमेकाग्रमासीनमभिगम्य महर्षयः ।
प्रतिपूज्य यथान्यायमिदं वचनमब्रुवन् ॥ (स्मृतिः)

१०—तपः स्वाध्यायनिरतं तपस्वी वाग्विदांवरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ (रामायणम्)

११—नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ (महाभारतम्)

१२—जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् ।
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ॥
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा ।
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ (पुराणम्)
आचारमूला जातिः स्यादाचारः शास्त्रमूलकः ।
वेदवाक्यं शास्त्रमूलं वेदः साधकमूलकः ॥
साधकश्च क्रियामूलः क्रियाऽपि फलमूलिका ।
फलमूलं सुखं देवि ! सुखमानन्दमूलकम् ॥

आनन्दो ज्ञानमूलस्तु ज्ञानं वै ज्ञेयमूलकम् ।
तत्त्वमूलं ज्ञेयमात्रं तत्त्व हि ब्रह्ममूलकम् ॥
ब्रह्मज्ञानं त्वैक्यमूलमैक्यं स्यात्सर्वमूलकम् ।
ऐक्यं तद्धि महेशानि भावातीतं सुनिश्चितम् ॥
भावातीतमिदं सर्वं प्राकाश्ये भावमात्रकम् ।
नास्त्यत्र संशयः कोऽपि सत्यं सत्यं वदाम्यहम् ॥ (तन्त्रम्)

योगीश्वरं याज्ञवल्क्यं । (स्मृतिः) तच्छंयोराबृणोमहेगातुंयज्ञायगातुंयज्ञपतये-दैवीस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः । ऊर्ध्वंजिगातुभेषजं ॥ शंनोअस्तुद्विपदेशंचतु-ष्पदे ॥ नमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः । नमोवाचे नमोवाच-स्पतयेनमोविष्णवेमहतेकरोमि ॥ इतित्रिः । ओं भूर्भुवः स्वः शांतिः शांतिः शांतिः ।"

इति जपित्वा सक्तुमुष्टित्रयं प्रणवेन त्रिः प्राश्याचम्य नाभौ करं दत्त्वा(मंत्र-येदेभिर्मंत्रैः । ॐ उं आत्मने स्वाहा । ॐ अं अन्तरात्मने स्वाहा । ॐ मं परमात्मने स्वाहा । ॐ प्रजापतये स्वाहा । ततः पयोदधियुतमाज्यमपोवा । त्रिवृदसीति-प्रथमं । प्रवृदसीति द्वितीयं । विवृदसीति तृतीयं प्राश्य । "ॐ आपःपुनंतु-पृथिवींपृथिवीपूतापुनातुमाम् । पुनंतुमां ब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमाम् ।" इति जलं प्राश्याचम्योपवासं करिष्य इति सङ्कल्पयेत् । ततः सावित्रीं प्रविशेत्—

---

## २०—सावित्रीप्रवेशः ।

आचम्य प्राणानायम्य अद्येत्यादि सावित्रीप्रवेशात्मकं कर्मकरिष्ये । ॐ भूः सावित्रीं प्रविशामि, तत्सवितुर्वरेण्यं । ॐ भुवः सावित्रीं प्रविशामि, भर्गोदेवस्य धीमहि । ॐ स्वः सावित्रीं प्रविशामि, धियोयोनःप्रचोदयात् । ॐ भूर्भुवः स्वः सावित्रीं प्रविशामि, तत्सवितुर्वरेण्यं भर्गोदेवस्यधीमहि । धियोयोनः प्रचोद-यात् । इति जपित्वा किंचन प्राश्नीयात् । ततोऽस्तमयात्प्राग्गोपासनाग्निसमिध्य । विच्छिन्नश्चेत् पुनः संधानमग्नित्याग प्रायश्चित्त होमद्रव्यदानपूर्वकं कुर्यात् । अना-हिताग्निनाविधुरेण पृष्ठोदिविविधानेनाग्निरुत्पादनीयः । सयथा-आचम्य प्राणा-नायम्य देशकालौ स्मृत्वा ब्रह्मान्वाधानाद्यर्थं विधुरकल्पोक्तविधिनाग्निमुत्पादयिष्य इति संकल्प्य । स्थंडिले रेखामुल्लिख्य व्याहृतिभिः प्रणवेन च श्रोत्रियागारा-दग्निमादाय । "ॐ अन्वग्निरुषसामग्रमख्य दन्वहानिप्रथमोजातवेदाः । अनु-सूर्यस्यपुरुत्राचरश्मीननुद्यावापृथिवीआततान ।" इति मंत्रेण स्थंडिलादाग्नेय्यां

दिशि निधाय । "ॐ पृष्टोदिविपृष्टोअग्निःपृथिव्यांपृष्टोविश्वाओषधीराविवेश । वैश्वानरःसहसापृष्टोअग्निःसनोदिवासरुषःपातुनक्तं ।" इति मंत्रेण स्थंडिलरेखासु प्रतिष्ठाप्य तेनैव काष्ठैः समिध्य परिसमुह्य । "ॐ तत्सवितुर्वं० यात्स्वाहा । सावित्रइदं० । ता॒ सेवितुर्वरेण्यस्यचित्रामाहंवृणेसुमति विश्वजन्यां । यामस्यकण्वोअदुहत्प्रपीना॒ सहस्रधारांपयसांमहीगां॒ स्वाहा । सवित्रइदं० । ॐ विश्वानिदेवसवितर्दुरितानिपरासुव । यद्भद्रंतन्मआसुवस्वाहा । सवित्रइदं० । इति तिस्रः समिधोऽभ्याधाय पुनः परिसमुह्य यस्यस्मृत्येत्यादि । एवमग्निसिद्धिं कृत्वा विधुरोऽग्निसमिंधनं कुर्यात् ।

## २१—ब्रह्मान्वाधानम् ।

अस्तमानात्पूर्वं आचम्य प्राणानायम्य देशकालौ स्मृत्वा कुटीचकसंन्यासं कर्तुं तत्रविहितब्रह्मान्वाधानं करिष्ये । इति संकल्प्य । अग्नींधनाद्याज्यसंस्कारांते स्रुक् स्रुवौ संमृज्याग्निं परिषिच्य स्रुचि चतुर्गृहीतं गृहीत्वा । ॐ स्वाहा । परमात्मनइदंनमम । उत्तरपरिषेचनं कृत्वा यस्यस्मृत्येति कर्मशेषं समापयेत् । ततः संध्यावंदनपूर्वकमस्तमित आदित्ये स्वे स्वाग्नौ नित्यहोमं वैश्वदेवं च कुर्यात् । अथ सायंहोमानंतरं उत्तरे तृणानि स॒स्तीर्य तेषु दंडादीनि पंच वा द्वंद्वश आसाद्य दक्षिणेनाग्निं कुशेषु कृष्णाजिनमास्तीर्य तस्मिन्नुपविश्य गायत्रीं जपन् जागरणं कुर्यात् । ततो ब्राह्मे मुहूर्ते उत्थाय यथाविधि स्नात्वा प्रातःसंध्यां प्रातर्होम वैश्वदेवादिकं कृत्वा प्राणानायम्य व्याहृतीर्जपित्वा आग्नेयस्थालीपाकं कुर्यात् ।

## २२—प्रातर्होमः ।

आचम्य प्राणानायम्य अद्येत्यादि० श्रीपरमेश्वरप्रीत्यर्थं प्रातरौपासनहोमं करिष्ये । अग्निं ध्यात्वा । ओं चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य । त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यां आविवेश । सप्तहस्तश्चतुश्शृंगस्सप्तजिह्वो द्विशीर्षकः । त्रिपाद्प्रसन्नवदनस्सुखासीनः शुचिस्मितः । स्वाहांतु दक्षिणेपार्श्वे देवीं वामेस्वधां तथा । बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवं । तोमरं व्यजनं वामे घृतपात्रं च धारयन् । आत्माभिमुखमासीनो एवं रूपो हुताशनः । अग्ने वैश्वानर शांडिल्यगोत्र मेषध्वजप्राङ्मुखो मम सम्मुखो वरदो भव ।

* अग्निमुखः प्रयोगो गायत्रीपुरश्चरणे द्रष्टव्यः ।

ओं परिसमूहनं ३। ओं पर्य्युक्षणं ३। ओं विश्वानिनोदुर्गहाजातवेदः। ओं सिंधुंननावादुरिताविभर्षि। ओं अग्ने अत्रिवन्थवसा गृणानः। ओं अस्माकंबोध्यविताततनूनां। ओं यस्त्वाहृदा कीरीणामन्यमानः। ओं अमर्त्यंमर्त्योजोहवीमि। ओं जातवेदोयशोअस्मासुधेहि। ओं प्रजाभिरग्नेअमृतत्वमस्यां। ओं यस्मैत्वं सुकृतेजातवेदोउलोकमग्ने कृणवःस्योनं। अश्विनंसपुत्रिणंवीरवन्तंगोमन्तंरयिं न शते स्वस्ति।" आत्मानं चालंकृत्य, अग्निप्रज्वाल्य, समिधंतूष्णीं अग्नौनधाय। ओं सूर्याय स्वाहा। सूर्यायेदं०। ओं प्रजापतये स्वाहा। प्रजापतयइदं०। पुनः परिसमूहनादि कृत्वोपस्थानं कुर्यात्। तिष्ठन्, मंत्राः। सूर्योनोदिवस्पातुपाताअन्तरिक्षात्। अग्निनःपार्थिवेभ्यः। ओं उदुत्यंजातवेदसंदेवंवहंतिकेतवः। दृशे विश्वायसूर्यं। ओं चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः। आप्राद्यावापृथिवीअन्तरिक्षंसूर्यआत्माजगतस्तस्थुषश्च। ओं नमामित्रस्यवरुणस्यचक्षसे महादेवायतदृतंसपर्यत। दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्यायशंसत। एतैश्चतुर्भिः सूर्यमुपस्थाय। ओं प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव। यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणां। ओं हिरण्यगर्भःसमवर्तताग्रे भूतस्यजातःपतिरेकआसीत्। सदाधारपृथिवीद्यामुतेमांकस्मैदेवायहविषाविधेम। इति द्वाभ्यां प्रजापतिं चोपस्थाय। ओं मानस्तोकेतनयेमान आयुषिमानोगोषुमानोअश्वेषुरीरिषः। वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहे। ओं त्र्यायुषं जमदग्नेरिति ललाटे। ओं कश्यपस्य त्र्यायुषं, कण्ठे। अगस्त्यस्य त्र्यायुषं, नाभौ। यद्देवानां त्र्यायुषं, दक्षिणस्कंधे। तन्मेअस्तु त्र्यायुषं, वामस्कधे। सर्वमस्तुशतायुषं, शिरसि। ओंचमेश्वरश्चमे यज्ञोपचते नमश्च। यत्तेन्यूनं तस्मैतउपयत्तेतिरिक्तं तस्मैते नमः। ओं स्वस्ति श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलं। आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन। देहि मे हव्यवाहनो नमो नमः"। प्रमादात्कुर्वतांकर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः। प्रायश्चित्तान्यशेषाणि तपः कर्मात्मिकानि वै। यानि तेषामशेषाणां कृष्णानुस्मरणं परं। अनेन प्रातर्होमाख्येन कर्मणा भगवान् परमेश्वरः प्रीयतां न मम। ओं तत्सत् ब्रह्मार्पणमस्तु। इतिप्रातर्होमः।

---

## २३—वैश्वदेवः।

आचम्य प्राणानायम्य अद्ये० श्रीपरमेश्वरप्रीत्यर्थं सायं प्रातर्वैश्वदेवाख्यं कर्म करिष्ये। जुष्टोदमूना आत्रेयो वसुश्रुतोग्निस्त्रिष्टुप्। पद्माग्नेराहूगणो गोत-

मोऽग्निस्त्रिष्टुप् । अस्यावाहने विनियोगः । "ओं जुष्टोदमूनोअतिथिर्दुरोणइमंनो यज्ञमुपयाहिविद्वान् । विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजनानि । पद्यग्नइहहोतानिषीदादब्धःसुपुरएताभवानः । अवतांत्वारोदसीविश्वमिन्वे-यजामहेसौमनसायदेवान् ।" इत्यचतैरावाह्य आच्छादनं दूरीकृत्य, समस्तव्या-हृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती । अग्निप्रतिष्ठापने विनियोगः । ओं भूर्भुवः स्वरों रुक्मकनामानमग्निं प्रतिष्ठाप्य । प्रोक्षितेन्धनानि निक्षिप्य वेणुधमन्या प्रबोध्य ध्यायेत् । चत्वारिशृंगागोतमो वामदेवोग्निस्त्रिष्टुप् । अग्निमूर्तिध्यानेविनि-योगः । ओं चत्वारि शृं० । इतिध्यात्वा परिसमूहनपर्युक्षणे कृत्वा, विश्वानिन इत्यलंकृत्य । हस्तं प्रक्षाल्य, घृताक्तमन्नमग्नावधिश्रित्य उदगुद्वास्य प्रोक्ष्य अग्नेः पश्चिमतो निधाय त्रिधा विभज्य, सव्यंपाणितल हृदि न्यस्य दक्षिणहस्तेन दक्षिण-भागादार्द्रामलकमितमन्नमादायांगुष्ठाग्रेण पीडितंसंहतांगुल्युत्तानपाणिना प्रण-वादिरहितैः स्वाहांतैःसूर्यादिमंत्रैर्जुहुयात् । सूर्याय स्वाहा, सूर्यायेदंनमम । प्रजा-पतये स्वाहा, प्रजापतयइदं० । अग्नयेस्वाहा, अग्नयइदं० । प्रजापतये स्वाहा, प्रजापतयइदं० । सोमायवनस्पतये स्वाहा, सोमायवनस्पतयइदं० । अग्नीषो-माभ्यांस्वाहा, अग्नीषोमाभ्यामिदं० । इन्द्राग्निभ्यांस्वाहा, इन्द्राग्निभ्यामिदं० । द्यावापृथिवीभ्यांस्वाहा, द्यावापृथिवीभ्यामिदं० । धन्वंतरयेस्वाहा, धन्वतरय-इदं० । इन्द्राय स्वाहा, इन्द्रायेदं० । विश्वेभ्यो देवेभ्यः स्वाहा, विश्वेभ्योदेवेभ्य-इदं० । ब्रह्मणे स्वाहा, ब्रह्मणइदं० । सांगतासिध्यर्थं सर्वप्रायश्चित्तं करिष्ये । भूर्भुवः स्वः स्वाहा, प्रजापतयइदं० । पुनःपरिसमूहनादिकृत्वा । ओं अग्निस्तु-हिश्रवस्तमंतुविब्रह्माणमुत्तमं । अतूर्तश्रावयत्पतिं पुत्रं ददातिदाशुषे । अग्निर्ददा-तिसत्पतिं सासाहयोयुधानृभिः । अग्निरत्रिरभुष्यादंजेतारमपराजितं । अग्नेत्व-मिति चतसृणां गोपायना लोपायना वा बन्धुः श्रुतबन्धुश्चैकर्चा ऋषयः । अग्निर्देवता । द्विपदाविराट् छंदः, अग्न्युपस्थानेविनियोगः । ओं अग्नेत्वन्नो-अंतमउतत्राताशिवोभवावरूथ्यः । वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमं रयिंदाः । सनोबोधिश्रुधिहवमुरुष्याणो अघायतः समस्मात् । तंत्वाशोचिष्ठदीदिवः सुम्नायनूनमीमहे सखिभ्यः । मानस्तोक इति विभूतिधारणं । आ चमे० । ओं स्वस्ति० । अनेन वैश्वदेवाख्येन कर्मणा भगवान् अग्निरूपी परमेश्वरः प्रीयतां न ममः ।

—— :०: ——

## २४–अथाग्नेय स्थालीपाकादयः ।

प्रातर्नित्यहोमान्ते वैश्वदेवादिकं कृत्वा आग्नेयं वैश्वानरं वा स्थालीपाकं कुर्यात्, तत्र करिष्यमाण सन्न्यासपूर्वाङ्गभूतमाग्नेयस्थालीपाकं करिष्ये इति सङ्कल्प्य ध्यात्वा चक्षुषी आज्येनेत्यन्तेऽत्र प्रधानमग्निं चरुणा शेषेणेत्यादि, अग्निमुखः प्रयोगो गायत्रीपुरश्चरणे द्रष्टव्यः। अग्नये त्वा जुष्टं निर्वपामीत्या दिनाम्ना निर्वपादि नाम्नैव प्रधानहोमः। एवं वैश्वानरपक्षेऽप्यूह्यम्। ततः "ॐ तरत्समन्दी धावति धारासुतस्यान्धसः। तरत्समन्दी धावति॥ उस्रा वेद वसूनां मर्तस्य देव्यवसः। तरत्समन्दी धावति॥ ध्वस्रयोः पुरुषन्त्यो रासहस्राणि-दद्महे। तरत्समन्दी धावति॥ आययो त्रिंशतं तना सहस्राणि च दद्महे। तरत्स-मन्दीधावति॥" इति जपित्वा कुशहेमरूप्यजलैः स्नात्वा प्राणादिहोमं कुर्यात्।

---

## २५–प्रणवादि पुरुषसूक्तविरजाहोमश्च ।

आचम्य प्राणानायम्य देशकालौ स्मृत्वा संन्यासाङ्गभूतं प्राणादिहोम-पूर्वकपुरुषसूक्तहोमं तथा ज्ञानयोगसंपादनार्थं उपपातकादिसकलपाप-निवृत्ति पूर्वक सावयवशुद्ध्यर्थं च विरजाहोमञ्च तन्त्रेण करिष्ये इति सङ्कल्प्य अन्वाधाने चक्षुषी आज्येनेत्यन्तं प्राणादिपञ्च देवताः समिच्चर्वाज्यैः पुरुषं पुरुष-सूक्तेन प्रत्यृचं षोडशवारं समिच्चर्वाज्यैः प्राणाद्येकोनविंशतिदेवता विरजामन्त्रैः प्रतिद्रव्यमेकैकसंख्यसमिच्चर्वाज्याहुतिभिः प्रजापतिं सकृदाज्येन शेषेणेत्यादि। षष्ठ्युत्तर शतवारं तूष्णीं निरूप्य तथैव प्रोक्ष्य श्रपयित्वाऽऽज्यभागान्ते "ॐ प्राणाय स्वाहा, प्राणायेदंनमम। ॐ अपानायस्वाहा, अपानायेदंनमम। व्यानाय स्वाहा व्यानायेदंनमम। ॐ उदानायस्वाहा, उदानायेदं नमम। ओं समानायस्वाहा समानायेदंनमम"। पञ्चमन्त्रैर्द्रव्यत्रयं सकृत् सकृद्धुत्वा यथादैवं त्यक्त्वा, "ओं सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वा त्यतिष्ठद्दशाङ्गुलं स्वाहा"। पुरुषायेदं नममेति सर्वत्र त्यजेत्॥ "ओं पुरुष एवेदं सर्वं यद्भूतं यच्च-भाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति स्वाहा। ओं एतावानस्य महिमा ऽतोज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि स्वाहा॥ ओं त्रिपादूर्ध्वउदैत्पुरुषः पादोऽस्येहाभवत्पुनः। ततो विष्वङ् व्यक्रामत्साशनानशने अभि स्वाहा॥ ओं तस्माद्विराडजायत विराजोऽअधिपूरुषः। स जातोऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः स्वाहा॥ ओं यत्पुरुषेण हविषा देवा यज्ञमतन्वत। वसन्तो-

ऽअस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविस्स्वाहा ॥ ओं तं यज्ञं बर्हिषि प्रोक्षन्पुरुषं जातमग्रतः । तेन देवाऽअयजन्त साध्या ऋषयश्च ये स्वाहा ॥ ओं तस्माद्यज्ञात्सर्वहुतः संभृत पृषदाज्यम् ॥ पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्यांश्च ये स्वाहा ओं तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत स्वाहा ॥ ओं तस्मादश्वा अजायन्त ये के चोभयादत । गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽ अजावयस्स्वाहा ॥ ओं यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते स्वाहा ॥ ओं ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्य पद्भ्यां शूद्रोऽ अजायत स्वाहा ॥ ओं नाभ्याऽआसीदंतरिक्षंशीर्ष्णोद्यौ समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथालोकांऽअकल्पयन्स्वाहा ॥ ॐ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः । देवा यज्ञं तन्वानाऽ अबध्नन्पुरुषं पशुं स्वाहा ॥ ॐ यज्ञेन यज्ञमयजन्तदेवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवा स्स्वाहा ॥" इति षोडशर्चेन प्रत्यृचं पृथक् पृथक् द्रव्यत्रयं हुत्वा पुरुषायेदं नममेति सर्वत्र त्यजेत् ।

"प्राणापानव्यानोदानसमाना मे शुध्यंतां ज्योतिरहं विरजा विपाप्मा भूयास स्वाहा, प्राणादिभ्य इदं० । वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राणरेतो बुद्ध्याकूतिसंकल्पा मे शुद्ध्यंतां ज्योति० वागादिभ्य इद० । त्वक् चर्ममांस रुधिर्मेदो मज्जास्नायवोऽस्थीनि मे शुद्ध्यन्तां ज्योतिः त्वगादिभ्य इदं० । शिरः पाणिपाद पार्श्वपृष्ठोरूदर जंघाशिश्नोपस्थपायवो शुध्यंतां ज्योति० शिर आदिभ्य इदं० । उत्तिष्ठ पुरुष हरितपिंगल लोहिताक्ष देहि देहि ददापयिता मे शुद्ध्यन्तां ज्योति० पुरुषादिभ्य इदं० । पृथिव्यापस्तेजोवायुराकाशामे शुद्ध्यन्तां ज्योति० पृथिव्यादिभ्य इदं० । शब्दस्पर्शरूपरसगन्धा मे शुद्ध्यन्तां ज्योतिः शब्दादिभ्य इदम्० । मनोवाक्काय कर्माणि मे शुद्ध्यन्तां ज्योति० मन आदि कर्मभ्य इदं । अव्यक्तभावै रहंकारैर्ज्योति रहं० अव्यक्तादिभ्य इदं० । आत्मा मे शुद्ध्यतां ज्योति० आत्मन इदं० । अंतरात्मामे शुद्ध्यतां ज्योति० अन्तरात्मन इदं । परमात्मा मे शुद्ध्यतां ज्योति० परमात्मन इदं । क्षुधे स्वाहा–क्षुध इदं । क्षुत्पिपासाय स्वाहा–क्षुत्पिपासायेदं । विविद्यै स्वाहा–विविद्याया इदं ।। ऋग्विधानाय स्वाहा ऋग्विधानायेदं । कषोत्काय स्वाहा–कषोत्कायेदं । क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् । अभूतिमसमृद्धिं च सर्वां निर्णुद मे पाप्मानं स्वाहा अग्नय इदं० । अन्नमय प्राणमय मनोमयविज्ञानमयमानंदमयमात्मा मे शुध्यंतां ज्योतिरहं विरजा०, अन्नादिभ्य इदं० । इतिसमिच्चर्वाज्यैः प्रतिमंत्रं चत्वारिंशदाहुतीर्हुत्वा, अनेन मन्त्रेण आज्यं हुनेत् । ॐ यदिदं

यच्च पूर्तं यच्चापद्यनापदि । प्रजापतौ तन्मनसि जुहोमि विमुक्तोऽहं देव किल्बिषात्स्वाहा, प्रजापतय इदं० ।" ततः पुरुष सूक्तवेदादीन् जपेत् ।

चरोरेकदेशतः स्विष्टकृतादि पूर्णाहुत्यंतं कर्मशेष समापयेत् । इध्मसन्नहुतं चाग्नौ प्रहृत्य । ब्रह्मणे हिरण्य पात्रमाज्य मधुपूर्णं कांस्यपात्रं धेनुं च दत्त्वा विसर्जयेत् । आचार्याय पूर्वोद्दिष्टभागं धेनुं च वस्त्राणि सुवर्णादि दत्त्वा क्षमाप्य औपासनाग्नेरुपस्थानं कुर्यात् । "ॐ संमांसिंचंतु मरुतः समिन्द्रः स बृहस्पतिः । संमाऽयमाग्निः सिंचत्वायुषा च बलेन चायुष्मन्तं करोतु मां" । इत्यग्निमुपस्थाय तस्मिन्नग्नौ पात्रदाहं कृत्वा तैजसानि गुरवे दद्यात् । ततः आत्मसमारोपः कर्तव्यः । इति विरजाहोमः ।

---

## २६–समारोपः ।

आचम्य प्राणानायम्य । "ॐ अयं ते योनिर्ऋत्वियो यतो जातो आरोचथाः तं जानन्नग्न आसीदाथा नो वर्धया गिरः ॥ ॐ याते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मानं अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि । यज्ञो भूत्वा यज्ञमासीदः स्वां योनिं जातवेदो भुव आजायमानः सक्षय एहि ॥" इत्यृचा यजुषा च त्रिरावर्तन आत्मन्यग्निं समारोपयेत् । गुर्वाज्ञानुसारेण अग्नेर्ज्वालां प्राश्नीयात् । हस्तौ पादौ प्रक्षाल्याचम्य । "ॐ एह्यग्ने सहेष्टापूर्ते शरीरमनुसंचरस्व । नाहं त्वामपहाय परा गामां त्वमपहाय परागाम् ॥" इत्यग्निं विसृजेत् ।

---

## २७–निष्क्रमणादिः ।

[ आशीर्वादः, बन्धुविसर्जनम्, एषणात्यागः जलाभिमन्त्रणम्,
अभयदानम्, प्रार्थनाच ]

कृष्णाजिनमादाय उत्तरनारायणेन गृहान्निष्क्रमेत् । ततः स्वेभ्यः पुत्रेभ्यः आशिषं दद्यात् ।

आशीर्वादः—सर्वे भवतु वेदाढ्याः सर्वे भवतु सोमपाः । सर्वे पुत्रमुखं दृष्ट्वा सर्वे भवंतु भिक्षुका ॥ पश्चाद्योग्यंपुत्रं प्रति कथयति । त्वं ब्रह्मत्वंयज्ञस्त्वं लोकस्त्वं सर्वं, इतिब्रूयात् । स पुत्रः पितरं प्रत्याह—अहं ब्रह्माहं यज्ञोहं लोकोहं सर्वमिति । यद्यपुत्रः, अहं ब्रह्माहं यज्ञो हं सर्वमिति स्वयमेव जपेत् । शिवं स्वस्त्यस्तु भूतेभ्यः । अथ पुत्रान् सुहृदो बन्धून्प्रत्याहन मे कश्चिन्नाहं कस्यचिदिति ।

बन्धुविसर्जनम्—शृण्वन्तु सर्वे श्रीगुरुप्रसादात्संसारस्य पारमहं गन्तुकामोऽस्मि, मया सर्वेषां ममता त्यक्ता पुत्रैषणा वित्तैषणा लोकैषणा च त्यक्ता युष्माभिर्ममोपरि ममता न कर्तव्या विघ्नो न विधेयः । ततो जलाशयं गत्वाञ्जलिना जलमादायाप्रतिरथेन—

जलाभिमन्त्रणम्—"ॐ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभण श्चर्षणीनाम् । संक्रन्दनोऽनिमिष एकवीरः शत ँ सेना अजयत्साकमिन्द्रः ॥ संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ स इषुहस्तैः सनिषङ्गिभिर्वशी स ँ स्रष्टा स युध इन्द्रोगणेन । स ँ सृष्टजित्सोमपाबाहुश र्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ बृहस्पते परि दीया रथेन रक्षोहा मित्रा ँ अपबाधमानः । प्रभञ्जन्त्सेनाः प्रमृणोऽयुधा जयन्नस्माकमेध्यविता रथानाम् गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ॥ इम ँ सजाता अनुवीरयध्वमिंद्र ँ सखायोनुस ँ रभध्व ॥ वलन्त विगाय: स्थविरः प्रवीरःसहस्वान्वाजी सहमानउग्रः । अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्ररथमातिष्ठ गोवित् ॥ अभि गोत्राणि सहसा गाहमानो दायोवीरः शतमन्युरिन्द्रः । दुश्च्यवनःपृतनाषाडयुध्यो स्माक ँ सेना अवतु प्रयुत्सु ॥ इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनां जयन्तीनामरुतो यंत्वग्रे ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां ँ शर्ध उग्रं । महामनसां भुवनच्यवानां घोषा देवानां जयतामुदस्थात् ॥ अस्माकमिन्द्रः समृतेषु-ध्वजेष्वस्माकं या इषवस्ता जयन्तु । अस्माकं वीरा उत्तरे भवन्त्वस्मानुदेवा अवता हवेषु ॥ उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मना ँ सि । उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतामेतु घोषः ॥ उप प्रेत जयता नरः स्थिरा वः सन्तुबाहवः इन्द्रो वः शर्मयच्छत्वनाधृष्या यथा सथ ॥ अवसृष्टा पराऽपत शरव्ये ब्रह्मसं ँ शिता । गच्छामित्रांद्रविषमैषां कंचनोच्छिषः ॥ मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजामृतेनाभिवस्ता । उरोर्वरीयो वरिवस्ते अस्तु जयन्तंत्वामनु मदन्तुदेवाः ॥ यत्र बाणाः संपतन्तिकुमारा विशिखाइव । इन्द्रो नस्तत्र वृत्रहा विश्वाहा शर्म यच्छतु" ॥ इत्यभिमन्त्र । ॐ सर्वाभ्यो देवताभ्यः स्वाहा, इति त्यजेत् । तिथ्यादिस्मरणपूर्वकं स्नानं विधाय, अपां पूर्णाञ्जलिं गृहीत्वा । "ॐ एषहवा अग्निः सूर्यः प्राणं गच्छ स्वाहा । ॐ स्वां योनिं गच्छ स्वाहा । "ॐ आपो वै गच्छ स्वाहा" । इति मन्त्रत्रयेणाञ्जलिं जले क्षिपेत् । पश्चात्सर्वं ब्रह्मेति चिन्तयेत्, नान्यत्, पुनरभयं दत्वा ब्रह्माञ्जलिं कृत्वा पठेत् ।

अभयदानं प्रार्थना च—यत्किंचिद्‌ बन्धनं कर्म कृत मज्ञानतो मया । प्रमादालस्य-

दोषोत्थं तत्सर्वं संत्यजाम्यहम् ॥ त्यक्तसर्वो विशुद्धात्मा गतस्नेहशुभाशुभः । कामभोगादिकं सर्वं त्यक्तं चैवमुदाहरेत् ॥ एतत्त्यजाम्यहं सर्वं कामभोगसुखादिकम् । रोषं तोषं विवादं च गंधमाल्यानुलेपनं ॥ भूषणं नर्तनं गेयं दानमादानमेव च । नमस्कार जपं होमं याश्च नित्यक्रिया मम । नित्यनैमित्तिकं काम्य वर्णधर्माश्रमाश्च ये ॥ गुणधर्माश्च ये केचिच्छुभाशुभफलानि च । करणंकार्यकर्तृत्वं कर्तारं करणैः सह ॥ सर्वमेव परित्यज्य बुद्ध्यावेष्टितमानसः । चतुर्विधस्यसन्नात्मा भूतग्रामस्य निस्पृहः ॥ कृतं चैवेप्सितं चैव वांछितं चानुमोदितं । संचिन्त्य सर्वभूतेभ्यो दद्यादभयदक्षिणां ॥ पद्भ्यां कराभ्यां विहरन्नाहं वाक्कायमानसैः । नकरिष्येप्राणिपीडां प्राणिनः सन्तु निर्भयाः ॥ देहे जले वसेद्भूमौ स्थावरा जंगमाश्च ये ।लोभवस्त्रादि धान्येषु शयनेष्वासनेषु ये ॥ ते स्वपन्तु विबुध्यन्तु सुखतोऽस्तु भयं विना । दत्वैवं सर्वभूतेभ्यः सर्वत्राभयदक्षिणां ॥ करुणामैत्रवृत्तिश्च प्रज्ञावृद्धिं च संस्थितः । ततोविचिंतयेद्धीमान्सर्वमात्मनि संस्थितं ॥ कोऽस्ति मे कश्च मे नास्ति शुद्धएकोहमच्युतः । संसारादित्यतस्तोतिविप्लुष्टो देहमानसे ॥ ब्रह्मज्ञानांबुशीतेन सिंचमां वाक्यवारिणा । नमेऽस्ति बांधवः कश्चिन्मुक्त्वात्मानं परावरं ॥ मयात्मैव परोबन्धु रूर्ध्वाधः पृष्ठतोग्रतः । इन्द्रियैर्विषयैः सर्वमध्याद्यन्तर्बहिस्थितः ॥ विश्वेश्वरो महात्मा वै सर्वज्ञः सर्वतोमुखः । त्यक्तभीरभयं दत्वा सर्वज्ञमजमीश्वरं । व्यक्ताव्यक्तं परं शुद्धं सत्यं निश्चित्य तत्त्वतः॥ एतान् प्रैषान् श्रावयन् शुद्धो दिशश्चैवावलोकयन् प्रार्थयेत्—आदित्यचन्द्रावनलोऽनिलश्च द्यौर्भूमिरापो हृदयं मनश्च । अहश्च रात्रिश्च उभे च संध्ये धर्मोहि जानाति नरस्य वृत्तं ॥ आदित्यचन्द्रादीन्सर्वान्देवान्कर्मसाक्षिणो निखिलान्गुर्वादीन् ब्राह्मणान्संन्याससाक्षित्वेन ध्यायेत् । ततोनाभिप्रमाणं जलं प्रविश्य प्राङ्मुखः सन्गायत्रीं प्रविशामि, इति संकल्प्य । "ॐ भूः सावित्रीं प्रविशामि, तत्सवितुर्वरेण्यं । ॐ भुवः सावित्रीं प्रविशामि, भर्गो देवस्य धीमहि । ॐ स्वः सावित्रीं प्रविशामि, धियो यो नः प्रचोदयात् । ॐ भूर्भुवः स्वः सावित्रीं प्रविशामि सत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ॐ परो रजसि सावदों", इतिजपित्वाचम्य प्रणवमयमात्मानं ध्यात्वा जले स्थितः ॐ तरत्समंदीति चतुर्ऋचं जपित्वाऽऽदित्यमुपतिष्ठेत् । पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थितोहं भिक्षाचर्यं चरामि, इत्युक्त्वा पाणिना अप्सु आपोहुत्वा प्रेषोच्चारं कुर्यात् ।

## २८–प्रैषोच्चारादिः ।

### [ दण्डकमण्डलुग्रहणम् ]

आचम्य प्राणानायम्य । ॐ भूः सन्यस्तं मया । ॐ भुवः सन्यस्तं मया । ॐ स्वः सन्यस्तं मया । ॐ भूर्भुवः स्वः सन्यस्तं मया । इति त्रिः मंद्रमध्यमोत्तमस्वरेणोक्त्वा । ॐ अभयं सर्वभूतेभ्यो मत्तः स्वाहा । इति प्राच्यां दिश्यपां पूर्णाञ्जलिं क्षिपेत् । इति प्रैषोच्चारः ।

स्वयं कौपीनं काषायवासः स्वीकृत्य परिधायाचम्य दण्डप्रार्थनां कुर्यात् । ॐ वार्त्रघ्नः शर्म मे भव यत्पापं तं निवारय । विष्णुहस्ते यथाचक्रं शूलं शिवकरे यथा । इन्द्र हस्ते यथावज्रं तथा दण्ड भवाद्य मे । इति दंडं प्रार्थ्य । ॐ इन्द्रस्य वज्रोसि सखा मां गोपाय । इत्यनेन मंत्रेण दण्डग्रहणं कुर्यात् । प्रणवेन कमण्डलुं गृहीत्वा ततो यावद्गुरुसमीपे गमनं तावद्विष्णुस्मरणपरो भवेत् । इति दण्डकमण्डलुग्रहणम् ।

---

## २९–गुरुप्रार्थनादिः ।

### [ अभिषेकः शान्तिपाठश्च ]

दण्डकमण्डलुवस्त्रयुक्तः समित्पाणिः गुरुसमीपं गत्वा नमस्कारं विधाय गरुडासनेनोपविश्य करसम्पुटं कृत्वा गुरुप्रार्थनां कुर्यात् । श्रीगुरोभगवन्नस्माद्घोराद्भवात्समुद्धर, असकृज्जन्मजरामरणाद्यपारसंसारादात्मज्ञानेन मां तारय । भूतानामभयं दत्वा युष्मच्छरणमागतः । त्राहि मां योगिनामीश ! नान्य स्त्रातास्ति मे प्रभो ! । निस्पृहः सर्वतः शांतः सर्वविद्याविशारदः सर्वसंशयसंछेत्तानलसो गुरुराडयं । त्रायस्व भो जगन्नाथ गुरो संसारवह्निना । दग्धं मां कालदष्टं च त्वामहं शरणागतः । अद्यप्रभृति भूतानि न हिंस्यामि कदाचन । महाव्रतं चरिष्यामि कर्मणा मनसा गिरा । अविद्याकृष्णसर्पेण दष्टं तद्विषपीडितम् । त्वद्वाक्यामृतपानेन संजीवय पुनर्मृतम् । इतिदक्षिणजानुं भूमौ निपात्य पादग्रहणं कृत्वा । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तंह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ।" इतिमंत्रेण गुरुं भगवद्बुद्ध्योपस्थाय तदनन्तरं संसाराग्निनिविष्ट देहमानसं, ब्रह्मज्ञानांबुशीतेन सिंच मां वाक्यवारिणा । नमेऽस्ति वान्धवः कश्चिन्मुक्तात्मानं परावरम् । ममात्मैव परो बन्धुरूर्ध्वाधः पृष्ठतोऽग्रतः । अधीहि

भगवो ब्रह्मेति ब्रूयात् । तस्मै साधनचतुष्टयसम्पन्नायाधिकारिणे गुरुर्ब्रह्मो पदिशेत् । इति गुरुप्रार्थना ।

गुरुरद्वैतसच्चिदानन्ददेवरूपात्मानमेवानुसंधाय जलपूर्णशंखं पुष्पादिभिरभ्यर्च्य द्वादशप्रणवैरभिमंत्र्य तेनोदकेन प्रणवेन शिष्यशिरोभिषिंचेत् । ततः शन्नोमित्र इत्यादि पूर्वोक्तां प्रथमशान्तिं त्रिवारं पठित्वा शिरसि हस्तं दत्वा पुरुषसूक्तं जपेत् । "ॐ शन्नो मित्रः शं वरुणः । शन्नो भवत्वर्यमा । शन्न इन्द्रो बृहस्पतिः । शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे नमस्ते वायो । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि तन्मामवतु । तद्वक्तारमवतु । अवतुमां । अवतुवक्तारं ॐ शान्तिः शान्तिः शान्तिः । पुरुषसूक्तं संन्यासोपकरणशोधने द्रष्टव्यम् । इतिशान्तिपाठः ।

"ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्ने नातिरोहति ॥ एतावानस्य महिमा ऽतो ज्यायांश्च पूरुषः । पादो ऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ त्रिपादूर्ध्वऽ उदैत्पुरुषः पादो ऽस्येहाभवत्पुनः । ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ तस्माद्विराडजायत ऽविराजोऽअधि पूरुषः । स जातो अत्यरिच्यत पश्चाद् भूमि मथो पुरः ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वन्त । वसन्तोऽअस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः तधमन देवाऽ अयजन्त साध्या ऋषयश्च ये ॥ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् । पशून्तांश्चक्रे वायव्यानारण्यान् ग्राम्यांश्च ये ॥ तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तमादजायत ॥ तस्मादश्वा अजायन्त ये के चो भयादतः । गावो हजज्ञिरे तस्मात्तस्माज्जाताऽ अजावयः ॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहूका उरू पादा उच्येते ॥ ब्राह्मणो ऽस्य मुखमासीद् बाहूराजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽ अजायत ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो ऽअजायत । मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ नाभ्या ऽआसीदन्तरिक्षँ शीर्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकांऽ अकल्पयन् ॥ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञन्तन्वानाऽ अबध्नन्पुरुषं पशून् ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ इषे त्वोर्जेत्वा वायव स्थ देवो वः सविता प्रापयतु श्रेष्ठतमाय कर्मणे ॥ अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥

## ३०—हृदयालम्भा नामकरणादयः ।

( हृदयालम्भनामकरणयोगपट्टाः )

ततो गुरुर्दक्षिणकक्षांतरेण हस्तं शिष्यहृदये निधाय । ॐ ममव्रते हृदयन्ते दधामि मम चित्तमनुचित्तं ते अस्तु । मम वाचमेकव्रतोजुषस्व बृहस्पतिष्ट्वा नियुनक्तुमह्यम्—इति दीक्षां दद्यात् । इति हृदयालम्भः ।

शक्तिशक्तिमतोरभेदः । सर्वशक्तिमता श्रीगुरुदेवेन शिष्याय स्वीयां शक्तिं समर्प्य निजानुरूपताप्राप्तये स्वकीयहृदयेन चैकात्मतां स्थापयितुं हृदयालम्भनक्रिया समनुष्ठीयते । यथाधिकारं स्वस्वरूपे स्थित्वा वा, शक्तिशक्तिमतोर्भेदराहित्यं विचार्य्य वा केवलं कूटस्थे मनः समाधाय वा स्वकीयहृदयतः शिष्यहृदये श्रीगुरुः शक्तिं सञ्चारयति, एतत्क्रियानुष्ठानकाले च नैजं हस्तं शिष्यहृदये स्थापयति । एतदेव हृदयालम्भनमुदीर्यते ।

नाम्ना सह रूपस्यातिघनिष्ठः सम्बन्धो वर्तते । यावच्च द्वैतप्रपञ्चसद्भावस्तावन्नामरूपयोः पारस्परिकसत्तासाकाङ्क्षताऽवश्यम्भाविनी । यद्यपि सन्यासिना उपाधिरहितेन भवितव्यम्, तथापि तस्य नामनिर्देशोऽत्यावश्यकः । संन्यासिनो नाम प्रत्येकस्यां दीक्षायां न परिवर्तते । कुटीचकदीक्षायां समनुष्ठितमेव नाम बहूदकादिष्वपि प्रचलति । "संन्यासाश्रममात्रेण नरो नारायणो भवेत् इति हेतोः ईश्वरतत्त्व-ब्रह्मतत्त्ववाचकं वा, तद् भावद्योतकं वा, सगुणोपास्यशिवविष्णुप्रभृतीनां नामसम्बन्धसंवलितं वा, पञ्चोपासनाया अध्यात्मभावबोधकं वा भगवदवताराणां ज्ञानोद्बोधकनामसम्बद्धं वा, श्रीगुरुदेवः शिष्ये यादृशस्याध्यात्मभावस्योद्बोधनं समुचितमवगच्छेत्, तत्सम्बन्धयुक्तं वा नामकरणं नितरां युक्तियुक्तं समुचितं च । श्रीगुरुदेवः कृपालुः कूटस्थे स्वात्मदर्शनमनुष्ठाय नामकरणसिद्धान्तं विनिश्चित्य च निरतिशयप्रियमधुरवचनैः स्वशिष्यनामकरणमुद्घोषयेत् । सम्प्रदायविशेषसम्बन्धवता श्रीगुरुदेवेनोपर्युक्तसिद्धान्तं लक्ष्यीकृत्य स्वसम्प्रदायानुरूपमेव शिष्यनाम कर्त्तव्यम् ।

परमात्मना सह जीवात्मन एकीकरणं योग इत्युच्यते । स्वस्वरूपोपलब्ध्या महापुरुषो योगारूढो भवति । स एव योगिराजश्चापि विज्ञायते । पट्टोऽयमन्तिमलक्ष्यभूतः । तादृशयोगयुक्तपद-प्राप्तये प्राधानसंकेत एव योगपट्टोऽभिधीयते । कृपालुगुरुदेवसमनुष्ठितं स्वीयं नाम, श्रीगुरुदेवस्य मङ्गलमयः परिचयः, स्वसम्प्रदाय परिज्ञानमित्यादीनि योगपट्टेऽन्तर्भवन्ति । संन्यासधर्माचारानुसारेण यद्यपि स्वकीयं पुराकालिकवयोजाति कुलादिपरिचयप्रदानं निषिद्धं तथापि तदीयवर्त्तमानव्रतसम्बन्धेन व्यवहारदशायां गुरुदेवाज्ञानुसारेण यावान् परिचय आवश्यकः स एव हि योगपट्टोऽवगन्तव्यः ।

# सूर्योदयः ।

एकादशे वर्षे } फाल्गुन-चैत्र-वैशाख-पूर्णिमाः सं० १९९२-९३ { नवम-दशमैकादश-संख्याः

## सम्पादकीयम् ।

—:***:—

### सम्राट् पञ्चमजार्जः ।

कालो हि प्रवलो मतः । तस्य पुरः सर्वा अपि शक्तयः पराभवन्ति । विश्वव्यापिनो वृटिशसाम्राज्यस्याधीश्वरो भारतीयराजराजेश्वरः महामाननीयः पञ्चमजार्जमहोदयः गतजनवरीमासस्य विंशतितमतारिकायां कालकवलितो जातः। गतवर्षे एव तस्य रजतजयन्तीमहोत्सवो महता समारोहेण व्यतीतः। परन्तु क्रूरेण कालेन ततोऽनुपदमेव स विनाशितः । तस्यासीमं धनवलं जनवलं, अनस्त-सूर्यञ्च साम्राज्यं व्यर्थमभूत्। तस्मिंश्चासंख्याता डाक्टर-हकीम-राजवैद्यपदधाच्याश्चिकित्सका अपि असमर्था एवासन् । केऽपि तं कालात्मकं जनसंहारकं देवं निरोद्धुं नाशक्नुवन्। तथ्यमेवोक्तं केनापि कविना—

राजा दरिद्रो विद्वान् वा मूर्खो वा बालको युवा<br>
सर्वे कालेन हन्यन्ते कालो हि दुरतिक्रमः।

अत एवं शक्तिसाधनसम्पत्तिसत्त्वे केनापि पुंसा समाजेनापि वा तादृशं कर्म न कर्तव्यं येन कालान्तरे स वाच्यतामियात्।

सर्वेऽपि तदीयराज्य-शासनशक्तिं प्रशंसन्ति। इहत्यामपि वंगविच्छेदप्रभृति-भारतीयजनसन्तप्तकरीं दुर्व्यवस्थां दूरीकृत्य पुनरपि देशं सुस्थाने समानयत्। बङ्गविच्छेदप्रथां विनाश्य वंगान् समतोषयत्। राजधानीं चेन्द्रप्रस्थे प्रत्यतिष्ठिपत्। एतस्यैव राज्यकाले भारतशासनस्य सुधारद्वयमभूत्। तत्र वृटिशकूट-राजनीतिज्ञानां कोऽप्युद्देशः स्यात्, परन्तु एतस्य भावः स्वच्छ एवासीत्। भारतीय-नेतृ-वृन्देनास्य सम्मेलनं शुभदमेव भवति स्म। किं बहुना सम्प्रति तदीय-वियोगेन भृशं दुःखिता वयं तत्पत्न्या महाराज्ञ्या मेरीमहोदयया सह समवेदनां प्रकाशयामः। तदीयात्मनश्च चिरशान्तिं कामयामहे। अवसाने च श्रीभारतधर्ममहामण्डलस्य प्रधानसञ्चालकानां शुभकामनां भाविशासन-सुव्यवस्थायै वर्तमानसम्राजश्चिरायुष्लाभाय च समर्प्य श्रीकाशीविश्वेश्वरात् सर्वथा तद् बन्धुवर्गस्य मंगलमभ्यर्थयामहे।

---

## संस्कृतज्ञानामौदासिन्यम्।

आगामिनि भारतीयशासनसुधारनियमे मतदातृषु संस्कृताध्यायिनां राजकीयसंस्कृतप्रथमपरीक्षोत्तीर्णानामप्यस्ति प्रवेशः। परन्तु तत्र बहवः संस्कृतज्ञाः छात्रा विद्वांसोऽपि मतदातृनामावल्यां स्वनामोट्टङ्कनं नैव कारितवन्तः। बहवस्तु जानन्त्येव नहि यत् कथं कया वा योग्यतया तत्र प्रवेशो भवितुमर्हति। बहवश्चोद्बोधिता अपि आलस्यप्रमादादिस्वाभाविकदोषराशिवशात्तल्लाभवञ्चिता एव जाताः।

अहो! संस्कृतज्ञानां प्रमादः? अनेनैव प्रमादेनेमे सर्वत्रैव सर्वजनीनकृत्ये पश्चात्तना भवन्ति। सर्वतश्च सर्वजनीनलाभात् वञ्चिता उपहसिता नगण्या गण्यन्ते। इदानीं मतदातृनामावल्यां नामाभावान्मतदानेऽसमर्था इमे स्वमतानुरूपं प्रतिनिधिं प्रेषयितुं कथं समर्थाः स्युः। सम्प्रति जागरूकतमेऽस्मिन् भारते संस्कृतज्ञानामियं मोहनिद्रा समुद्वेजयति विशेषज्ञान् इति हा कष्टम्! संस्कृत-विद्यालय-सञ्चालकान् अल्पान्तरेण वयं विज्ञापयामो यत्ते एवं ऋषिसन्तानानां व्यवहार-शून्यशिक्षया जीवनविनाशं न कुर्वन्तु। यदि ते संस्कृत-पाठशाला-संस्थापनं कुर्वन्ति, तर्हि ते पाठ्यपद्धति-परिस्कार-व्यवस्थामपि कुर्वन्तु। नो चेत् संस्कृत-पाठशाला-संस्थापनादि-कार्येण किं फलं भविष्यति।

यदि संस्कृत विद्यालयादिकं न स्यात्तर्हि हिन्दी इंग्लिशप्रभृति भाषाध्ययनेन तेष्वपि ब्राह्मणबालकेषु नागरिकतादिगुणसमुदायस्तु प्रविष्टः स्यात्। इदानीं ते धर्मज्ञाः सन्तोऽपि न व्यवहारज्ञा भवन्ति। व्यवहारज्ञानविरहिता व्यर्थं जीवनं यापयन्तो बहुविधं कष्टं चानुभवन्ति। वर्त्तमान-शासन-व्यवस्था-ज्ञानाभावेन राष्ट्रियनेतॄणां प्रगतिज्ञानाभावेन च महद् दुःखं मर्मज्ञानां स्वकर्मणा इमे समुत्पादयन्तीति-हा कष्टम्।

येषां पुरा शासनसूत्रमित्थं, हस्तेन सञ्चालितमेधते स्म।
तेषामृषीणामिह सन्ततिर्हि! न ज्ञायते किं करणीयमद्य॥

अस्तु, पुनरपि सत्यवसरे मतदातॄनामावल्यां स्व-स्व-नामोट्टङ्कनाय तदर्थं स्वस्वमण्डलस्य तदधिकारिणां पार्श्वे तेभ्य एवोपलब्धव्ये मुद्रिते पत्रे प्रार्थनापत्रं शीघ्रतया प्रहेतव्यम्। ये हि काशिकराजकीयप्रथमां परीक्षामुत्तीर्णाः, २१ एक विंशतिवर्षतोऽधिकवयसस्ते सर्वेऽप्यधिकारिणः।

—— :***: ——

## असवर्णविवाहप्रस्तावः।

सम्प्रति सर्वतोऽपि सनातनधर्ममर्य्यादाविघाते एव नेतॄणां समुद्योगो दृश्यते। विगतवर्षेषु सनातनधर्मविघातकानां मन्दिरप्रवेशादि नियमानां विरोधं विधाय स्वात्मरक्षां कर्तुं समर्थेयमार्य्यजाति दैवासुरसंग्रामे साफल्यमाजगाम।

अस्मिन् हायनेऽपि बुद्धगयामन्दिराऽधिकारत्यागस्पर्शास्पर्शप्रथापरित्यागासवर्णविवाहादिनियमानां निर्माणाय व्यवस्थापकसभासदस्येषु कतिपये महोदयाः समुद्यताः सन्ति। तेषु काशीस्थ-डाक्टरभगवान्दासमहोदयो असवर्णविवाहप्रस्तावं समुपस्थापितवानस्ति, सर्वे च ते प्रबलेन प्रयत्नेन तेषां प्रस्तावानां साफल्यं कामयन्ते सर्वसम्मत्या समर्थितं मन्यन्ते।

तत्रासवर्णविवाहनियमनिर्माणविषये भारतशासकसकाशात् भारतीयानां प्रजानां सम्मतिसंग्रहाय यो हि समुद्योगः प्रचलितो विद्यते, तत्र श्रीभारतधर्ममहामण्डलाभिधेनाखिलभारतवर्षीय विराड्धर्ममहासभारूपेण सनातनधर्म सभाप्रतिनिधि भूतेन संस्थानेन यादृक् निजाभिप्रायो विलिख्य तत्र प्रहितस्तस्य प्रतिलिपिः सर्वेषां प्रान्तीय शासकानां नियमविभागे नियुक्तकर्मचारिणामन्येषाञ्च तत्समर्थकानां, भारतीय-स्वतन्त्रनरपतीनां तथा महामण्डलस्य सदस्यानां संरक्षकाणां प्रतिनिधिमहोदयानाञ्च पार्श्वे प्रहिता विद्यते। सर्वे एव महोदयास्तदनुसारेण-

स्मिन् धर्मरक्षणकार्य्ये साहाय्यमाधाय एवम्भूतधर्मविरुद्धनियमनिर्माणनिरोधेन भारतीयं हितं भारतीय संस्कृतिसंरक्षणञ्च करिष्यन्तीति विश्वासोऽस्माकम् ।

संक्षेपत स्तदीयो विषय ईदृगेव वर्तते यद् साम्प्रतं पाश्चात्यशिक्षाप्रभावेण येषां भारतीयानां मस्तिष्कं विकृतं विद्यते, ये हि पुनर्जन्म-परलोकसत्ता-सगुणोपासना-पार लौकिकश्राद्धतर्पणादि कृत्येषु न विश्वसन्ति । ये हि कर्मरहस्ये रजोवीर्य्यशुद्धिमूलकजन्मना जातिसद्भावे शुद्धाशुद्धविवेके स्पर्शास्पर्शविचारेऽपि नैवास्थां विभ्रति–तैरिदन्तु स्वीकर्तव्यमेव यत् सनातनधर्मानुयायिनी आर्य्यजातिरियं सृष्टिकालादेव जागरूकसभ्यतायाः सर्वाभ्यर्हितपदमासीना । जगद्गुरुपदप्रतिपाद्या स्वातीतं गौरवमत्युज्ज्वलं दधाति । अस्या आध्यात्मिकाधिदैविकाधिभौतिकोन्नतिपरम्परायाश्च प्राचीनं नवीनञ्चोभयमेवेतिवृत्तमितिहासापरनामकं साक्षि विद्यते ।

अनेनैव सह एतदपि निवेदनीयं विद्यते—यदिदानीं राजनीतिकाधिकारप्राप्तिमग्नाः कांग्रेसनेतारो देशोद्धारच्छद्मना स्वराज्यलाभ लोभेन तत्तत्सनातनधर्मविध्वंसकं कृत्यं कुर्वन्ति, येन सनातनधर्म्मिणामसह्यं दुःखं जायते । राष्ट्रियमहासभाया ( कांग्रेस ) अधःपतनं च तन्नेतृणां धार्मिककृत्ये हस्तक्षेपेण संजातम् इतिनाविदितं तन्मर्मज्ञानाम् । परन्तु कालप्रभावात् स्वार्थपरतया आलस्यसदसद्विवेकराहित्यादिदोषनिमग्ना आर्य्यजातिरेवं मोहनिद्राभिभूता स्वात्मानं विस्मृत्य स्वास्तित्वविलोपमपि न पश्यति इत्याश्चर्य्यम् ।

अस्तु, वयन्तु पुनः पुनर्बोधयामो यद् अये सनातन-धर्म्मावलम्बिनो भ्रातरः श्रीमन्तो ज्ञानगरिम्णा जगद्गुरव ऐश्वर्य्यमहिम्ना च सार्वभौमपदमासीनाः सर्वाभ्यर्हिता आसन् । श्रीमतां धर्मस्य मूलभित्ती रजोवीर्य्यशुद्धिमूलिका वर्णाश्रमव्यवस्थैव विद्यते । तस्या विनाशः सम्प्रति सर्वात्मना हिन्दुनेतृभिरेव कर्तुं व्यवसितो विद्यते । अतश्च यथा स्यात्तथा श्रीमन्तोऽपि सर्वात्मना स्वोद्योगं विधायासवर्णविवाहप्रभृतिप्रस्तावविरोधं कुर्वन्तु । येनेदृशानां धर्मविघातकनियमानां निर्मापणाय कस्यापि कदापि समीहैव न स्यात् । यदि भवन्तः सर्वे परस्परं संघीभूय महता आन्दोलनेन प्रतिग्रामं प्रति नगरं सभां विधायास्य असवर्णविवाहप्रस्तावस्य विरोधं कुर्वन्तः स्वसामर्थ्यं प्रकटीकरिष्यन्ति चेत् कस्यास्ति शक्तिर्येन सम्प्रति नियममिमं निर्मापयितुं समर्थेन भूयेत । श्रीमतामालस्यादिदोषवशादेव शनैः शनैः सनातनधर्ममर्यादा विनाशः संजायते ।

—:*:—

# स्त्रीणां कीदृशी शिक्षापेक्ष्यते ।

यदि कुलोन्नयने सरसं मनो यदि विलासकलासु कुतूहलम् ।
यदि निजत्वमभीप्सितमेकदा कुरु सुतां श्रुतशीलवतीं तदा ॥

इह भारते हिन्दुसंस्कृत्यनुसारेण पूर्वकालादारभ्यैव स्त्रीणां पदमतीवोन्नत विद्यते । वेदे तैत्तिरीयोपनिषदि आचार्य्यकृतशिष्योपदेशावसरे प्रथमं 'मातृ देवोभव' इत्यभिहितम् ततः 'पितृदेवोभव' आचार्य्यदेवो भव' इत्यादि । स्मृतावपि

"उपाध्यायान्दशाचार्य्य आचार्य्याणां शतं पिता ।
सहस्रन्तु पितॄन् माता गौरवेणातिरिच्यते ।"

इति पितुः सकाशाद् मातुर्गौरवमधिकं स्मृतिकृद्भिरपि निरूपितम् । मर्य्यादा-पुरुषोत्तमेन भगवता रामचन्द्रेणापि जननी गौरवं रक्षतैव वनगमनवेलायां पित्रादिष्टेनापि कौशल्यां स्वमातरं प्रष्टुं कैकयी समभ्यर्थिताऽभूत् । तथा हि

'यावन्मातरमापृच्छे सीताञ्चानुनयाम्यहम् ।
ततोऽद्यैव गमिष्यामि दण्डकारण्यमुत्तमम् । [ वा० रा० ]

इत्यादि संस्कृतेतिहासपर्य्यालोचनया स्पष्टमेव प्रतीयते यत् प्राक्तने भारते स्त्रीणां पदमतिगौरवपूर्णमभ्यर्हितञ्चासीत् । तेषां ज्ञानमपि पुरुषापेक्षया ऽधिकमेव गण्यतेस्म ।

तथाहि—"उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः ।
स्वभावेनैव तच्छास्त्रं स्त्रीबुद्धौ सुप्रतिष्ठितम् " इति ।

नैषधेऽपि—श्रीहर्षेण महाकविना प्रसंगतः—

"विजृम्भितं यस्य किल ध्वनेरिदम्
विदग्धनारी वचनं तदाकरः ॥"

इति नारीप्रज्ञा प्रशंसिताऽस्ति । किं बहुना समाजविज्ञानकलाकोविदेन कालिदासेनापि अजविलापप्रसंगेन—

"गृहिणी सचिवः सखीसमा, प्रियशिष्या ललिते कलाविधौ
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ।"

इत्यादिपद्यैस्तदानीन्तनं हिन्दुसंस्कृतिसम्मतं स्त्रीणां स्थानं वर्णितं विद्यते । इत्यनेन च संक्षिप्तेन दिग्दर्शनेन स्त्रीणां योग्यता-गौरव-वैदग्ध्य-व्यवहारादिपाटवं प्रस्फुटं प्रतीयते हिन्दुसंस्कृतिसम्भवम् ।

सम्प्रति या हि तासामवस्था विद्यते तस्या वर्णनन्तु लेखेन सम्भवत्येव नहि, सा तु सर्वेषामपि विज्ञानां समाचारपाठकानां देशपर्यटनप्रियाणां भारतीयानां प्रत्यक्षगोचरीभूतैवास्ति ।

इत्थं च सत्यपि महति स्त्रीशिक्षाव्यतिकरे सम्प्रति द्विविधा हि दृश्यते प्रवृत्तिः स्त्रीणां दशोन्नयने। एको हि समुदायस्तासां शिक्षां वैदेशिकप्रकारेण पुरुषैः सहैव वैदेशिकपद्धत्या उभयोरभेदेनैव पाठ्यक्रमेणापि दातुं यतते । अन्यश्चैको विद्वत्समुदायः पृथक् पद्धत्या स्त्रीणां मानसिकभावाभिप्रायेण तदीयांगप्रत्यंगमनोबुद्धिबलवर्द्धनमभिलषन् पुरुषापेक्षया तासां भिन्नैव पद्धतिः शिक्षायामपेक्षितेति सर्वथा विपरीतमेव स्त्रीणां शिक्षापद्धतिमपेक्षते ।

इत्यत्र विषयेऽहमपि चरमामेव कोटिमाश्रये । यतोहि मम सम्मतौ शिक्षा हि नाम मानवशक्ते र्विकाशस्यैकं प्रबलं साधनं गण्यते । शिक्षया हि मनुष्येषु अन्तर्निहिता शक्तिरुद्बुद्धा जायते । सा चान्तर्निहिता शक्तिः पुरुषाणामन्या स्त्रीणाञ्चान्या विद्यते । पुरुषेषु पितृशक्तिः, स्त्रीसमाजे च मातृशक्तिः । स्त्रीणाञ्च संयमप्रधानोधर्मः शास्त्रेषु गीयते । तथाहि "तपः प्रधानो नार्य्याः" इति कर्ममीमांसासूत्रम् ।

मनुरपि—

"द्रव्यस्य संग्रहे चैनां व्यये चैव नियोजयेत्
शौचे धर्मेऽन्नपक्त्याञ्च पारिणाह्यस्य वेक्षणे"
इति पुरुषेभ्योऽन्यदेव विधानं स्त्रीणां कृते समुपदिशति ।

केनचन कविना स्पष्टत एव स्त्रीणां कृते शिक्षायाः स्वरूपं निर्दिष्टं विद्यते तथा हि—

धर्मसन्तानशिल्पायव्ययस्वास्थ्यविधौ तथा
सङ्गीतकान्नपाकादौ स्त्रीणां शिक्षा विधीयते ।

इत्यादि भारतीय संस्कृति संस्तुतानां पुरुषशिक्षायाः पार्थक्येनैव स्त्रीशिक्षणे ऐकमत्यं दृश्यते अन्यप्रकारेण तु सनातनधर्ममर्य्यादा–विनाशो जायते । येन कालेनास्या जातेरेव समुच्छेदः स्याद्यश्च केषामपिवानाभिमतः स्यादिति ।

इत्थञ्च स्त्रीणां शिक्षा हि स्वभावत एव पुरुषेभ्योऽन्यविधापेद्यते कथं तयोरेकत्र विद्यालये एकया वा पाठ्यपद्धत्या शिक्षणं समुचितं स्यादिति विमृशन्तु विमर्शिनो विद्वांसः ।

अतश्च सम्प्रति इंग्लिशविद्यालये ( स्कूल ) कलाशाला-( कालेज ) प्रभृतिषु च बाला बालिकाश्च सममेव शिक्ष्यन्ते तद्धि भारतीयार्य्यमर्य्यादाविरुद्धं विद्यते। भारतीयार्य्यमर्य्यादायां स्त्रीणां पदगौरवापेक्षया पुरुषवद् वृत्युपार्जनादिकृत्यं न स्त्रीणां कृते विहितं विद्यते। ता हि सर्वथा पुंभिरेव भर्तव्याः समुपदिष्टाः सन्ति।

"भर्तव्या भूषयितव्याश्च पुरुषैस्ता अहर्निशम्
श्रियःस्त्रियश्च गेहेषु न विशेषोऽस्ति कश्चन।"

अतोहि तासां स्वतएव स्वजीविकोपार्जनार्थं शिक्षादानं यथाऽनुचितं तथैव पुम्भिः सार्द्धमपि शिक्षणं भारतीयमर्य्यादविरुद्धं स्त्रीत्वविनाशकमेव। मनुनाहि अस्मिन् विषयेऽपि साधूक्तम् विद्यते—

"घृतकुम्भसमा नारी तप्तांगारसमः पुमान्
तस्माद्घृतञ्च वह्निञ्च नैकत्र स्थापयेद्बुधः।"

अतश्च सम्प्रति भारतेऽस्मिन् सर्वत्रैव प्रौढा अपि बालका बालिकाश्च एकेनैव प्रकारेण एकत्रैव च विद्यालये एकस्मिन्नेव चासने एकस्यामेव हि पंक्तौ समुपवेश्य धर्मशिक्षाशून्यं पाश्चात्यसभ्यतासम्भूतं तत्संस्कृति-समुचितं यथास्यात्तथैव इंग्लिशकलाशालादौ अध्याप्यन्ते "तत्सर्वथा हि आर्य्यमर्य्यादा वैपरीत्यं नारीमहत्व-विलोपकञ्च विद्यते। एतेन देशोन्नतिस्तु दूरेऽस्तु देशराष्ट्रावनतिरेव शनैः शनैः समेधते। बहुशः सम्प्रति आर्य्यनार्य्यो भारतीयमर्य्यादावैपरीत्यमावहन्त्यो वैदेशिकभावाभि-दग्धा वेशभूषाचारादिकमन्यादृशमेव संबिभ्रते।

भारतीयार्य्यमर्य्यादासंरक्षकेण चाणक्येनापि एकत्रोपदिष्टम् विद्यते। यद् व्यवस्थितार्यमर्य्याद एव देशः समुज्जृम्भतेऽन्यथा तु तदधःपातो विनिश्चित एव। तथाहि—

"व्यवस्थितार्य्यमर्य्यादः कृतवर्णाश्रमस्थितिः
त्रय्याहि रक्षितो देशः प्रसीदति न सीदति।"

अतश्च संक्षेपेणैव विदुषां पुरस्तात् प्रस्तावमिमं वयं समुपस्थापयामो यद् स्त्रीणां शिक्षायै दत्तावधाना भवन्तु। सम्प्रति वैदेशिकशिक्षायाः पुरुषेषु एव प्राधान्येन प्रचारो विद्यते। स्त्रीषु तूपक्रम एव दृश्यते। अतो वै सति समये तत्प्र-चारस्य निषेधो सर्वथा निरोध एव वा विधेयः, नो चेद् गृहदाहे सति रोदनेन

किम्, निर्गते नीरे सेतुचिकीर्षया च किं फलं स्यात्? इत्थञ्चावसरे सत्येव स्त्रीणां धार्मिकशिक्षायाः कृते विज्ञैर्भारतीयैः सुदृढः प्रवन्धः करणीय एव। साम्प्रतं सर्वथा विपरीतां विरुद्धाञ्चार्य्यमर्य्यादायाः स्त्रीशिक्षापद्धतिं प्रवर्द्धमानां विलोक्यैव श्रीभारतधर्ममहामण्डलीयाखिलभारतीय-धार्मिकाध्यात्मिक-संस्कृतविश्व-विद्यालयपरीक्षा-सञ्चालकैः धार्मिकपरीक्षासमितिसदस्यैः स्वीय नवीननियमावल्यां पाठ्यपद्धतौ च वालिकानां प्रौढानाञ्चार्य्यमहिलानां धार्मिकशिक्षासमेधनधिया धर्मप्रवेशिकाधर्मचन्द्रिकाप्रभृतिपरीक्षाणां सन्निवेशो विहितो विद्यते। स्त्रीणां कृते धर्मग्रन्थानामपि 'सतीसदाचार' प्रभृतीनां निर्माणं कारयित्वा तत्र परीक्षासुपाठ्यत्वेन निर्द्धारणं कृतं विद्यते इति जानन्त्येव सुधियः।

तदद्यत्वे सर्वेषां भारतीयानामिदं सर्वप्रथमं कर्तव्यं विद्यते, यदार्य्यमहिलासु धर्मशिक्षाप्रचारेण भारतीयसंस्कृतिसंरक्षणं ते कुर्वन्तु इति।

अवसाने च स्त्रीणां शिक्षाकृते राजकीयशिक्षालयाध्यक्षा अपि निवेद्यन्ते विशेषतः काशिक-राजकीय-संस्कृत-विद्यालयपरीक्षाप्रधानाध्यक्षमहोदयाः, यत्ते स्वीय परीक्षापाठ्य-पद्धतौ स्त्रीणां कृते पृथक् परीक्षापाठ्यपद्धतिप्रवन्धं विदध्युः। तत्र धार्मिक पुस्तकानां आर्य्यमहिलोपयोगिपुस्तकानाञ्च सन्निवेशमवश्यं कुर्युः। पुरुषापेक्षया स्त्रीणां शिक्षापद्धतिरन्यादृशैवापेद्यते। इत्यत्र तु केषामपि भारतीयार्य्यसंस्कृतिपरिचयजुषां विदुषां वैमत्यमेव नस्तीति।

---:o:---

## पी. एच. डी. परीक्षा।

निम्नलिखितौ महाशयौ पी० एच्० डी० परीक्षायामुत्तीर्णौ (१) प्रोफेसर नारायण बहादुर, एम्० ए० भोझा, काठमाण्डु (नेपाल) (२) एस् सुन्दर राजा ऐङ्गर बी० ए० बी० एल्० लीडर चेङ्गल पेट, जार्ज टाउन (मद्रास)

सेक्रेटरी—

संस्कृत विश्वविद्यालय, परीक्षा महामण्डल भवन,

बनारस कैण्ट।

# श्रीविश्वनाथाष्टकम्

( ले०—शास्त्री प्राणजीवन बी० जोशी—'काव्यतीर्थः' काशी )

सृष्ट्वा चराचरमिदं जगदात्मशक्त्या
सत्वं रजस्तम इति त्रिगुणाश्रयेण
एकोऽप्यनेक इव यो भवति त्रिनेत्रः
श्रीशाब्जयोनिभवरूपविवर्तवृत्या ॥ १ ॥

भूभृन्नदीनदसमुद्रजडाजडेषु
सर्वात्मना परिगतं सगुणागुणं त्वाम्
दूरं गवेषयितुमज्ञतरा भ्रमन्ति
मुग्धेव कुञ्जिगसुतं त्वननुस्मरन्ती ॥ २ ॥

भूतप्रपंचजनकोऽथ न जन्म यस्य
योऽनन्तशक्तिपुरुषः प्रकृतिश्च साक्षात्
सन्निर्गुणोऽपि सगुणः करणात्क्रियात-
स्तं नैकरूपविभवं "भज विश्वनाथम्" ॥३॥

अध्यात्मदृष्टिपरिकल्पितसत्वयोगा—
दन्तर्नियम्य यमिनः प्रकृतेः पृथग्यम्
वाचामगोचरमतीन्द्रियमद्वयाख्यम्
ज्योतिर्विदुस्तमनिशं "भज विश्वनाथम् ॥४॥

यो भक्तिदुःखदलनप्रवणो दयालु-
र्वाराणसीं भजति मुक्तिपदं महेशः
कैलाशवासनियतं व्यसनं विहाय
हंहो मनस्तमनिशं "भज विश्वनाथम्" ॥५॥

संश्रोतृकं, न भवति श्रुतिगोचरं यत्
संदर्शकं च नहि दृष्टिपथं प्रयाति
बोद्धृ स्वयं, न मतिबोध्यमहो यदीयम्
रूपं किमप्यहरहो "भज विश्वनाथम्" ॥६॥

अर्थं ददाति भजमानजनाय भूम्ना
कौपीनमात्रपरिवेष्टितदेहभागः
यस्य प्रशासनवशं भुवनत्रयं च
रे रे मनस्तमनिशं "भज विश्वनाथम्" ॥७।

यस्याज्ञया द्विजपती रविरित्युभौ च
स्वस्वोदयास्तकरणाचरणानुषक्तौ
संवत्सरतु जलधिप्रभृतिर्न सीम्नः
पारे, "परं तमनिशं भज विश्वनाथम्" ॥८॥

---

## श्रीउपदेशकमहाविद्यालयः ।

एतद् विद्यालयसंस्थापनोद्देश्यं मुख्यत इह गुर्जरप्रान्ते विशेषतः काठियावाडप्रान्तेऽमदावादनगरे च काशीस्थाखिलभारतवर्षीय-धार्मिकाध्यात्मिक संस्कृतविश्वविद्यालयीयपरीक्षायाः प्रचारार्थं तदीयपरीक्षानियमावलीस्थ पाठ्यग्रन्थानामन्येषाञ्च संस्कृतग्रन्थानां धार्मिकग्रन्थानाञ्चाध्यापनम् । अस्य विद्यालयस्य मुख्यतस्त एवोद्देशाः सन्ति, ये च तस्य विश्वविद्यालयस्य विद्यन्ते । तथा हि—

सनातनधर्मानुसारं धार्मिकशिक्षाविस्तारः संस्कृतविद्याप्रचारः । आयुर्वेदादिशास्त्रप्रचारः । पुरुषेषु आर्य्यमहिलासु च धर्मज्ञानोन्नयनम् । प्राचीनाध्यात्मशास्त्राभ्युदयः । इंग्लिशस्कूलकालेजप्रभृतिषु विद्यालयेषु धर्माभिवृद्धिकरणम् । श्रौतस्मार्तकर्मकाण्डोपासनाकाण्डानामाधिक्येन प्रचारः । जगतिपूज्यपादानां महर्षीणां ज्ञानज्योतिर्विस्तार इचेत्यादयः ।

अत्र विद्यालयेऽभ्यासं विधाय विश्वविद्यालयीय-परीक्षादायिनां परीक्षार्थिनां परीक्षार्थिनीनाञ्च कृते योग्यतानुसारं पुरस्कारं स्वर्णपदकं रूप्यकाणि पुस्तकानि च प्रदातुं श्रीभारतधर्ममहामण्डलत उद्घोषितं विद्यते ।

इह विद्यालये इंग्लिशपाठशालासु पठतां छात्राणां संस्कृतपुस्तकाध्ययनेन सहैव धार्मिक पुस्तकानाम् ज्ञानं प्रापयितुं तथार्य्यकुमारीणामपि स्वपाठ्यपुस्तकानामभ्यासोत्तरं सतीसदाचार, गीतार्थचन्द्रिका नीतिचन्द्रिका सतीचरित्रचन्द्रिका नित्यकर्म चन्द्रिकाचारचन्द्रिका प्रभृतिपुस्तकानामध्ययनं कारयितुं प्रबन्धोऽस्ति ।

इह विद्यालयेऽध्ययनकर्तॄणामुपनीतानां ब्राह्मणबालकानामार्य्यनारीणां कुमारीणां वा सकाशात् किमपि शुल्कं न गृह्यते । किन्तु इंग्लिश हाईस्कूलकालेजप्रभृतिसंस्थासु पठतां विद्यार्थिनां कृते किमपि शुल्कं नाममात्रतः संस्थापितं विद्यते । यस्य चोपयोगो विद्यालयकार्य्ये एव भविष्यति । येन च विद्यालयः स्वावलम्बी भवेदिति ।

अस्मिन् विद्यालयेऽध्ययनं कुर्वतां विद्यार्थिनां विद्यार्थिनीनां कृते किमपि पुरस्कारं दातुमिच्छूनां दातॄणां तथा विद्यालयाभिवृद्ध्यै द्रव्यसाहाय्यं पुस्तकादि साहाय्यं सधन्यवादं स्वीकृतं स्यादिति ।

सर्वविधोऽपि पत्रव्यवहारः १२ होरातः ६ षड्वादनं यावद्दिने निम्न-संकेतेन करणीयः, स्वयं वा संङ्गमनीयम् ।

निवेदकौ—
शास्त्री अनुपराम सदाशिवः,
पं० बालाशङ्कर मगनलालश्च ।

---

# वाणीप्रणयपञ्चकम् ।

—:***:—

( ले०—श्रीहरिकान्तमिश्रः, शारदाभवनविद्यालयः, नवानी )

यस्या वाग्देवताया भवभयहरमासादयन्तः प्रसादं
सेवन्तेऽन्तेवसन्तः किल सकलकलाकौशले गीष्पतित्वम् ।
यस्याः पादाब्ज-पूजाकरणकुशलतामाश्रयन्तः श्रयन्ते
वृन्दावृन्दारकाणां सुख मिह महती भारती राजतां सा ॥

यत्पादपङ्कज पराग पवित्रपीठ श्रीराजहंस परिचिन्तनतोऽपि जन्तुः ।
पारं प्रयाति जगतो महतोऽर्णवस्य तां भारतीं निखिलदेवनुतां नमामि ॥

संसारदुस्तरपयोनिधिपारहेतुं, मातस्त्वदंघ्रिकमले विमलेऽनुरागम् ।
यो नो करोति मनुजो दनुजोपमेयः स क्लेशभाग्व्रजति किं नरकं न भीमम् ॥

मातस्त्वमेव जननी जनकस्त्वमेव, नान्यः सखा न जननी जनकोऽपरोमे ।
इत्थं विचिन्तयति दीनजनेऽनुरागं, वागेव सम्प्रति तनोतु मयि प्रसन्ना ॥

लौल्येन यद्यपि शिशोर्बहवोऽपराधा जायन्त एव जननीं प्रति मातराद्ये ।
तान् संगणय्य जननी जनितापराधे धत्ते न किं निरुपमामनुरागशांतिम् ॥

# देवमन्दिर–स्थापना ।

—:***:—

( ले०—पं० श्रीव्रजबिहारी झा व्याकरणभूषण व्याकरणतीर्थः काशी )

आसीत् खण्डवलाकुलाब्जतरणिः शान्तो वदान्यो महान्
श्रीलक्ष्मीश्वरसिंहशर्म्मनृपतिर्भूपालचूड़ामणिः ।
तस्य श्रीमिथिलेश्वरस्य महिला लक्ष्मीवती श्रीमती
यास्ति श्रीमदुमाशिवार्चनपरा काश्यां बहोरब्दतः ॥१॥

शाकाब्दे ( १८५७ ) मुनिवाणवारणधरातुल्ये, मधावर्जुने
श्रीमन्नीलसरस्वतीं हरितिथौ चन्द्रे शुभां संन्यधात्
तस्मात्तुर्यदिने च सावरमहाराज्ञी च संख्यावती
श्रीरामं जनकात्मजाविलसितं-काले शुभेऽतिष्ठिपत् ( युग्मम् )

श्रीलक्ष्मीश्वरनाथाख्यं लिंगं वेरञ्च शूलिनः
आषाढ़ेऽच्छे तृतीयायाम्बुधेऽपि प्रत्यतिष्ठिपत्— ॥३॥

सीतारामौ लक्ष्मणञ्चाञ्जनेयम् शौचे शुक्ले पञ्चमीशुक्रवारे
शालग्रामान्नर्म्मदेशांश्च देवान् चैत्र्याञ्जीवे सत्क्रियाभिर्व्यधत्त ॥४॥

प्रति प्रतिष्ठम् भूदेवान् शतशः पण्डितानपि
भोजनाच्छदनद्रव्यै भृशं सा समतोषयत् ॥५॥

ततः श्रावणशुक्लस्य पञ्चदश्याम्बुधेऽहनि
पञ्चाशदुत्तरशतं काशीस्थानार्यपण्डितान् ॥६॥

प्रत्येकं पञ्चदशभीरूप्यैश्चा-र्चादिभिस्तथा
लक्ष्मीवती महाराज्ञी सदकार्षीत्तपस्विनी ॥७॥

( इयं सभा काशीस्थानां मान्यविदुषां सम्मानार्थं महाराज्ञ्या वदान्यतया विशिष्टदक्षिणाभिर्महता समारोहेण सम्पन्ना । समयातिपातेऽपि महाराज्ञ्या धार्मिकभावसमुपोद्बलनार्थं तथा तदीय दानाध्यक्षमहोदयस्य विशिष्टविदुषः सम्मानार्थमयं लेखः प्रकाशितः । सं० )

## शोकाश्रुविन्दवः ।

——:***:——

प्रणेता-साहित्यधुरीणः पं० श्री महावीरप्रसाद जोशी काव्यतीर्थः ।
[ डुण्डलोदाभिजनः ]

आरामो द्योतमान-श्रुति-कुसुम-तते दुर्गुणानां विरामो,
वामो वामाकुलेभ्यः, समुदय-दिवसस्याद्ययामोऽभिरामः ।
विन्दुस्यन्दोऽमृतस्य प्रतिवचनविधौ, धर्मवृत्तैककन्दः,
चन्द्रो वन्दारु-वृन्दे सुरनगरमगात् श्रीदयानन्द-योगी ॥

भुवने विततं महत्तमो ×, व्यहनद् यो विबुधो महत्तमः ।
सहि धर्म-सरोज-भास्करः+स्फुटमस्तंगत एव भास्करः ॥
सुखनि ‡ विमलरिविषोऽफलं, सुख-निर्वाणमितः प्रदीपकः ।

---

× महत्—तमः = तिमिरम् । × धर्म-सरोज-विकाशक इतिभावः ।

‡ खनि शाकरः स्त्रियाम् इत्यमरः ।

रजनिः प्रियधर्म-देशयो रजनिश्चान्धतमो विलासिनी ॥
सकलं गुण-गौरवं गते, सकलङ्केन हते तु वेधसा।
मधुना रहितां च कोकिला मधुना हाऽनुकरोति मातृभूः ॥
सहसाऽ*पि न सह्यते सहा, सहसाधिष्ठित-शोक-वाड़वः।
कमलं किमु मर्षयेद्दलं, कमलाङ्कस्य*कलां कलंकिनीम् ॥
निज-धर्म-भृतौ बृहत्तरः, कतमो दर्शयताद् बृहत्तरः× ।
मनुजं गत-तेजसं प्रति, सुमतिं कः प्रथयेच्च सम्प्रति ॥
अखिले भुवने प्रभासितं, सुयशो यस्य शुभ-प्रभा-सितम्।
दधदब्ज-विनाश-विभ्रमं* कुरुते कस्य न चन्द्र-विभ्रमम् ॥

# वेदपुराणयोरेकवाक्यता।

—:***:—

निबन्धा—पं० दीनानाथ शर्मा शास्त्री सारस्वतः मुलतान संस्कृत कालेजाध्यापकः

( क्रमागता )

'द्यौर्वै सर्व्वेषां देवानामायतनम्' शतप० १४।३।२।८। न च मनुष्याणां द्यौरायतनम्। 'येन देवासो अमृतत्वमानशुः' ऋ० १०।५३।१० न च मनुष्या अमृतत्वं प्राप्ताः। 'सर्व्वे दिवि देवा दिविश्रितः' अ० ११।७.२७ न च मनुष्या दिविश्रितः। 'तेभ्यो वै देवा अपैवाऽबीभत्सन्त मनुष्यगन्धात्' ऐतरे० ३।३।६ अत्र देवानां मनुष्यगन्धाज्जुगुप्सा प्रदर्शिता। 'पितृ-देव-मनुष्याणां वेदश्चक्षुः सनातनम्' मनुः १२।९४ इति त्रयाणां पार्थक्येन ग्रहणाद् भेदो विशदः। 'यत्रा नरो देवयन्तः' अ० २०।१०७।१५ नरः—मनुष्या देवान् पूजयन्त इति मिथो भेदः। 'तद् यदेतस्मिन्नाके स्वर्गे लोके देवा असीदंस्तस्माद् देवा नाकसदः' तथैवैतद्यजमानो यदेता उपदधाति' एतस्मिन्नेवैतन्नाके स्वर्गे लोके सीदति' शत० ८।६।१।१ इति देवमनुष्ययोर्भेदः, देवपूजया स्वर्गलोकप्राप्तिरपि सिद्धा यजमानस्य ॥ एतदतिरिक्तानि प्रमाणानि 'अवैदिकता निरासे, द्वितीयनिबन्धे प्रदर्श्येरन्। अत्र सर्व्वत्र देवमनुष्ययोः पृथग् २ ग्रहणं कृतम्।

एतद्वैदिकप्रमाणैरेतत्सिद्धयति,—देवयोनिरन्या, मनुष्ययोनिश्चाऽन्या। उभयोः कर्म्मसु समाना मर्य्यादा न भवति। मनुष्ययोनिः कर्म्मयोनिर्भवति।

* सहसा = बलेन । * कमलाङ्कस्य = मृगांकस्य । = बृहद्-तरः —बलं तेजो वा।
* विभ्रमम् = विलासम्।

देवयोनिरमैथुन* योनिः, सा च पशुयोनिश्च भोगयोनी स्तः । कर्म्मयोनिषु ये विधिनिषेधा भवन्तिः त एव भोगयोनिषु स्युरित्येतदसम्भवमेव । एतदादिकत्वं निर्म्मल-निर्भ्रान्तनिष्पक्षपात-शेमुष्यैव बोद्धुं पार्य्यते, न तु दोषैकनिविष्टया कलुषितबुद्ध्या ।—जगति स्त्रीशक्तिः पुंशक्तिश्च वैविध्येन विद्यते, तयोरुभयोश्शक्त्योः संयोगस्य नाम मैथुनम् । यथा—वृक्षेषु रक्तमञ्जर्य्याद्यंशः स्त्रीशक्तिः, सा च वृक्षोत्पन्नत्वाद्वृक्षपुत्रीत्वेन व्यपदेष्टुं शक्यते । स एव वृक्षस्तया स्वपुरुषशक्तिरूपश्वेतांशसंयोगरूपं मैथुनं यदा करोति, तत एव फलानि तत उत्पद्यन्ते । परन्तु वृक्षो व्यभिचारी न कथ्यते—योनिभेदात् । नचैते वृक्षादयोऽचेतना इति वाच्यम्—'तमसा बहुरूपेण वेष्टिताः कर्म्म-हेतुना । अन्तस्सञ्ज्ञा भवन्त्येते सुखदुःख-समन्विताः' १।४९ इति मनुना, वर्त्तमान-जगदीशचन्द्र वसु डाक्टर जे० सी० बोस प्रभृतिभिर्यन्त्रद्वारा चैतेषाञ्चैतन्यस्य सिद्धिः कृता । अस्तु—एवं यस्या धेनोर्वत्सो जायते, स एव ज्यायस्त्वम्प्रतिपद्य तयैव गवा मैथुनं कुर्वाणोऽपि न व्यभिचारदण्डभाग् भवति, एवं सारमेयादीनामप्यवस्था ज्ञेया । एवं यथाऽधमतिर्य्यग्-योनौ शास्त्रोक्तपापपुण्यन्न प्रवर्तते, तथैव मनुष्ययोनेरुत्कृष्टायां देवयोनावपि मनुष्यलोकमर्य्यादितपापपुण्यानि न भवन्ति, यतस्सा भोगयोनिः, मनुष्याश्च कर्म्मयोनिः । अत एव वेदे देवानां कृते कथितम्—'अनस्थाः पूताः पवनेन शुद्धाः शुचयः शुचिमपि यन्तिलोकम् । नैषां शिश्नं प्रदहति जातवेदाः स्वर्गे लोके बहु स्त्रैणमेषाम्' अ० ४।३४।२ । गायत्र्या वै देवाः पाप्मानं शमलमपाघ्नत' ऐतरेय० २।१७ । 'निरंहसो यूयम्' ऋ० १०।१२६।२ अत्र विश्वे देवा देवताः 'अपहत पाप्मानो देवाः' शत० २।१।३।४ । विहाय रोगं तन्वाः स्वायाः' अथ० ६।१२०।३ इति स्वर्गस्थानां वर्णनम् । सर्व्वे ह वै देवा अग्रे सदृशा आसुः सर्व्वे पुण्याः' शत० ४।५।४।१ । अन्यथा ( देवानामपि पापयुक्तत्वे) परस्त्रीणां गुह्याऽङ्गेष्वपि करं पातयन्तौ सूर्य्याचन्द्रमसौ, तत्र 'स ओतश्च प्रोतश्च विभूः प्रजासु' यजुः ३२।८ इति व्यापकः परमात्मा चाऽपि व्यभिचारिणः पापिनो वा मन्तव्या भविष्यन्ति । अथ च सोमस्य जाया प्रथमं गन्धर्व्वस्तेऽपरः पतिः । तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः' अ० १४।२।३, ऋ० १०।८५।४० अत्र स्त्रिया मनुष्यपतेः पूर्व्वमेव तत्पतीभवन्तः सोमगन्धर्व्वाऽग्नयोऽपि व्यभिचारिणः कन्यादूषकतापापफलभागिनश्च भवेयुः, एवं 'सोमो ददद् गन्धर्वाय गन्धर्व्वो ददद्ग्नये । रयिञ्च पुत्राञ्चाऽदादग्निर्मह्यमथो इमाम्' अ० १४।२।४,

* अमैथुनसृष्टेरस्वीकारे दयानन्दोक्ताऽऽदियुव-सृष्टिरपि व्यभिचरिष्यति ।

ऋ० १०।८५।४१ इति स्वपत्नीमितरेतरस्मै समर्प्पयन्तः सोमगन्धर्व्वाऽग्निदेवा व्यभिचारप्रचारप्रसारका मन्येरन् । परं कस्मिन्नपि धर्म्मशास्त्रे देवानां पशूनाञ्च कृते प्रायश्चित्तादिव्यवस्था न लिखिताः नचाऽपि तेषां कृते काऽपि पुण्यकर्म्माणि न चाऽपि पापकर्म्माण्येव निर्द्धारितानि । यदि तेषां कृते मनुष्यमर्य्यादितपाप-पुण्यकर्म्माणि मन्येरन्, तर्हि तादृशपापकरणात् पशवः कदाऽपि पशुयोनितो मुक्ता एव न स्युः, मनुष्ययोनिन्तु कदाऽपि प्राप्नुयुरेव नः परं नैवम्ः ते सर्व्व-पश्वादियोनीः क्रमशस्समाप्य प्रकृतिनियमतः स्वयमेव स्वोत्कृष्टमनुष्ययोनि-मासीदन्ति । एवञ्च देवाः पुण्यं कृत्वा देवयोनेरुत्कृष्टत्वं, मुक्तिं वा यायुः, अथवा सर्वदा देवयोन्यामेव तिष्ठेयुः, परन्नैवमस्ति । ते स्वप्राक्तन—( मनुष्ययोनिस्थ ) कर्म्मपरिणतिविपाके समाप्ते सति स्वयमेव प्रकृतिनियमात् स्वेतरमनुष्ययोनि-मासीदन्ति । एवञ्च पशुयोनौ पशूनां, देवयोनौ च देवानां यन्नवीनकर्म्म जायतेः तस्याऽपि फलं तत्तद्योनावेव प्राप्नुवन्ति, कदाचिन्नाऽपि प्राप्नुवन्ति, कदाचित्त-त्कर्म्मपरिमाणतोऽधिकतमं न्यूनतमं वा फलं प्राप्नुवन्तिः तदीयकर्म्माणि कर्म्म-योनि-मनुष्यकर्म्मवदग्रिमजन्ममूलकानि न भवन्ति, भोगयोनित्वात्ः किन्तु प्रकृति-नियमात् स्वयमेव तेषाञ्जन्म मनुष्ययोनौ भवति । तेनैषां कृते मनुष्यलोकमर्य्या-दितपापपुण्यानि न पापपुण्यानि । अतएव वेदे—'उशन्ति घाते अमृतास एतदे-कस्य चित् त्यजसं मर्त्यस्य । नि ते मनो मनसि धाय्यस्मे जन्युः पतिस्तन्वमा-विविश्याः' ऋ० १०।१०।३ अस्य सायणकृतोऽर्थः—ते प्रसिद्धाः, अमृतासः—प्रजापत्यादयो देवाः, एतद् इदृशं शास्त्रेणागम्यत्वेनोक्तं त्यजसं—त्यज्यते परस्मै प्रदीयते इति त्यजसं दुहितृभगिन्यादिस्त्रीजातम् उशन्ति—कामयन्ते । एकस्य चित्—सर्वस्य जगतो मुख्यस्याऽपि प्रजापत्यादेः स्वदुहितृभगिन्यादिना सम्बन्धो ऽस्तीतिशेषः।..........जन्युरिव-यथा जनयिता प्रजापतिः पतिः—भर्त्ता भूत्वा स्वदुहितुश्शरीरं सम्भोगेनाऽऽविष्टवान्ः तथा त्वमपि मम पतिर्भूत्वा तन्वं-मदीयं शरीरम्, आविविश्याः—सम्भोगेन आविश, योनौ प्रजननप्रक्षेपोपगूहचुम्बनादिना मां संभुङ्क्ष्व—इति सायणः अत्र यदेव देवानां कृते वेदेन कथितम्, तदेव पुराणैः तर्ह्येव पुराणानामपराधः कथम ? वेदस्य च स कथन्न ? तेनैतत् सिद्ध्यति देवैरेतत् कृतमपि पापं तेषां कृते न पापम् यतस्तेषां न मानुषसदृशी मर्य्यादा । प्रत्युत तत्पापमेव न तत्कृते, मर्य्यादाभेदात् योनिभिन्नतावशाच्च ।

ब्रह्मणा सृष्टिं कर्तुं यदा स्वशरीरस्य विभागः कृतस्तदा एकस्मात् पुरुषोऽभवदपरस्माच्च स्त्री । तथा च मनुः—'द्विधा कृत्वाऽऽत्मनो देहमर्धेन पुरुषो ऽभवत् । अर्धेन नारी, तस्यां स विराजमसृजत् प्रभुः' मनु: १।३२ । तयोर्मैथुन-

धर्म्मेण विराडुत्पेदे, कथमेतत् स स्वोत्पादितायां स्वकन्यायामथवा भगिनीरूपायां कथं विराजमुदपीपदत् ? तत्रैतदेव कारणम्, यदमैथुनयोनिषु भोगयोनिषु वा मानुषी मैथुनयोनिनियता वा मर्य्यादा न तिष्ठति । 'ये देवामनोजाता मनोयुजः' यजुः ४।११ इति वेदे देवानां मनोजातत्वं लिखितम् *नतु मैथुनजन्यत्वम् । अत-एव तत्र शरीरं द्विविधं योनिजमयोनिजञ्च' ४।२।५ इति वैशेषिकसूत्रं संगच्छते । अयोनिजञ्च साङ्कल्पिकसांसिद्धिक-स्वेदजोद्भिज्जभेदाच्चतुर्विधम्; तत्र देवा-दिका प्रथमद्वितीया सृष्टिरित्यपि तत्रैव ( प्रशस्तपादभाष्ये ) । 'समाख्याभावाच्च' ४।२।८ 'सञ्ज्ञाया आदित्वात्' ४।२।६ इति वैशेषिकसूत्रयोर्वसिष्ठादीनामयोनि-जत्वं साधितम् । तेन देवानाममैथुनयोनित्वं सिद्धम्; तेन तत्र अस्मन्मर्य्यादित-पापादिकम्न, पुरुषेषु तु भवति पापादिकम्, अतएव ऐतरेये—'व्यतिषिक्त इव वै पुरुषः पाप्मना' ४।१।४ । वेदे—'आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते' ऋ० १०।१८४।१ अत्र गर्भकर्तुर्विष्णोर्गर्भकर्तृत्वं प्रतिपादितम्, प्रत्येक-स्त्रीगर्भा-ऽर्थञ्चाशीर्मन्त्रोऽयम्पठ्यते; तर्हि गर्भकर्त्ता विष्णुर्भवद्भिः पापी मन्तव्यो यद्वर्णनं वेदो निस्सङ्कोचं विधत्ते । एवमग्रे—गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ' ऋ० १०।१८४ २ 'हिरण्मयी अरणी यं निर्मन्थतो अश्विना । तं ते गर्भं हवामहे दशमे मासि सूतवे' ऋ० १०।१८४।३ अत्र वैदिकौ देवावश्विनौ गर्भ-कर्त्तारौ स्त्रीणाम् न किमेतौ पापिनौ ? किं पुराणदेवा एव पापिनः ? हन्त ! सेयं न्यायस्य परा काष्ठा । 'अहं विश्वेषु भुवनेष्वन्तः अहं प्रजा अजनयं पृथि-व्यामहं जनिभ्यो अपरीषु पुत्रान' ऋ० १०।१८३।३ इति निर्लज्जमभिदधतो वेद-पुरुषस्याऽपि कृते कश्चिद् 'जारशिखामणिः' अन्यो वोपाधिरुपायनीकृतः ?

भवतां शिर-आदिभ्यो यूकाश्शरीरे च स्फोटका उत्पद्यन्ते, भवद्भ्य उत्पन्नत्वादिमेऽपि भवत्पुत्रपुत्रिकाव्यपदेश्याः । ( न च यूकादिकीटेषु पुत्रभ्रात्रादि व्यपदेशो न भवतीति वाच्यम्—'हतो हतमाता क्रिमिर्हतभ्राता हतस्वसा' अ० २।३२।५ इत्यादिमन्त्रेषु कृमीणामपि माताभ्रातृस्वस्रादिव्यपदेशो दृश्यते ) किम्भवद्भिरेषां यूकादीनां विवाहादिचिन्ता दायभागादिचिन्ता चिन्तान्तराणि वा क्रियन्ते स्वपुत्रपुत्रिकादिवत् ? यदि न, तर्हि कथमेतत् ? तत्रैतदेव कारणम्—

* योगदर्शने 'भुवनज्ञानं सूर्ये संयमात्' ३।२६ इतिसूत्रभाष्ये देवानां कृते लिखितम्—सर्वे संकल्पसिद्धाः । अणिमाद्यैश्वर्योपपन्नाः कल्पायुषो वृन्दारकाः कामभोगिन औपपादिकदेहा उत्तमाऽनुकूलाभिरप्सरोभिःकृतपरिवाराः" औपपादिकदेहाः—विनामातापितृसंयोगं स्वसंक-ल्पादुद्भूता इत्यर्थः ॥ 'सन्त्ययोनिजाः' वै० ४।२।१० अत्रदेवानामयोनिजत्वं साधितम् ।

अमैथुनोत्पन्न-मैथुनोत्पन्नसन्ततीनां व्यवहारसाम्यं कदाऽपि कथमपि न भवितुमर्हति। अत एवाऽमैथुनजन्यत्वप्रदर्शनार्थम् 'आत्मजन्मानः' नि० ७।४।१४ इति देवानामात्मजन्मत्वं लिखित्वाऽमैथुनजन्यत्वं साधितम्, तेन तेषां पापादिकन्न भवति, अत एव 'एतो न्विन्द्रँ स्तवाम शुद्धँ शुद्धेन साम्ना' साम० ऐन्द्र० ३।१२।६, ऋ० ८।९५।७ इति मन्त्रोऽप्युपपद्यते इन्द्रशुद्धतोपपादयिता। केवलं मन्त्र एव न, इदं तृचं सूक्तमप्युपपद्यते इन्द्रशुद्धतोपपादयितृ; तथाहि—'एतो न्विन्द्रँ स्तवाम शुद्धँ शुद्धेन साम्ना। शुद्धैरुक्थैर्वावृध्वाँ सँ शुद्धैराशीर्वान् ममत्तु' साम० उत्त० १२।३।३।१, ऋ० ८।९५।७ 'इन्द्र! शुद्धो न आगहि शुद्धः शुद्धाभिरूतिभिः। शुद्धो रयिं निधारय शुद्धो ममद्धि सौम्य!' साम० उत्त० १२।३।३।२ ऋ०—८।९५।८ 'इन्द्र! शुद्धो हि नो रयिँ शुद्धो रत्नानि दाशुषे। शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजँ सिषाससि' साम० १२।३।३।३, ऋ० ८।९५।९ इति। यदि शतमखप्रमुखबर्हिर्मुखेष्वेवैवं शुद्धता, +तर्हि परमात्मनस्तदवताराणां देवानाञ्च का कथा। आर्य्यसामाजिका महापापिनां सर्व्वायुष्पतितानामपि पतितानां 'छटाकभर--घृतकेन वैदिकहोमद्वारा' शुद्धिं कुर्व्वन्तु पञ्चभिँ कलाभिरेवः तर्हि वराकँ परमात्मैवैक इट्टगसीमपापात्मा, यस्य शुद्धिर्भवितुमेव नाऽर्हेत्? बत! तेन परमात्मनश्शुद्धतायां न कोऽपि सन्देहः। अत एव वेदे परमात्मनँ कृते कथितम्—'शुद्धमपापविद्धम्' यजुः ४०।८ 'शुद्ध' मिति विशेषणेनैव गतार्थतायाम् 'अपापविद्धम्' इति विशेषणान्तरं साधयति, यत् स परमात्मा कीदृग्विधेनाऽपि पापेन विद्धो—दुष्टो न भवति। पापकरणेऽपि तत्फलेनाऽविद्धतादशायामेव 'अपापविद्धम्' इति विशेषणं सङ्गच्छते, अत एव इन्द्रशुद्धिकर्तृपर्युक्तसूक्तमुपपद्यते। अत एव गीतायामपि लिखितम्—'न च मां तानि कर्म्माणि निबध्नन्ति धनञ्जय!।९।९ 'तयोरन्यः पिप्पलं स्वाद्वत्ति' ऋ० १।१६४।२०, अथ० ९।९।२० इति मन्त्रेण जीवात्मनस्तु कर्म्मफलभोक्तृत्वं सिद्धयति, परम्—'अनश्नन्नन्यो अभिचाकशीति' इति तन्मन्त्रपरिशेषेण च सिद्धयति, यत्—परमात्मा कर्म्मफलस्य भोक्ता न भवतिः × कर्म्मकर्तृत्वं तूभयोर्व्वर्त्तते—इति 'समानं वृक्षं परिषस्वजाते' इति मन्त्रांशेन द्योत्यते, आत्मनस्तु

+'तदिन्द्रोऽमुच्यत, देवो हि सः' शत० १।२।१।२

× अत एव गीतायाम्—'न मे पार्थाऽस्ति कर्त्तव्यं त्रिषुलोकेषु किञ्चन। नाऽनवाप्तमवाप्तव्यं वर्त्त एव च कर्मणि।' ३।२२ 'जन्म कर्म्म च मे दिव्यम्' ४।९ इति परमात्मनः कर्म्मविशेषता।

पिप्पलभोक्तृत्वं ( कर्म्मफलभागित्वं ) दर्शितम्; परमात्मनस्तु तदनशनं निर्दिष्टम्; तेन परमात्मनोऽपापविद्धताऽपि सिद्धा भवति; घटे दह्यमाने सत्यपि घटाश्रितं-माकाशं न दग्धुं, दग्धुं किं—तापयितुमपि न शक्यम्, अन्यथा—'यः परस्य प्राणं परमस्य तेज आददे। तस्य देवस्य, अथ० १३ । ३ । ५ 'यो मारयति प्राणयति, अ० १३ । १ । ३ इति मन्त्रलिङ्गात् स जगतो नाशकत्वेन हिंसक—कर्म्मवत्वात् पापफलभागी, 'इन्द्रस्य कर्म्म सुकृता पुरुणि, अ० २० । ११ । ६ इति सुकर्म्मवत्वेन, 'यः······प्राणयति, अ० १३ । १ । ३ इति पालकत्वेन परोपकारि-कर्म्मवत्वाच्च पुण्यफलभागी च स्यात् । विहारे भूकम्पवशाद् बहवो ब्राह्मणा अपि मृता इतरेऽपि, भूकम्पस्य च प्रयोजक परमात्मा देवा वा, तथा च—येषा-मज्मेषु पृथिवी....रेजते ( कम्पते ) ऋ० १ । ३७ । ८ तर्हि स परमात्मा देवा वा ब्रह्महत्यादोषभाजो नर-पशुहत्यादोषभाजश्चाऽपि मन्तव्याः, यद्येवं न मन्यते, तर्हि पुराणेऽपि स ते च न पापफलभाजः; यतः परमात्मा कर्म्मणः फलस्य भोक्ता न भवति जीवात्मवदिति उक्तचरमन्त्रे निर्दिष्टमेव । अत एव 'न मां कर्म्माणि लिम्पन्ति न मे कर्म्मफले स्पृहा' गीता ४।१४ इति वचनमप्युपपद्यते । परमात्म-नस्तु कथा दूरे; विशिष्टाऽवस्थायां मनुष्याणामपि ( योगिप्रमुखाणाम् ) पापादि-कन्न भवति; तथा च'योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः । सर्वभूतात्म-भूतात्मा कुर्व्वन्नपि न लिप्यते' गीता ५।७ 'यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते। सर्व्वत्राऽवस्थितो देहे तथात्मा नोपलिप्यते' गी. १४।३२। 'गतसङ्गस्य मुक्तस्य ज्ञानाऽवस्थितचेतसः । यज्ञायाऽऽचरतः कर्म्म समग्रं प्रविलीयते, गी. ४ । २३ । ज्ञानाऽग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथा' गी. ४।३७ । 'यस्य नाऽहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वाऽपि स इमाँल्लोकान् न हन्ति न निबध्यते' गी. १८।१७ । 'त्यक्त्वा कर्म्मफलासङ्गं नित्यतृप्तो निराश्रयः । कर्म्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः ।' गी०४।२०। 'निराशीर्यतचित्तात्मा त्यक्तसर्व्वपरिग्रहः। शारीरं केवलं कर्म कुर्व्वन् नाप्नोति किल्बिषम्' गी. ४।२१। 'समः सिद्धावसिद्धौ च कृत्वाऽपि न निबद्ध्यते' गी. ४।२२। 'ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाऽम्भसा' गी. ५।१०। 'यस्य सर्व्वे समारम्भाः कामसङ्कल्पवर्जिताः । ज्ञानाऽग्निदग्धकर्म्माणं तमाहुः पण्डितम्बुधाः' गी. ४।१९। 'निवृत्तिरपि मूढस्य प्रवृत्तिरुपजायते । प्रवृत्तिरपि धीरस्य निवृत्तिफलभागिनी' अष्टावक्रगीता १८।६१ अस्य श्लोकस्याऽपि पूर्वोक्ताशयः ।

वेदे—'न तमंहो न दुरितानि मर्त्यमिन्द्रावरुणा ! न तपः कुतश्चन । यस्य देवा ! गच्छथो वीथो अध्वरं न तं मर्तस्य नशते परिह्वृतिः, ऋ० ७।८२।७। 'न

तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत्' ऋ. ८।१९।६ देवमर्त्ययोः पृथग् ग्रहणा त्तयोर्भेदोऽपि सिद्धः । न नशत्-न प्राप्नोतीत्यर्थः । 'उताऽऽगश्चक्रुषं देवा देवा जीवयथा पुनः' ऋ० १०।१३७।१।

अत एव शतपथे सृष्टिनिरूपणप्रकरणे उक्तम्—'आत्मैवेदमग्र आसीत् पुरुषविधः' १४।४।२।१, बृहदा० ३।४।१। 'स वै नैव रेमे, तस्मादेकाकी न रमते, स द्वितीयमैच्छत् । स हैतावान् आसयथा स्त्रीपुमांसौ सम्परिष्वक्तौ । स इममेवात्मानं द्वेधाऽपातयत् । ततः पतिश्च पत्नी च अभवताम्......तस्मादयमाकाशः स्त्रिया पूर्य्यत एव, तां समभवत्, ततो मनुष्या अजायन्त' १४।४।२।४-५, बृहदा० ३।४।३ 'सा ह इयमीक्षाञ्चक्रे—कथं नु माऽऽत्मन एव जनयित्वा सम्भवति, हन्त तिरोसानीति । सा गौरभवत्, वृषभ इतरः । स तां समेवाऽभवत्ततो गावोऽजायन्त, शत० १४।४।२।६-७ । 'एवमेव यदिदं किञ्च मिथुनमापिपीलिकाभ्यस्तत् सर्व्वमसृजत्' शत० १४।४।२।८, बृहदा० ३।४।४ इत्यादि । एतेनैतत्सिद्ध्यति-स्वस्मादेवोत्पादितायाः स्त्रियाः सम्भोगे परमात्मनो लज्जा नाऽभवत्, यतः 'शुद्धमपापविद्धम्, यजुः ४०।८ इति तत्कृतेऽभिहितम् । तन्मैथुनेन तस्याः स्त्रियास्तु-स्त्रीणां लज्जाशीलत्वादेव वा, (अधुना पुरुषविधत्वेन) भाविमर्य्यादाभङ्गभिया वा लज्जाऽभवद्, यत उभयोः पुरुषविधत्वं प्राग् (शत. १४।४।२।१ उक्तमेव । तेनासौ गवादियोनिरभवत्-यत्र पुरुषविधा मर्य्यादा नासीत् । परमात्माऽपि स्वरूपपरिवर्त्तनञ्चकार, यन्मानुषाः कदाचिदीदृगाचरणमेव नाऽनुकुर्य्युः । इति वेदः स्वयमभिधत्ते, एवं पौराणिकेतिहासेष्वपि वेदवदेकवाक्यतोहितुं सुशका । तत्र बहुत्र तु भावान्तराण्यपि सन्ति, बहुत्र चाऽर्थवादा अपि सन्ति । अर्थवादो नाम स्वाऽक्षराऽर्थे तात्पर्य्यमग्राहयित्वा रोचकताभयानकतामूलक-स्तुतिनिन्दा द्वारा विधिनिषेधशास्त्रे प्रवृत्तिनिवृत्तिकारी— । तेनवोच्यते—'नहि निन्दा निन्द्यं निन्दितुम्प्रवर्त्तते, प्रत्युत विधेयं स्तोतुम्' यथा—'अपशवो वाऽन्ये गो अश्वेभ्यः' नैतेन गवाश्वव्यतिरिक्तानां पशुत्वमपसार्य्यते, प्रत्युत तन्निन्दामनूद्य गवाश्वानां स्तुतिर्विधीयते । (अत्रैव गोपीनां स्वपतीन्वर्जयित्वा कृष्णस्य पार्श्वे प्रेमाऽर्थं गमनमप्यर्थवादे द्रष्टव्यम् । जागत्कदृष्टौ ससतीत्वधर्म्मस्ताभिस्त्यक्तः, परं तात्त्विकदृष्टौ ताभिः 'सर्व्वत्यागं कृत्वा परमात्मोपासनीयः' इति विधिं पालयितुं मायिकपतीनां प्रेम्णस्तावन्मूल्यं न स्थापितम्, यावन्नित्यपतिश्रीकृष्णपरमात्मप्रेम्णो मूल्यं ताभिरङ्कितम् । अत एव वेदे—'भद्रा वधूर्भवति यत् सुपेशाः स्वयं सा मित्रं वनुते जने चित्' ऋ० १०।२७।१२ अत्रेन्द्रो देवता, अस्याशयः-सा स्त्री कल्याणी भवति, या मित्रम् (इन्द्रपरमात्मानं) स्वयं वनुते

प्रार्थयते, स्वीकरोतीत्यर्थः, स च प्रीयमाणो वरजनोऽहम् ( इन्द्र ) एवेत्यभिप्रायः- इति सायणः। नैतेन स्वपतीनां त्यागः सिद्धः परमात्मानमुपासीनानां तासाम्। ये श्रीकृष्णस्य गोपीभिः कामसम्बन्धं पुष्णन्ति, तैरवसेयम्-श्रीकृष्णः परमात्मा गोप्यश्चाऽपि परमात्मन एव स्वकीयो विवर्त्तः, सर्वाः स्त्रियोऽपि तस्यैव, अत एव वैदिकाः 'त्वं हि नः पिता वसो !' अथ० २०।१०८।२ 'स नः पिता जनिता' अ० २।१।३ इति तं परमात्मानं पिता जनिता' इति कथयन्ति; अधुना यदा स वैदिकानां पिता, 'अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो × अपरीषु पुत्रान्, ऋ० १०।१८३।३ जनिभ्यः-जायाभ्यः, अपरीषु-अन्यास्वपि स्त्रीषु पुत्रानहमजनयं-जनयामीत्यर्थ इति सायणः। इति मन्त्राऽनुसारश्च जनिता मतो वैदिकानाम्; तर्हि किं वैदिकास्तं व्यभिचारिणं मंस्यन्ते ? तदीयः पिता जनिता तु अस्मिल्-लोके वर्त्तत एव, तर्हि परमात्मना तेषां ( वैदिकम्मन्यानां ) मातरि तान् ( वैदि-कमानिनः ) उत्पाद्य स्पष्टं तन्मातृभिर्व्यभिचारः कृतः; अत्र वैदिका यदुत्तरी-ष्यन्ति; तदेवात्राऽप्यवसेयम्। यदा च गोप्यादयोऽपि परमात्मन एव स्वकीयो विवर्त्तः, तदा तदीयः कामभावस्ताभिः कथम्भवितुमर्हति, यतः स्वकीयः कामभावः स्वस्मिन् न भवति, किन्तु परस्मिन्नेव। परमात्मनः कः परो यस्मिंस्तस्य कामभावः स्यात्। यः पुराण-पुराणप्रत्यर्थी वादी श्रीकृष्णस्य पुराणा-दिकथितं परमात्मत्वं न मन्यते, स व्यभिचारकलङ्कमपि पुराणेन साधयितुं न शक्तः। यतः स्ववार्त्तासमर्थनाऽर्थं यदि स पौराणिकतादृशवचनं प्रमाणं मन्यते, तर्हि पौराणिकवचनान्तर—'आत्मन्यवरुद्धसौरतः' भागव० १०।३३।२६, 'रेमे तया चात्मरत आत्मारामोऽप्यखण्डितः'! भाग. १०।३०।३४, 'योगमायामुपाश्रितः भा० १०।२९।१ 'रेमे रमेशो व्रजसुन्दरीभिर्यथाऽर्भकः स्वप्रतिबिम्बविभ्रमः' १०। ३३।१७। ( अत्र रमु-क्रीडायाम्, अन्यथा 'सोम ररन्धि नो हृदि' ऋ १।९१।१३ 'आर्य्याऽभिविनय' स्य ४९ पृष्ठे उपस्थापितस्याऽस्य मन्त्रस्य 'ररन्धि' इत्य-स्याऽर्थः 'यथावत् रमणकीजिये' इति स्वा० दयानन्देन कृतः, आर्य्यसमाजाऽनुसारं कुमारिकाः स्त्रियश्चाऽपीमाः प्रार्थनाः करिष्यन्ति, तत्र रमणस्य कमर्थं करिष्य-न्ति तासां स्त्रीणामभिभावका, वैदिकाः, यदि मैथुनमित्युच्येत; तदा तु धन्यास्ते; तर्हि पुराणेष्वेव कथं प्रश्नस्तदीयः ? यदि क्रीडामात्राऽर्थं करिष्यन्ति; तर्ह्यत्राऽपि

× वैदिकः परमात्मा अपरीषु पुत्रोत्पादनं तत्पतिविद्यमानतायामपि करोति, किं स न पापी, ? किं केवलं पुराणपरमात्मैव पापी ? अत्र वादिभिरुत्तरणीयम्। अथ च दुष्कर्म्माणि मूर्खतावशाद् भवन्ति; स्वा० दयानन्देन यजुर्भाष्ये ३१।११ परमात्मन्यपि मूर्खता गुणः प्रदर्शितः; तर्हि परमात्माऽपि मूर्खतावशाद् दुष्कर्म्माणि करोति ? नोवा,! यदि-

तथैव ) 'आत्मारामः' भाग० १०।२६।४२, ' मन्मथमन्मथः' भा० १०।३२।२ 'यस्येन्द्रियं विमथितुं कुहकैर्न विभ्वयः' भाग० ]-समाधानद्वारा स्वकीयवार्त्ता-खण्डनसमयेऽपि स ( शङ्कः ) तत्पुराणादिवचनं प्रमाणं मन्यताम्,—तदा समाधि-कर्तृवचनानां क्षेपकतासाधनस्य, 'वयमेतन्न मन्महे' इति स्वप्राकृतिकाऽस्त्राक्षेपस्य च हास्यास्पदं दुस्साहसञ्च नोपयुज्येत्याम्। श्री शुकेनेदृक्षशङ्कानामुत्तरं निम्नदिशाऽपि दत्तम्—

'धर्म्मव्यतिक्रमो दृष्ट ईश्वराणाञ्च साहसम्। तेजायसां न दोषाय वह्नेः सर्व्वभुजो यथा' भाग० १०।३३।३० ( योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः। सर्व्वभूतात्मभूतात्मा कुर्व्वन्नपि न लिप्यते' गी० ५।७ 'ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः। लिप्यते न स पापेन पद्मपत्रमिवाऽम्भसा' गी० ५।१० इत्यादिप्रागुपस्थापितगीताप्रमाणान्यपि द्रष्टव्यानि ) अग्रे पुनर्वक्ति श्रीशुकः—'नैतत् समाचरेज्जातु मनसाऽपि ह्यनीश्वरः। विनश्यत्याचरन् मौढ्याद् यथा रुद्रोऽब्धिजं विषम्, भाग० १०।३३।३१ 'ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित्। तेषां यत् स्ववचोयुक्तं बुद्धिमांस्तत् समाचरेत्, भाग० १०।३३।३२

'कुशलाचरितेनैषामिह स्वार्थो न विद्यते। विपर्य्ययेण वाऽनर्थो निरहङ्कारिणां प्रभो! भाग० १०।३३।३३ 'किमुताऽखिलसत्वानां तिर्य्यङ्—मर्त्यदिवौकसाम्। ईशितुश्चेशितव्यानां कुशलाऽकुशलान्वयः। १०।३३।३४ अस्याऽयमभिसन्धिः—प्रत्येकधर्म्मोऽधर्म्मो वा तदैव जीवं स्प्रष्टुं क्षमते, यावज्जीवस्य इन्द्रियाद्यात्मकस्थूलशरीरेण सह सम्बन्धोऽहम्भावो ममता वा तिष्ठेत्। परन्तु तत्सम्बन्धे ममत्वे वा तेन सह नष्टे आत्मनश्शरीरमन आदिभ्यः पार्थक्ये जाते शुभाऽशुभं किमपि कर्म्म फलं वा जीवं स्प्रष्टुं नाऽलम्। श्रीकृष्णश्च नित्यमुक्तश्शुद्धबुद्धश्च परमात्माऽवतार आसीत्, स्थूलसूक्ष्मकारणशरीरैस्सह तदीयो ममत्वसम्बन्धो नाऽऽसीत्, तर्हि तस्य कुशलाऽकुशलान्वयः कुतः स्यात्?

एतदेव विशदयति पुराणकारोऽग्रे—'यत्पादपङ्कजपरागनिषेवतृप्ता योगप्रभावविधुताऽखिलकर्म्मबन्धाः। स्वैरञ्चरन्ति मुनयोऽपि न नह्यमाना-

---

करोति; तर्हि तद्-दुष्फलं प्राप्नोति नोवा? यदि न; तर्हि तस्य मूर्खता किम्फलिका, यदि शूद्रोत्पादनाऽर्थिका; तर्हीदमपि परमात्मनो दुष्कर्म; यत्तेन जघन्या कथमुत्पादिताः? यदि चोत्पादिताः; तर्हि तेभ्यो दुष्फलं कथं ददाति; स्वयं तद्-दुष्कर्मफलं कथं न प्राप्नोति? यदि शूद्राः स्वकर्मवशादेवोत्पद्यन्ते' तर्हीश्वरस्य मूर्खता. कथममोघामुत्पत्तिः?

स्तस्येच्छयाऽऽत्तवपुषः कुत एव बन्धः ? १०।३३।३५ गोपीनां तत्पतीनाञ्च सर्व्वेषामेव देहिनाम् । योऽन्तश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक्, १०।३३।३६ (एतदेव वेदोऽप्यभिधत्ते—'अहं विश्वेषु भुवनेष्वन्तः । अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान्, ऋ० १०।१८३।३ अस्य मन्त्रस्याऽर्थोऽपि विचार्य्यः तर्हि जनिभ्यः पुत्राञ्जनयन् परमात्मा पापो न भविष्यति भवन्मतेऽपि, 'अनुग्रहाय भूतानां मानुषं देहमास्थितः । भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत्, भाग० १०।३३।३७ 'नाऽसूयन् खलु कृष्णाय मोहितास्तस्य मायया । मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः, भाग० १०।३३।३८ अत्र श्रीकृष्णस्येदं वचोऽपि स्मर्त्तव्यम् 'न मय्यावेशितधियां कामः कामाय कल्पते । भर्ज्जिता क्वथिता धाना प्रायो बीजाय नेष्यते, भाग० १०।२२।२६ इति । अथ चैतस्मिन् समये श्रीकृष्णस्याऽऽयुः सप्तवर्षकल्पमासी-दित्यपि पुराण –वचनं न विस्मर्त्तव्यम् )।

अथवैतदेव विचिन्त्यताम्—यद्—'वयम्मनुष्याः कुत उत्पन्नाः ? यदि परमेश्वरादित्युत्तरम्, तर्हि तु वयं सर्व्वे एकपितृकत्वान्मिथो भ्रातरःस्म । स्त्रिय-श्चाऽस्माकम्भगिन्यः' तर्हि कथमस्माकं ताभिर्मैथुनम्भवति ? तत्रैतदेव कारणम् यद्—वयं परमात्मसृष्टिदृष्ट्याऽमैथुनयोनिजा अत एव तद्—दृष्ट्या स्वभगिनी-कल्पामपि बालामुपयच्छामहे, परं स्वपितुरुत्पन्नया स्वोत्पन्नया वा बालया नाऽस्माकं पाणिपीडनम्भवति—इत्येवं दृष्टिकोणे पूर्व्वत्र मानुषीमर्य्यादा नाऽस्ति, अपरत्र च वर्त्तत एव । स्वा० दयानन्दमते सृष्ट्यादौ प्रत्येकजात्या युवयुगलं परमात्मनोत्पादितम्, तर्हि तयोर्मैथुनेन सृष्टिप्रवर्द्धनञ्जातम्, कथमेतत् ? तयोः परमात्मोत्पादितत्वाद् भगिनीभ्रात्रोः कथं न मैथुने दोषो जातः ?, यदि अमैथुनयोन्युत्पन्नेषु न धर्म्मशास्त्रप्रवृत्तिरिति चेत्तर्हि एतद् देवादिकेष्वपि संघटनीयम् । यदि कथ्येन वेदमन्त्रबलादेव वयं तां बालां पत्नीं कुर्म्महे अत एव नाऽस्मभ्यम्पापम्, तर्हि यदि वेदमन्त्रे-ष्वीदृशी शक्तिस्तर्हि तेषां वेदानामध्यक्षे प्रवर्त्तके वा परमात्मनि, वेदमन्त्रवर्ण्य-मानदेवेषु वा सा शक्तिर्नास्ति किम् ? यस्य निःश्वासमात्रेण वयमपूता अपि पूता भवामः, किन्तस्याऽशुद्धता × पापविद्धता वा कदापि भवितुमर्हति ?

× यदि परमात्मा पापात् पृथगेव तिष्ठति, अत एव स पापी न भवतिः इति चे-त्तर्हि तस्मिन् किं महत्त्वं स्थितं मनुष्यापेक्षया ? मनुष्योऽपि पापपृथग्भूतः सन् पापी न भवति । तन्महत्त्वं तदा ; यदा कीदृग्विधमपि पापं त स्पृशेदेव न, अस्पर्शश्च पापभवनेऽपि तत्फलाऽविद्धतादशायामेव भवतीति सूक्ष्मं निरीक्ष्यम् । 'अहं सत्यमनृतं यद् वदामि' अ. ६।६१।२ किं परमात्माऽनृतवादफलं प्राप्नोति ?

किं स एव तया शक्त्याऽऽत्मानं 'शुद्धमपापविद्धं यजुः ४०।८ वा न कर्तुं शक्तः? तस्माद् देवचरित्राणामनुकरणे नास्माकमधिकारः सामर्थ्यं वा। तेनैवोक्तम्–'न देवचरितं चरेद्' इति विष्णुपुराणे।
'अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम्। नाऽनुष्ठेयं मनुष्यैस्तदुक्तं कर्म्म समाचरेत्' हारीतः। अत एव 'वेदः स्मृतिः सदाचारः' मनुः २।१२ इति मनुश्लोके आचारस्य न प्रथमनिर्द्देशः, किन्तु वेदस्य, ततः स्मृतेः; तत एवाऽऽचारस्य। आचारस्य च विशेषणं सच्छब्दः, तेन सदाचार एवाऽनुसर्त्तव्यो भवति, सदाचारश्च तत्तद्योनिमर्य्यादितमर्य्यादारूप एव।

फलतो विशिष्टप्रभावशालिपुरुषाणामलौकिककार्य्याऽनुकरणं साधारणजनतया न कर्त्तव्यम्भवति; अन्यथा—'गोवर्द्धनगिरिधारण-दावानलपान-विषपान-प्रभृतितदीयकार्य्याणामनुकरणमपि कर्त्तव्यं स्यात्! तत एव तु तैत्तिरीयोपनिषदि (शिक्षोपनिषदि) उक्तम्–'यान्यस्माकं सुचरितानि ; तानि त्वयोपास्यानि नो इतराणि' एकादशाऽनुवाके २॥ आर्य्यसमाजस्य महापुरुषः स्वामिदयानन्द एव द्रष्टव्यः। तस्य धूम्रपानं-शिङ्घिकाघ्राणं (नसवार सूंघना) 'न दुरुक्ताय स्पृहयेत्, ऋ० १।४१।६ इति वेदविरुद्धं गालिप्रदानं, भङ्गापानं, * 'तां तु यः स्तेनयेद् वाचं स सर्वस्तेयकृन्नरः' म० ४।२५६ इत्यनुसारं वेदार्थे च्छलम् इत्येवमादयोऽन्येऽपि च केचन तद्-दौर्बल्यप्रयुक्ता आचारा आसन्, यद्विवरणमनावश्यकम्; तज्जीवनचरित्रेष्वेतेषां (स्पष्टतयाऽभणनाद्) निह्नवे कृतेऽपि तन्निकट-कालिकत्वेन जनास्तच्चरित्राणि जानन्त्येव। किं तदनुयायिन एतत्कर्म्माऽनुयायिनो भवितुमिच्छन्ति? यदि न, तर्हि कथं तैः स्पष्टशब्देषु स्वा० दयानन्दस्य एतद्-दोषप्रयुक्तनिन्दा न क्रियते? कथं वा स एतेषु दोषेषु सत्स्वपि महापुरुषो मन्यते? यदा खलु मनुष्यस्याऽपि दयानन्दस्य भीषणदुष्कर्म्मणामनुकरणं भवन्तो न कर्तुं शक्तास्तदनुयायिनोऽपि, न च स्पष्टशब्दैस्तस्य निन्दां त्यागं वा कर्तुं पारयन्ति; तदा देवकोटिकमहापुरुषाणां दिव्यचरित्रसमालोचने भवन्तः कथमधिकृताः? अथवा तस्य (दयानन्दस्य) दुष्कर्म्माणि हेयानि भवन्तस्तत् सत्-कर्म्म संन्यासित्वं, विरक्तत्वे गङ्गातटे तेनाचरितं दिगम्बरत्वं वा भवन्तो भवत्संन्यासिनश्च कथं नोरीकुर्व्वते?

अथवा दुर्ज्जनतोषन्यायेन सन्तु देवास्तच्चरित्रकरणेन कथञ्चित् पापशालिनः; तेषां तत्फलं दातुं परमात्मैवेष्टे, के भवन्तस्तच्चरित्राणां समालोचने? यदि

* 'वाच्यर्था नियताः सर्व्वे वाङ्मूला वाग्विनिःसृताः' इति पूर्वार्द्धम्।

ते कामवशेन स्वसंयमं कर्त्तुं नाऽपारयँस्तर्हि तेषामत्र को दोषः ? वेदोऽपि कामस्य बलवत्त्वं प्रतिपादयति, श्रूयताम्-'कामो जज्ञे प्रथमो, नैनं देवा आपुः पितरो न मर्त्याः । ततस्त्वमसि ज्यायान् विश्वहा महाँस्तस्मै ते काम ! नम इत् कृणोमि'-अथ०९।२।१९ यदि वेद ँ कामं देवादिभिरप्यनवाप्यं मन्यते; तर्हि ते कथं दूष्यन्ते वेदमनतिक्राम्यन्तः, ( अथवाऽयं वेदमन्त्र एव निराकर्त्तव्यः ) प्रत्युत तत्कामान्मनुष्यैःसँय्यमशिक्षा) ग्राह्या, यतो देवास्तूच्चपदवीं प्राप्तुमक्षमा भोगयोनित्वात्, 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति । एवं त्रयी धर्म्ममनुप्रपन्ना गतागतं कामकामा लभन्ते' गीता ९।२१ इति तैर्मर्त्यलोकः, आगन्तव्य एव ; परं कर्म्मयोनयो मानुषास्तूच्चपद-( मुक्त्यादिक-)-मपि प्राप्तुं समर्था यदि ते कामस्य सँय्यमं कथञ्चित् कुर्य्युः । देवास्तु कामं पुण्यं कुर्य्युँ कामं पापं वा ; तैस्तु मनुष्यलोक एव प्राप्तव्यः, मनुष्यैस्तु पापाचारात् पशुयोनिरेव प्राप्येत , तर्हि तेषां देवाऽनुकरणेन को लाभो भविष्यति । अथ च देवास्सन्ति परमात्मप्रिया उच्चयोनिमत्त्वात्, परमात्मा तेषां रक्षकः ; तर्हि पापादिकेन न ते लिप्ताः स्युः, तदुक्तं वेदे—'न तमंहो न दुरितं कुतश्चन नाऽरातयस्तितिरुर्न द्वयाविनः । विश्वा इदस्माद् ध्वरसो विबाधसे यं सुगोपा रक्षसि ब्रह्मणस्पते !' ऋ० २।२३।५ अंहः-दुरितम् = इत्यस्य दुःखं पापञ्चाऽर्थः । अत एव सामवेदे उत्तरार्च्चिके-'येन देवाः पवित्रेणाऽत्मानं पुनते सदा । तेन सहस्रधारेण पावमानीः पुनन्तु नः' १०।७।५ इति देवानां पार्श्वे पवित्रतायाः साधनमपि सिद्ध्यति, येन तेऽस्मानपि पुनन्ति, अन्यथा-'स्वयमसिद्धः कथमपरान् साधयेत्' । 'येनानिरंहसो यूयं ? ऋ० १०। १२६।२ अत्र विश्वे देवा देवताः । 'सदा देवा अरेपसः' इति सामवेदे ऐन्द्रपर्व्वणि ४।१०।६ अरेपसः पापरहिता इति सायणः । सदा इत्यस्याऽर्थः सर्व्वकाले । अत एव शतपथे-'सत्यमेव देवा अनृतं मनुष्याः' १।१।१।४ इति देवमनुष्ययोर्भेदँ प्रादर्शि, 'तदिन्द्रोऽमुच्यत, देवो हि सः' शत० १।२।१।२ एवं परमात्मेच्छया देवानां महिम्ना च मनुष्या अपि पापेन न विद्ध्यन्ति' तथा च—'न तम ँ हो न दुरितं देवासो ! अष्ट मर्त्यम् । सजोषसो यमर्य्यमा मित्रो नयति वरुणो अति-द्विषः' साम० ऐ० ४।८।८, ऋ० १०।१२६।१ तं मनुष्यं पापं तत्फलस्वरूपं दुर्गम-नञ्च न व्याप्नोति, यमर्य्यमादिदेववर्ग्गः उन्नतिं × नयति-इति सायणाशयः । एतेन पौराणिकर्षिमुनीनामपि निष्पापतैव । 'प्रसो अग्ने ! ......तरति....यस्त्वं सख्यमाविथ' साम० उत्त० २०।६।१।१, ऋ० ८।१९।३० । ( क्रमशः )

——:०:——

# गोपालनम् ।

लेखकः-पं० केदारनाथत्रिपाठी ।
( गोला, गोरखपुर । )

अयि शिष्टविशिष्टविद्याविज्ञानसंभारभासुराः पावनमानवसभ्यतासमभिनन्दित-सभ्या निर्मलधियो भारतीयाः !

नाविदितचरं श्रीमतां तत्रभवतां भवतां यत् कृषि-प्रधानोऽयमास्माकीनो भारत-वर्षः । अधिकाधिकसंख्याका जनाः कृषिकर्मणैवाऽस्मानं सपरिजनं पालयन्ति पोषयन्ति च । प्रतिशतं पञ्चनवति-संख्याकाः कृषिकर्म कुर्वन्ति; अत एवाधिकाधिकसंख्याका मानवा ग्रामेषु निवसन्ति । प्रायः ग्रामीणा एव कृषि-कर्मणि सुचतुरा भवन्ति । अस्मादेव हेतोः "उत्तमा तु कृषिः प्रोक्ता" "सुखेच्छुस्तु कृषिं कुर्या"दित्याभाणकमपि प्रसिद्धिमाप ।

कृषि-कर्मणि परमावश्यकता गवाम्; पुरातनकालादेव गोभ्यः कृषिं सम्पादयन्ति भारतभूनिवासिनः । विज्ञानस्य चरमा सीमा भारतीयैर्विज्ञायते, गोभ्यः कृषि-कर्म सम्यक्तया संपद्यते, सुखदा शान्तिदा च जायते । यन्त्रेण कृषिकर्मात्र देशे कदापि न विधेयम्, भवितुमेव च नार्हति । दौर्भाग्यात् दरिद्रता-सम्राजः प्रबलं साम्राज्यं वरीवर्ति कृषिबलेषु, तदा यन्त्र-क्रयणेऽसमर्थास्ते । स्यादपि क्रयणं परन्तु न हि पर्याप्तमेकत्र क्षेत्राणि समेषां यद् यन्त्रेणैव कार्यं निर्वहेत् । सत्यपि निर्वाहे बहवो मनुष्या व्यर्था भविष्यन्ति, यत्कार्यं शतैः जनैः संपद्यते, तदेकेनैव यन्त्रेण, तत्रैको मनुष्यः कार्ये प्रवर्तते, नवाधिकनवतिसंख्याका व्यर्थतां भजन्ते; एवं च राष्ट्रस्य महती हानि र्वोभवीति । किं बहुना बेरिबेरीप्रभृतिनव्यरोगाणामुत्पत्ति र्यन्त्रनिष्पन्नपिष्टक-तैल-तण्डुलादिनैवेति चिकित्सका वदन्ति ।

एवं च यन्त्रनिष्पादितवस्तुजातै र्नव्यरोगाणामुत्पत्तितः शीघ्रमेव कीनाशसदनातिथितां व्रजिष्यन्ति भारतवर्षीयाः । अतः कृषिकर्म गोभिरेव विधेयम् भवति । परन्तु गवां रक्षणस्य परमोपयोगिता, प्रतिदिनं ह्रसन्ती गवां संख्या दुःखयति सचेतसां चेतांसि ।

गोक्षीरसदृशमौषधमेव नेति डिण्डिमनादः केषां कर्ण-कुहरे न पतति । तथापि भारतीया एतेषां रक्षणे दत्तावधाना न जायन्ते । भारतीयै र्मातृत्वेन व्यवहृता गावः । सत्यमेतत्, निःसन्दिग्धमेव । गावो भारतमातरो जगन्मातरश्च । अतो गवां रक्षणं भारतकल्याणकरं जगत्कल्याणकरं च राजते । पयसः कथा वा का, यासां मूत्रेण पाण्डुरोगप्रभृतिरोगाणां समूलनाशः; गोमयेन कृमिनाशश्च भवति । पञ्चगव्येन संशुद्धिर्मानवानाम् । तथाहि—

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
निर्दिष्टं पञ्चगव्यं तु पवित्रं पापनाशनम् ॥

पा० सं० अ० ११

निखिलैहलौकिकपारलौकिकसौख्यसमुदायसंदात्रीणां नानाविधदोषजातकल्मषकुलसंहारिणीनां गवां सर्वतोभावेन पूजनविधानेन सर्वे देवाः पूज्यन्ते। आभामङ्गेषु प्रत्येङ्गेषु च समेषां देवानां संनिवासः । तथाहि—

पृष्ठे ब्रह्मा गले विष्णुः मुखे रुद्रः प्रतिष्ठितः ।
मध्ये देवगणाः सर्वे रोमकूपे महर्षयः ॥
नागाः पुच्छे खुराग्रेषु ये चाष्टौ कुलपर्वताः ।
मूत्रे गङ्गादयो नद्यो नेत्रयोः शशिभास्करौ ॥

भा० पु० ।

यद्यपि यत्र तत्र गोशालादीनां स्थापना विद्यते, तथाप्यध्यक्षादीनामनवधानतया कार्यकर्तॄणां दुर्गुणतया च रक्षणं सम्यक् न संपद्यते। काननादीनामभावान्महती हानिः आर्यराज्ये प्रतिग्रामं गोचरभूमिरासीत् । सम्प्रति विदेशीयराज्यप्रभावात्, भारतीयानां दुर्गुणतया च गोचरभूमिरेव नास्ति । क्वचन भूमिरस्ति चेत्तर्हि योजनं यावत्, जलाशयादीनामभावो नितरां खटखटायते । गावस्तृणं भुक्त्वा जलं विना भ्रमन्तीतस्ततो जनैस्ताड्यन्ते च ।

बहवो जनाः सर्वं क्षीरं दुहन्ति, भवन्तु वराकाः ? वत्सानां भागो नास्ति किम् ? गोसन्ततीनां दौर्बल्यं मनसि दुःखं दातुं नालं किम् ? गवां हननं प्रतिदिनं भवति । राजकार्यकर्तारस्तत्र न ध्यायन्ते, राज्ञः किं कर्मेत्यत्र दृष्टिरेव न । अहिन्दवः स्वभावत एव गवामार्यसभ्यतायाश्च रिपवः । विकृतमस्तिष्का हृदयहीनास्ते स्वयमेव न विचारयन्ति "दुग्धपानकरणेन या मातरः सञ्जातास्तासां मांसभक्षणं स्वमातृमांसभक्षणमेवे"ति ।

गवां रोगाणामपि सम्यक्तया परीक्षणं कर्तव्यं, बहवो गहनी-जिह्वा-बेकरीमुखडैनाप्रभृतिरोगैराक्रान्ता मरणशरणं यान्ति । केचन ग्रामीणा अत्र विषये चतुरा भवन्ति, तथाप्यतीवाल्पसंख्या तेषां, सत्यवसरे दूरात्तेषामागमनं भवति, न त्वेको बहूनामेकदैव रक्षणं कर्तुं प्रभवेच्च ।

अतोऽपि, आर्यसभ्यतासंप्लावितान्तःकरणाः ! भारतवर्षीयाः ! भारतजनन्या गोमातुः संरक्षणे प्रयतन्तां प्राणपणैरपि । गवार्थे यस्त्यजेत्प्राणं तस्य लोकाः सनातनाः ॥ इति ॥

---

# वैदिकसनातनधर्म्मरहस्यम्।

ॐ शंरुद्राः शंवसवः शमादित्याः शमग्नयः।
शंनो महर्षयो देवाः शंवेदाः शंबृहस्पतिः॥

अयि मान्यमहानुभावाः!

जानन्त्येव भवन्तो यत्किल साम्प्रतं सनातनधर्म्मोपर्य्यापत्तिः कीदृशी समुत्पन्ना। सनातनधर्म्मसंरक्षणे सत्येवास्माकं सनातनार्य्यहिन्दुजातीनां हिन्दुत्वं स्थास्यति। अतः सनातनधर्म्मस्य मूलमन्विष्य प्रथमतो मूलरक्षणोपायश्चिन्त्यः। मूलसंरक्षणे पुनरां सहस्रशाखात्मकस्य सनातनधर्म्मवृक्षस्य रक्षा स्यादेव। ततस्तच्छायाश्रितानामखिलभारतीयानामस्माकं त्रिविधतापाऽनपनिवारणमैहिकाऽमुष्मिकाऽभीष्टफलावाप्तिश्च भविष्यत्येव। अतस्तदिदानीं विचार्य्यते किन्तावत्सनातनधर्म्मस्य मूलमिति। तथाहि—

स्वर्गापवर्गदो नृणां योऽयं धर्म्मः सनातनः।
तस्य मूलमसौ वेदः कामिनां कल्पपादपः॥

नृणां मनुष्याणां स्वर्गापवर्गदः स्वर्गमोक्षप्रदो योऽयं सनातनधर्म्मस्तस्य मूलमसौ वेदः स चाऽयं कामिनां कल्पपादपः कल्पवृक्ष इव मनोऽभिलषितान् सर्वानेव पदार्थान्पूरयतीत्यर्थः।

ननु कोऽसौ वेदः योऽयं सनातनधर्म्मस्य मूलमिति प्रतिपाद्यते। अत्रोच्यते मन्त्रब्राह्मणयोर्वेदनामधेयमिति मन्त्रब्राह्मणात्मकशब्दराशेर्वेद इति संज्ञेतत्कात्यायनेन प्रतिपादितम्। स चाऽयं वेदस्तावदस्माकमार्य्यहिन्दुजातीनां सनातनधर्म्मविषये स्वतः प्रामाण्यात्मकोऽपौरुषेयश्च वरीवर्त्ति। अत एव ब्राह्मणादिद्विजातयो हि मौञ्जीबन्धनानन्तरं यथाविधिवेदाध्ययनं कृत्वैव विहितयजनादिद्वारा कर्म्मफलानि लब्ध्वा सर्वोन्नतिपथेऽग्रगण्या भवन्ति। उपनयनञ्च वेदाध्ययनार्थमेव भवति न चोपनयनमन्तरा वेदाध्ययनं न च वेदाध्ययनमन्तरा जीवनोत्कर्षसाधनं भवितुमर्हति। अत एव द्विजातीनामुपनयनकाला वेदे दरीदृश्यन्ते—

"वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमिति"।

अतः स्वाध्यायाध्ययनमावश्यकत्वेन श्रुत्या प्रतिपादितम्।

"अहरहः स्वाध्यायोऽध्येतव्यः" इति।

पुरा तु यथाविधि वेदाध्ययनादिनिरता अस्माकं पूर्वपूर्वजा ऋषिगणा

ईदृक् साधारणधीशक्तिसम्पन्ना मेधाविनोऽतीतानागतपदार्थानां प्रत्यक्षदर्शिन आसन्, यद्भयादिन्द्रादयोऽपि सर्वदैव त्रस्यमाना वर्त्तन्ते स्म अन्येषां पुनः का कथा । ते खलु निरतिशयमेधावैशिष्ट्यात्समेत्र मन्त्रब्राह्मणात्मकशब्दराशिमखिलं वेदं जिह्वाग्र एव धारयन्तः सकलैहिकामुष्मिकभद्रमाप्नुवन्तो ब्रह्मसायुज्यं प्रापुरिति गुरुशास्त्रपरम्परातः श्रूयते । स च वेदः पुरा खलु एक एवासीत्तस्य शाखाविभागस्तु भगवता कृष्णद्वैपायनेन कृतः । अत एव तस्य वेदव्यास इति संज्ञाऽभवदिति जनश्रुतिरस्ति । शाखाविभागे यदाह भगवान्वेदभाष्यकारो महीधरः । तद्यथा—

"तत्राऽऽदौ ब्रह्मपरम्परया प्राप्तं वेदं वेदव्यासो मन्दमतीन्मनुष्यान् विचिन्त्य तत्कृपया चतुर्धाऽव्यस्य ऋग्यजुःसामाथर्वाख्यांश्चतुरो वेदान् पैलवैशम्पायनजैमिनिसुमन्तुभ्यः क्रमादुपदिदेश ते च स्वशिष्येभ्यः । एवं परम्परया सहस्रशाखो वेदो जातः । तत्र व्यासशिष्यो वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्वेदमध्यापयत् तत्र दैवात्केनाऽपि हेतुना क्रुद्धो वैशम्पायनो याज्ञवल्क्यं प्रत्युवाच मदधीतं त्यं त्यजेति । स च योगसामर्थ्यान्मूर्त्तां विद्यां विधायोद्ववाम । वान्तानि यजूंषि गृह्णीतेति गुरूक्ता अन्ये वैशम्पायनशिष्यास्तित्तिरयो भूत्वा यजूंष्यभक्षयन् । तानि बुद्धिमालिन्यात्कृष्णानि जातानि । ततो दुःखितो याज्ञवल्क्यः सूर्य्यमाराध्य अन्यानि शुक्लानि यजूंषि प्राप्तवानिति" ।

एवं यजुर्वेदस्य कृष्णत्वं शुक्लत्वं च जातम् । स च सर्वतन्त्रस्वतन्त्रो वेदः सनातनार्य्य-हिन्दुजातेरेकतन्मात्रतया महादुर्गस्वरूप एव दृश्यते । तस्मिन्महाप्राचीनवेदे महाप्राकारमध्यस्थेव सनातनार्य्यहिन्दुजातिः सुरक्षिताऽस्ति । एवं वेदप्रभावादेव सनातनधर्मोऽपि चातुर्वर्ण्यसमाजस्याक्तिन्वे पापमयमहाकालकरालव्यालकलियुगप्रेरितस्वेच्छाचारप्रचारवैदिकधर्मनिरा-करणे च प्रवृत्तोऽस्तीति सुधियो विभावयन्तु । इदानीन्तु पापमयमहाकालकराल-घोर-कलिकालेऽस्मिन्यानि मतमतान्तराण्यनुदिनं समुद्भवन्ति तानि सर्वाण्यपि सनातनधर्म्मखण्डनायैव प्रवृत्तानीव समयप्राबल्यादिदानीन्तनाऽऽर्य्यहिन्दुजाति-रप्यनार्य्य-जातिरिवावैदिकधर्म्मप्रवृत्ता सती वैदिकसनातनधर्म्मखण्डनार्थमेव बद्धपरिकरा भवति । अतः सनातनधर्मस्य रक्षणोपायश्चिन्त्यः । न हि वेदप्रचारादन्यत्किञ्चिदप्युपायान्तरं दृश्यते । यतोऽयं वेदः परमेश्वरस्य श्वासनिःश्वासवत्सनातनस्तस्माद्वेदप्रतिपादितवर्णाश्रमादिधर्मोऽप्यस्माकं सनातन एव ।

अन्येषां धर्म्माणां मनुष्यप्रतिपादितत्वान्मनुष्याणामज्ञानुगत्वात्

सत्यं देवा अनृतं मनुष्या इति श्रुतेः।

अत एव अनृतात्सत्यमुपैमि मनुष्यधर्मतो देवत्वं प्राप्नोमीति व्रतग्रहणे वेदे विस्तृतमस्ति। एवं यत्प्रमाणको धर्म्मः सनातनः सोऽयं वेदः सनातनधर्म्मस्य मूलमिति जानन्तु भवन्तः। एवं वेदानुगामिनी स्मृतिरपि सनातनधर्म्मस्य मूलमेव। अतो मनुनाऽपि प्रतिपादितं—

"वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥" इति॥

अतः सनातनधर्म्मः श्रौतस्मार्त्तधर्म्मरूपेण द्विधा विभक्तोऽस्ति। तत्राग्निहोत्राद्यनुष्ठानरूपः श्रौतधर्म्मस्त्विदानीं विलुप्तप्राय एव दृश्यते। वेदाध्ययनाध्यापनाभावादाधुनिकाऽऽर्य्यहिन्दुजातेरैकान्ततो वैदिकधर्म्मविमुखत्वेन सोमयागादिश्रौतानुष्ठानाभावाच्च इडा-बर्हिः-शम्या-स्फ्य यूप-चषाल-चमस-कपालप्रभृति-प्रसिद्धान्यपि यज्ञीयपात्राणि व्यवहाराभावात्तान्यद्यधुना यज्ञीयपात्रविशेष इति शब्देनाभिधीयन्ते। श्रौतानुष्ठानरूपवैदिकधर्म्मस्याऽयं समाचारः। स्मार्त्तानुष्ठानरूपवैदिकधर्म्मस्तु यावच्छिखासूत्रं हिन्दुत्वपरिचयार्थं यथाकथञ्चिन्नाममात्रेणाऽपि स्थास्यतीत्यनुमीयते। किन्तु तत्राऽपि वैदिकरहस्य-विज्ञानाभावात्तत्र मन एव न रमते केषाञ्चिदपि। अतो वास्तविकतया कर्म्मसम्पादनमपि न भवति। प्रत्युत तद्वैपरीत्यफलमेव जायते। फलप्राप्त्यभावादार्य्यसनातनहिन्दुजातिः स्ववैदिकवर्णाश्रमादिसर्वधर्म्माश्रयसनातनधर्म्मं विहाय वेदविरुद्धस्वधर्म्मेतरधर्म्ममाश्रयति। अतोऽस्माकं सनातनधर्म्मो दिनानुदिनं क्षीणतामेति चातुर्वर्ण्य-समाजेऽपि जनसंख्या दिनानुदिनमपचीयते। अतो वैदिकरहस्यज्ञानार्थं वेदाध्ययनाध्यापनतात्त्विकश्रवणमनननिदिध्यासनप्रचारस्याऽतीवावश्यकता साम्प्रतं भारतेऽस्मिन्वर्त्तते। एतत्प्रचारं विना कथमपि सनातनधर्म्मस्य संरक्षणं न भवितुमर्हति। सनातनधर्म्मस्य रक्षा कर्त्तव्येति वाचारम्भणमात्रेण शशकशृङ्गवदाकाश-कुसुमवद्वन्ध्यापुत्रवदेव संरक्षणमप्यतीव दुर्लभमेवेति विदाङ्कुर्वन्तु सज्जनाः। अतोऽस्य रक्षा सर्वथा विधेया। एतद्रक्षणेनैवास्माकं सनातनार्य्यहिन्दुजातीनां रक्षा स्यात्। उक्तञ्च मनुना।

"धर्म्म एव हतो हन्ति धर्म्मो रक्षति रक्षितः।
तस्माद्धर्म्मो न हन्तव्यो मा नो धर्म्मो हतोऽवधीत्॥" इति॥

स चाऽयं सनातनधर्म्मो वृषभ इवावैदिकधर्म्मानधः कृत्वा रोरवीति तथा च श्रुतिः। "चत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासोऽस्य। त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्याँ आविवेश"।

अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत्।

यद्यत्स्याच्छान्दसं वाक्यं तत्तत्कुर्यात्तु लौकिकम्॥

अनया कारिकया हीनपदान्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथा हि, अस्य वृषभरूपस्य सनातधर्मस्य चत्वारि श्रृङ्गा श्रृङ्गाणि सन्तीति शेषः। निशब्दो बहुलमिति निलोपश्छान्दसः। चत्वारि वर्णा नामाश्रमधर्माणि श्रृङ्गाणि श्रृङ्गरूपाणि सन्तीत्यर्थः। तानि धर्माणि प्रथमान्यासन्निति यज्ञादीनां श्रुतौ मुख्यत्वेन प्रतिपादितत्वात्। श्रृङ्गाण्यपि पशो मुख्यान्येव भवन्तीत्येतत्तात्पर्येणैवेदमुक्तम्। तथा अस्य त्रयः पादा सन्तीति शेषः। त्रिकालसन्ध्यावन्दनरूपास्त्रयः पादाः सन्तीत्यर्थः। सन्ध्यावन्दनक्रिया च द्विजातीनां वैदिकी स्त्रीशूद्रयोश्च तान्त्रिकी सुप्रसिद्धैवास्ति। तथा अस्य द्वे शीर्षे शिरसी स्तः इष्टापूर्ते श्रौतस्मार्त्तकर्मरूपे शिरसी स्त इत्यर्थः। तथा अस्य सप्त हस्ताः सन्तीति शेषः। (आज्जसेरसुगित्यसुगागमः)। आग्नसौर्य्यगाणपत्यशाक्तशैववैष्णवब्राह्मणरूपाः हस्ताः हस्तस्थानीया इत्यर्थः। रवि विनायकश्चण्डी ईशो विष्णुस्तु पञ्चम इत्युपक्रम्य अग्निं ब्रह्माणमेव चेत्युक्तेः। स चायं सनातनधर्मो वृषभरूपस्त्रिधा बद्धो रोरवीति प्रकारवचने धात्रिप्रकारैर्नित्यनैमित्तिककाम्यैः कर्मभिर्बद्धो वृषभः कामानां वर्षिता रोरवीति रुशब्दे यङ्लुगन्तम् अत्यर्थं शब्दं करोति। वृषभ इवान्यानवैदिकधर्मानधः कृत्वा एकोऽहं सनातनधर्मो नापरोधर्मो मत्समः कश्चिदिति ब्रवीतीत्यर्थः। स एष महोदेवः महति पूजयति मह्यते वा जनैरिति महो महान् देवः द्युतिस्तुति क्रीडादियुक्तो मनुष्याणामुपजीव्यः स्वर्गमोक्षप्रदः सनातनधर्मो मर्त्यान्मनुष्यानाविवेश अभिव्याप्य स्थितः। यतोऽयं सनातनधर्मो मनुष्यानभिव्याप्य स्थितस्तस्मादनादिसृष्टिकालत एव इयमार्य्यजातिरपि सनातनार्य्यहिन्दु-जातिरिति कथ्यते। एवमार्य्य इति विशेषणं हिन्दुरितिविशेषणं च अनादिसृष्टिकालत एवेति विदाङ्कुर्वन्तु सज्जनाः।

"भासंयतमिन्द्रणः स्वस्तिं शत्रुतुर्य्याय बृहतीममृध्राम्।

यया दासान्यार्य्याणि वृत्राकरो वज्रिन्सुतुका नाहुषाणि॥"

इति श्रुतेर्वैदिकधर्मानुष्ठातॄणामेवास्माकमार्य्य इतिविशेषणमनादि-सृष्टिकालत एवोपलभ्यते, हिन्दुरिति च।

हिन्दुधर्मप्रलोप्तारो जायन्ते चक्रवर्त्तिनः,।

हीनञ्च दूषयत्येवं हिन्दुरित्यभिधीयते॥ (मे० तं० २७ प०) इत्यागमश्रुतेर्वेदबोधित-कर्मानुष्ठातॄणामेव मनुष्याणां हिन्दुविशेषणमपि प्राचीनमेव। ननु वेदेषु क्वापि न हिन्दुशब्दो दृश्यते" इति चेत्प्रोच्यते—हिन्दुत्वप्रतिपादकनिगमश्रुतेः

सहस्रशाखान्तर्गतत्वात्तासां शाखानां म्लेच्छराजाधिकारे विनष्टत्वादिदानीं यथोपलब्धशाखासु हिन्दुशब्दप्रतिपादकः कश्चिन्मन्त्रो नोपलभ्यते। तेन किं तस्मादिदं हिन्दुविशेषणं न प्राचीनमिति न, किन्तु प्राचीनमेव। श्रुतिस्तु द्विविधेत्यथाह हारीतः—अथातोधर्म्मं व्याख्यास्याम इत्युपक्रम्य श्रुतिप्रमाणको धर्म्मः, श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी चेति। तत्प्रमाणको वेदमूल एव धर्म्मः सनातनधर्म्म इति गरुडं प्रति श्रीमद्भगवदुक्तिः। तथा च भविष्यपुराणे—

धर्म्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम्।
स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः॥
अस्य सम्यगनुष्ठानात्स्वर्गो मोक्षश्च जायते।
इहलोके सुखैश्वर्य्यमतुलञ्च खगाधिप॥ इति॥

स चाऽयं सनातनधर्म्मः श्रुत्युक्तस्मृत्युक्ततन्त्रोक्तपुराणोक्तसूत्रोक्तभेदेन पञ्चधा विभक्तोऽपि सर्वोऽपि धर्म्मो वेदमूल एव। अतो मनुनाऽप्युक्तं—

श्रुतिस्तु वेदो विज्ञेयो धर्म्मशास्त्रं तु वै स्मृतिः।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्म्मो हि निर्बभौ॥
योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः।
स साधुभिर्बहिष्कार्य्यो नास्तिको वेदनिन्दकः॥
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्म्मस्य लक्षणम्॥

तदेतत्सनातनधर्म्मस्य वृषभत्वं कामाभिवर्षणत्वादेव युक्तियुक्तमेव। अतोऽस्यवृषभत्वं मनुनाप्युक्तम्।

वृषो हि भगवान्धर्म्मस्तस्य यः कुरुते ह्यलम्।
वृषलं तं विदुर्देवास्तस्माद्धर्म्मं न लोपयेत्॥
एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति॥ इति॥

तदेतस्य रक्षणं सर्वथा विधेयं किन्तु सनातनधर्म्मस्य रक्षणं वेदरक्षणं विना न भवितुमर्हति यथा निष्कोशा राजानः परतो भयं प्राप्य पलायन्ते तद्वत्सनातनार्य्यहिन्दु-जातिरपीदानीं परतो भयमवलोक्य सपदि पलायते, पलायते एतदेव न किन्तु सुपलीभ्य परधर्म्मनिरताऽपि भवति। सनातनार्य्यहिन्दुजातेर्वेद एव शेवधिर्निधिः कोश इत्यर्थः। तदेतद्वेदकोशस्य रक्षणञ्च कथं स्यात्। वेदस्तु सुतरां परोक्षवादः वेदः परोक्षवादोऽयं बालानामनुशासनमित्याद्युक्तेः। तदर्थोऽपि वेदभाष्यकारैः परोक्षशब्देरेव क्वचित्कुत्रचित्कुत्रचित्तु प्रत्यक्षशब्दैरपि।

जनास्त्विदानीमाध्यात्मिकशक्तेरभावात्तादृशवेदार्थं भ्राम्यन्तीत्येव न किन्तु तादृशमर्थं दृष्ट्वा तद्रहस्यं वैदिकगूढार्थतत्त्वमज्ञात्वा वेदभाष्यकारान्विनिन्दन्ति च । किन्त्वन्धः स्थाणुं न पश्यतीत्यत्र पुरुषापराध उत स्थाणोरपराध इति विचारे यथा पुरुषापराध एव सर्वैः कथ्यते तथाऽत्राप्यज्ञपुरुषापराध एव न भाष्यकारापराध इति विचारं कुर्वन्तु भवन्तः । कोविदकुलकैरवकलाकराणां महामान्यवतां वेदार्थप्रकाशकानां जगन्माननीयसायणोवटमहीधराचार्याणां कृतज्ञतामुद्वहन्जन्मसहस्रेणाऽपि तदानृण्यं प्राप्तुमर्हं नाहम् । यद्यपि तत्कृतवेदभाष्याणि साम्प्रतं वर्त्तन्ते तथाऽपि वेदार्थगूढतत्त्वं जना नैव जानन्ति, जानन्ति चेत्त्रिचतुरा एव जानन्ति । नैर्वेदार्थो न कृतश्चेत्तर्हि सनातनधर्मविरोधिनामवैदिकधर्मिणां मतखण्डनार्थं सनातनधर्मिणः कथं प्रवर्त्तेरन् । तर्हि सनातनधर्मस्य कीदृशी परिस्थितिः स्यादिति विचार्यताम् । तत्कृतवेदार्थः कीदृशः कीदृशश्च तत्पाण्डित्यं तत्तु सारज्ञा एव जानन्ति किमहं प्रब्रवीमि । अश्वमेधप्रकरणे आहमजानीत्यश्वसमीपे शेते. अश्वशिश्नमुपस्थे कुरुते वृषावाजीति, एवमन्येऽपि यत्र कुत्रचिदस्ति, तत्र सर्वत्र प्रत्यक्षवृत्त्या शब्दार्थं ज्ञात्वाऽश्लीलार्थमनुभवन्ति जनाः, किन्तु वास्तविकतया विचारणे परोक्षार्थवृत्त्या शब्दार्थावगमे लेशमात्रमपि नाश्लीलम् । त्रिविधा हि शब्दव्यवस्था प्रत्यक्षवृत्तयः परोक्षवृत्तयः अतिपरोक्षवृत्तयश्चेति । एतदर्थमेव निरुक्तं प्रवृत्तं तथा चोक्तम् ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।

धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥ इति ॥

पाणिनिनाऽपि तथैव सूचितं व्यत्ययो बहुलं, बहुलं छन्दसि, छन्दस्युभयथेत्यादि । तत्राऽपि अष्टौ व्याकरणानि, चतुर्दश निरुक्तानि, इत्याह भगवाञ्छङ्कराचार्यः । कथन्तर्हि भ्रमितव्यं विचारदृष्ट्याऽऽध्यात्मिकतपोयोगबलेन वेदार्थतत्त्वानुसन्धानं सर्वथा विधेयम् । भाष्याभिप्रायानभिज्ञैराद्यैः कैश्चिद्दयाक्षिप्तं भाष्यकारान्प्रति तन्निराकर्त्तुमेव वेदभाष्यमण्डनात्मक आश्वमेधिकमन्त्रार्थप्रकाशनामको ग्रन्थो मया महता परिश्रमेण विरचितः । स चेदानीं न मुद्रापितस्तद्ग्रन्थावलोकनेनैव भाष्याभिप्रायानभिज्ञानां भ्रान्तिर्दूरं गमिष्यति । अन्येषां सारग्राहकाणां विदुषां चातीवसन्तोषो भविष्यति । अत एवास्मिन्नल्पलेखेऽपि विषयपरिचयार्थं प्रियपाठकानामामोदार्थञ्च तत्रत्यस्यैकस्य मन्त्रस्य सङ्क्षिप्तमन्त्रव्याख्यां दर्शयिष्ये । एवं स्मार्त्तपक्षे ये केवल वैदिकमन्त्राः सन्ति तेषां मन्त्राणामर्थास्तु पूर्वाचार्यैर्कृत-श्रौतीयव्याख्यारूपाः स्मार्त्तपक्षीययजनयाजनादिकर्मसु कथञ्चिदपि न सङ्गच्छन्ते ? हलायुधशत्रुघ्नगुणविष्णुकृतस्मार्त्तीयव्याख्याभिरपि न सम्य-

ध्यन्ते तत्तद्ग्रन्थेष्वपि श्रौतीयव्याख्येयमन्त्रार्थवत्त्वात् । यथा गणानान्त्वेति गणपतिपूजाम्, अम्बे अम्बिके इति शक्तिमात्रपूजाम्, "अग्निर्मूर्द्धादिवः" इति कुजपूजाम्, उद्बुध्यस्वेति बुधपूजां, शन्नोदेवीति शनिपूजां, कयान इति राहुपूजां विष्णोरराटमिति विष्णुपूजां वरुणस्योत्तम्भनमसीति वरुणपूजां कुर्वन्ति सनातनधर्म्माणः । किन्तु गणानान्त्वेत्यत्र अम्बेअम्बिके इत्यत्र च अश्वस्तुतिः। अग्निर्मूर्द्धेत्यत्र उद्बुध्यस्वेत्यत्र च अग्निस्तुतिः । शन्नोदेवीत्यत्र जलस्तुतिः । कयान इत्यत्र इन्द्रस्तुतिः । विष्णोरराटमित्यत्र मण्डपस्तुतिः । वरुणस्योत्तम्भनमित्यत्र शकटस्तुतिः पूर्वाचार्य्यकृत श्रौतीयव्याख्याभिरवबुध्यते। ते मन्त्रार्थास्तत्तद्देवतापूजनोपयोगितां स्मार्त्तं न गमयन्ति । न हि अन्यार्थस्तुत्याऽन्यः कश्चित्तुष्यति ॥ कथन्तर्हि अश्वादिस्तुत्या गणपत्यादिस्तुष्येत् । अतस्तत्र केषाञ्चिदपि मन एव न रमते मनोयोगाभावात्सम्यगनुष्ठानमपि कर्त्तुं न शक्यते कैश्चिदपि । एवं वैदिकमन्त्रार्थतत्त्वज्ञानाभावादिदानीन्तनाऽर्य्यहिन्दुजातिर्दिनानुदिनं शक्तिहीना क्षीणप्रभावा हतश्रीरिव दृश्यते । तत्राऽपि वेदार्थगूढतत्त्वज्ञानाभाद्ब्राह्मणादिद्विजातिजनता तेजोविहीना मन्त्रगणश्च विनियोगहीनः कर्म्मसमुदायश्च फलहीनः फलवृन्दश्च सुखहीनमिति सकलजनानुभवप्रसिद्धं प्रत्यक्षवदेवाभाति किमहं प्रब्रवीमि । वेदे कीदृग्गूढार्थतत्त्वमस्ति तन्निम्नलिखितमत्कृतमन्त्रार्थतो ज्ञेयं तस्यैतादृशगूढतत्त्वविज्ञानस्य साम्प्रतं भारतेऽस्मिन् कीदृगावश्यकत्वं वर्त्तते तदपि विचारणीयं विचार्य्य च भवन्तः स्वयमपि गूढतत्त्वान्वेषणे तत्प्रचारकरणे च बद्धपरिकरा भवन्तु । एतद्विज्ञातुं स्वस्वरुचिं प्रकटयन्तः पौनपुन्यमाज्ञापयन्तो मामपि प्रोत्साहयन्तु श्रीमन्तः ।

अयि प्रियसज्जनाः ! वेदे कीदृग्गूढार्थतत्त्वमस्ति तदिह दृश्यतां
मत्कृतमन्त्रभाष्ये तथाहि—

### मूलमन्त्रः

ॐगणानान्त्वा गणपतिꣳहवामहे प्रियाणान्त्वाप्रियपतिꣳहवामहे निधिनान्त्वा निधिपतिꣳहवामहे व्वसोमम । आहमजानि गर्भधमात्वमजासि गर्भधम् ॥

अथास्य संक्षेपतोव्याख्या विस्तरतस्तु मत्कृताश्वमेधिकमन्त्रार्थप्रकाशनामकग्रन्थतो ज्ञेया । श्रौतकर्म्मकाण्डे अश्वमेध्ययज्ञ अश्वालम्भनोत्तरं प्रकृतिवद्विकृतिः कर्त्तव्येतिनियमात्प्राकृतिक-वैदिकमन्त्रैरश्वगतशवत्वदोषनिवृत्त्यर्थमश्वस्य प्राणशोधनं प्राणदानञ्च विधाय पश्चाद्गणानान्त्वेति यजमानपत्न्यस्त्रिः परियन्ति । अशूङ्व्याप्तौ स्वादिः । ततश्च अशूप्रुषिलटिकणिखटिविशिभ्यः क्वनिति क्वन्प्रत्ययः । अश्नुते चराचरं सर्वं जगदित्यश्वः, सर्वव्यापकः परमेश्वर इत्यभिप्रायः । "अतिरिक्तं

पदं त्याज्यं हीनं वाक्ये निवेशयेत् । यद्यत्स्याच्छान्दसं वाक्यं तत्तत्कुर्यात्सुलौकिकम्" ॥ इतिकारिकया हीनपदान्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे अश्व सर्वव्यापक परमेश्वर त्वा त्वां हवामहे आह्वयामः। अस्मिन्नश्वमेधयज्ञे वयं यजमानपत्न्यः इतिशेषः। किम्भूतं त्वां गणानां मध्ये गणपतिं गणाः कूष्माण्डादयः साध्याश्च गणदेवता इति वा तत्पालकमित्यर्थः। तथा च श्रुतिः नमोगणेभ्यो गणपतिभ्यश्च-वोनम इति। विराड्रूपिणं परमात्मानं पूजनार्थमाह्वयाम इतिभावः प्रदक्षिणायाः पूजाङ्गत्वात् त्रिःपरियन्तीत्यादिश्रुतेश्च। तथा च हे अश्व वयं यजमानपत्न्यस्त्वा त्वां हवामहे आह्वयामः, अस्मिन्नश्वमेधयज्ञे इतिशेषः। किम्भूतं त्वां प्रियाणां मध्ये प्रियपतिं प्रियाभक्ता एव यो मे भक्तः स मे प्रियइत्युक्तत्वात्। तेषां मध्ये तत्पालकमित्यर्थः सहि भक्तान्पाति। उक्तञ्च अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्, इति ॥ तथा च हे अश्व त्वा त्वां हवामहे आह्वयामः वयं यजमानपत्न्योऽस्मिन्यज्ञ इतिशेषः। किम्भूतं त्वां निधीनां मध्ये निधिपतिं निधयो महापद्मादयः शेवधिष्टेऽहमस्मीतिश्रुते ब्रह्मविद्यारूपा वा निधयस्तत्पालकमित्यर्थः। सुखनिधेः पालकं निधिरूपेण वा पालकं नहि तस्मात्परोऽन्यः कश्चिन्निधिः योऽयं विज्ञानमयः परमात्मा यस्मात्परं न हि किञ्चिदस्ति स सर्वदैव स्वभक्तान् रक्षति न हि तद्भक्तस्य विनाश इतिभावः। उक्तञ्च-"कौन्तेय! प्रति जानीहि न मे भक्तः प्रणश्यतीति"। न हि तद्भिन्नोऽन्योनिधिर्महापद्मादिर्नितरां सुखयति। अत उक्तं-मा गृधः कस्यस्विद्धनमिति। वसो ममेति-वस निवासे इत्यस्मात्-शृस्वृस्निहित्रप्यसिवसिहनिक्लीदिबन्धिमनिभ्यश्चेति औणादिक उप्रत्ययः। वसन्ति सर्वभूतान्यस्मिन्निति वसुर्वासुदेवाख्यः परमेश्वरस्तत्सम्बुद्धौ हे वसो सर्वजगन्निवास वासुदेवाख्य परमेश्वर त्वं ममेत्यत्रवचनव्यत्ययः। अस्माकं यजमानपत्नीनामित्यर्थः पतिर्भूया इति शेषः। पातीति पतिः रक्षको भवेत्यभिप्रायः। आहमजानीति-प्रदक्षिणानन्तरं राजमहिषी अश्वसमीपे शेते शयनञ्चात्र विषयतो मनोनिवृत्त्यर्थं चक्षुरुन्मीलनं यथा कश्चित्पूजनावसरे चक्षुर्द्वयमुन्मील्य परमेश्वरं ध्यायति तद्वदिहाऽपि प्राकृताश्वशरीरे पूर्वोक्तप्रकारेण विराड्रूपिणं परमेश्वरमावाह्य तत्रोपविश्य नेत्रोन्मीलनेन चित्तैकाग्र्यं विभाव्य वक्ष्यमाणलक्षणं स्वप्रयोजनं प्रार्थयति प्रसिद्धस्वापस्य तदानीं तत्र सम्भवानर्हत्वात्। प्रजावै पशवोगर्भ इत्यादिश्रुतेरिहमन्त्रगतगर्भशब्दः प्रजापशुवाचकः 'रेतः शुक्रेऽथतेजसीति' कोषादौ दर्शनादिह पूर्वाचार्य्यं कृतवेदभाष्यपङ्क्तिस्थरेतः शब्दस्तेजोवाचकश्च। गर्भधमिति गर्भोपपदाद्धाते र्ददातेर्वा आतोऽनुपसर्गे क इतिकप्रत्यये आतोलोपइटिचेत्याकारलोपे धातुपदे हलोव्यत्ययेन गर्भधमिति भवति। ततोऽयमर्थः—हे अश्व

सर्वव्यापक परमेश्वर गर्भधं डुधाञ्धारणपोषणयोः गर्भं प्रजापशुरूपं दधातीति गर्भधं प्रजापशुधारक प्रजापशुपोषकं प्रजापशुप्रदं वा रेतस्त्वदीयं तेजः अहम् अजानि अजगतिक्षेपणयोस्तत आसंशायां लोट् आकृष्य मनसा आभाव्य स्वविषये प्रक्षिपामि। त्वं च गर्भधं प्रजापशुधारकं प्रजापशुपोषकं प्रजापशुप्रदं वा स्वीयं ब्राह्मं तेज आअजासि लोडर्थे लटि आ अज आकृष्य मनसा आभाव्य प्रक्षिपेत्यर्थः। प्रजा पशवश्च ब्रह्मणस्तेजोंशरूपा एव। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवीतिश्रुतेः। तत्सृष्ट्वा तदेवानुप्राविशदिति च। ममैवांशो जीवलोके जीवभूतः सनातन इति भगवद्वाक्याच्च। राज्ञोऽर्धशरीरत्वाद्राजमहिषी तदर्थं प्रजापशुधारकं प्रजापशुपोषकं प्रजापशुप्रदं वा ब्राह्मं तेजो याचते। नहि ब्राह्मं तेजो विना सम्राट् सर्वथा जगद्रक्षणसमर्थः स्यादिति भावः। तत्र तस्य परमोधर्म्मः, राज्ञां च परमोधर्म्मः प्रजानां परिपालनमितिस्मृतेः मन्त्रस्यास्य अश्वमेधप्रकरणे पठितत्वादयमर्थः पूर्वाचार्य्यकृतसर्वभाष्याऽनुगः। न चात्र लेशमात्रमप्यश्लीलम्। नह्यश्वशब्देनेह प्राकृतोऽश्वोऽभिप्रेतः। नहि प्राकृताश्वस्य रेतः सोमो भवितुमर्हति। न चालब्धस्य प्राकृताश्वस्य रेतो हिरण्यं भवितुमर्हति तदुभयं श्रुत्याऽभिहितं यथा शु० य० वे० अ० २३ क० ६२ अयꣳ सोमोवृष्णोऽश्वस्यरेत इति। अश्वस्य त्वाआलब्धस्य रेत उदक्रामत्तत्सुवर्णꣳ हिरण्यमभवद्यत्सुवर्णꣳ हिरण्यं ददात्यश्वमेव रेतसा समर्धयतीति श० ब्रा० १३।१।१।३। अश्वशब्देन विराड्देही सच्चिदानन्दाख्यः परमेश्वरोऽभिधीयते" इति तु उपनिषत्सु सुप्रसिद्धम्। यथा च वृहदारण्योपनिषदि ऊषा वाऽअश्वस्य मेध्यस्य शिरःसूर्य्यश्चक्षुर्वातः प्राणोमुखमग्निः सम्वत्सर आत्मेति। अनेन मन्त्रेण हितं ब्राह्मं तेजः अश्वशिश्नमुपस्थे] कुरुते। वृषावाजीति अश्नुते सर्वं जगदित्यश्वः सर्वव्यापकः परमेश्वरस्तस्य शिश्नं शिषधातुर्हिंसार्थस्तत औणादिकनक्प्रत्ययः। शेषति तमोऽज्ञानं नैशं तमो वा अपहन्तीति शिश्नं गायत्रीमन्त्रप्रतिपाद्यं वरेण्यं सर्वैः प्रार्थनीयं ब्राह्मं तेजः उपस्थे समीपस्थे राज्ञोहृदये हार्दसम्बन्धेन कुरुते स्थापयतीत्यर्थ इत्थमवगन्तव्यं सर्वैरेव सनातनधर्म्मिभिर्नाऽत्राऽपि किञ्चिदश्लीलमिति विदाङ्कुर्वन्तु सज्जनाः।

गणानान्त्वेति मन्त्रेण स्मार्त्तपक्षे गणपतिपूजां कुर्वन्ति द्विजातयः। अतः स्मार्त्तपक्षेऽस्य मन्त्रस्य व्याख्यान्तरं यथा—गणानान्त्वेतिमन्त्रे गणपतिलिङ्गश्रवणादस्य मन्त्रस्य गणपतिपूजायां तदीयहोमादौ च विनियोगः। लिङ्गञ्च शब्दसामर्थ्यमेव। तत्र मीमांसायां सुप्रसिद्धं शब्दसामर्थ्यं लिङ्गमिति। अनेन मन्त्रेण गणपतिं पूजयेदित्यत्र स्मृतिरपि प्रमाणम्। तथा च गणानान्त्वेति मन्त्रेण गणेशं पूजयेत्सुधी-

रिति १। "अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत्। यद्यत्स्याच्छान्दसं वाक्यं तत्तत्कुर्य्यात्तु लौकिकम्" ॥ अनया कारिकया हीनपदान्याहृत्य व्याख्यायतेऽयं मन्त्रः । हे गणपते त्वा त्वां हवामहे आह्वयामः वयं यजमाना अस्मिन्पूजनकर्म्मणि, अस्मिन्हवनकर्म्मणि, अस्मिन्यात्रा काले वेति शेषः । यजमानस्य भार्य्यापुत्राद्यपेक्षया हवामहे इति बहुवचनमात्मनि गुरुत्वाद्वा बहुवचनम्ः किम्भूतं त्वां गणानां मध्ये गणपतिम्। गणास्त्वादित्य प्रभृतयः। तथाहि—आदित्या द्वादशप्रोक्ता विश्वेदेवा दश स्मृताः। वसवश्चाष्टसंख्याताः षट्त्रिंशत्तुषितामताः ॥ आभास्वराश्चतुःषष्ठिर्वाताः पञ्चाशदूनकाः । महाराजिकनामानो द्वेशते विंशतिस्तथा ॥ इति तेषां देवगणानां मध्ये गणपतिं तत्तद्गणपालकमित्यर्थः ः अथवा गणाः सेना विशेषाः सेनामुखं गुल्मगणौ वाहिनी पृतनाचमूरिति तेषां मध्ये तत्पालकमित्यर्थः ।

यो हि देवगणानां पालकः सेनाविशेषाणाञ्च नायकस्तस्य मोदृशानामकिञ्चनानां पालने कतमः श्रमः न कोऽपीत्यर्थः। अतोऽस्माकं सर्वविघ्नोपद्रवमपहायाऽस्मद्रक्षणार्थं त्वया यतितव्यमितिभावः। तथा च हे गणपते! त्वा त्वां हवामहे आह्वयामः वयं यजमाना अस्मिन्पूजनकर्म्मणीतिशेषः । किम्भूतं त्वां प्रियाणां मध्ये प्रियपतिं भक्ता एव प्रिया भवन्ति यो मेभक्तः स मे प्रिय इतिभगवद्वाक्यात्। भक्तजनपालकं त्वामाह्वयामः वयं त्वद्भक्ताः स्मः। अतोऽस्मन्निरुपद्रवार्थं त्वया तथा यतितव्यं यथा वयं सुखिनः स्यामेतिभावः। अथवा दयितं वल्लभं प्रियमितिकोषादौ दर्शनात्प्रियाणां वल्लभानां मध्ये प्रियपतिं प्रियवस्तुपालकं त्वामाह्वयाम इतिभावः । तथा हेगणपते त्वा त्वां हवामहे आह्वयामः वयं यजमाना अस्मिन्पूजनकर्म्मणीतिशेषः। किम्भूतं त्वां निधीनां मध्ये निधिपतिं निधयोमहापद्माद्यः "महापद्मश्चपद्मश्च शङ्खो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्वश्चनिधयोनव ॥" इति तत्पालकमित्यर्थः। नहि द्रव्यं विना किमपि कार्य्यं सम्पत्स्यतेऽकिञ्चनानामतोऽस्मदर्थं द्रव्यलाभेऽपि यतितव्यमित्यर्थः। "विद्याहवै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि असूयकायानृजवेऽयताय न मा ब्रूया वीर्य्यवती तथा स्याम्" ॥ इति श्रुतेर्ब्रह्मविद्यारूपावेदविद्यारूपाऽतियावत्तत्पालकमित्यर्थः ः वेदविद्या यथासुरक्षिताः स्युस्तथा त्वया यतितव्यम् वेदचतुष्टयाभिप्रायेणात्र बहुवचनम्। नहि वेदमन्तरास्माकं किमपि श्रेयः साधनं तस्मात्तद्रक्षणेऽपि त्वया यतितव्यमिति भावः ।

आहमजानीति-"सुतिङ्कृपग्रहलिङ्गनाराणां कालहलच्स्वरकर्त्तृयङां च व्य-

१ स्मृतेर्नाम नास्ति ( सं० )

त्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेनेतिकारिकया अहमित्यत्र सुपः अजानीत्यत्रतिङश्च व्यत्ययो बोद्धव्यः : तेन [वयमजामेतियोज्यम्। अजगतिक्षेपणयोरित्यस्मादासंशायां लोट्। अजातिरिहगत्यर्थः यश्च गत्यर्थः स ज्ञानार्थोऽपि ये ये गत्यर्थास्ते ते ज्ञानार्था इत्युक्तत्वात्। गर्भधमिति गर्भो-पपदाद्धातेर्द्दातेर्वा आतोऽनुपसर्गेक, इतिकप्रत्यये आतोलोप इटिचेत्याकारलोपे डाधातुपक्षे हलो व्यत्ययेन भवति। गर्भोऽपकारकेह्यग्नौ सुखे पनसकण्टके" इति-यादवीयकोषादिह गर्भशब्दः सुखवाचकस्ततोऽयमर्थः। हेगणपते वयं यजमाना गर्भधं सुखपोषकं सुखप्रदं वा त्वदीयं विघ्नोपशमनसामर्थ्यम् आ अजाम आस-मन्ताद्भावेन जानीमेत्यर्थः। त्वं च गर्भधं सुखपोषकं सुखप्रदं वा स्वीयं विघ्नो-पशमनसामर्थ्यम् आअजासि अत्रलोडर्थे लेट्। आअज आसमन्ताद्भावेन जानीही-त्यर्थः। स्वीयसामर्थ्यं ज्ञात्वाऽस्मन्निरुपद्रवार्थं भवता तथा यतितव्यं यथा वयं सुखिनः स्यामेतिभावः। अतस्त्वा पूजयामो वयं त्वञ्चास्माकं सर्वोपद्रवमपहाय सुखं गमयेत्यासंशावाक्यार्थः। स्मार्त्तपक्षे एवमन्येषामपि वैदिकमन्त्राणामर्थान्तरं कृत-वानहम्। अवशिष्टानाञ्च व्याख्यान्तरं कर्त्तुमुत्सहे। इत्थं वैदिकमन्त्राणामर्थ-तत्त्वं ज्ञात्वा कर्म्माणि कुर्य्युश्चेत्सनातनधर्म्मिणो द्विजन्मानस्तर्हि यथाविधियज-नादिद्वारा कर्म्मफलानि झटित्येव लब्ध्वा सर्वोन्नतिपथे पूर्वपूर्वजा महर्षिगणा इवाग्रगण्या भविष्यन्तीति, ध्रुवं जानन्त्वखिलभारतीयाः प्रियपाठकमहोदयाः। किमधिकं विज्ञतमेष्विति शिवम्॥

धर्म्मा अवैदिका स्तावद्भारते प्रसरन्ति वै।
यावद्वेदार्थतत्त्वस्य प्रचारो न भवेदिह॥ १॥
वेदतत्त्वप्रचारेण धर्म्मश्चाऽयं सनातनः।
सर्वानवैदिकान्धर्म्मानधः कृत्वैव जेष्यति॥ २॥

हरिः ॐ शान्तिः शान्तिः शान्तिः॥

ममाल्पज्ञस्य दोषेण यन्त्रदोषेण वा पुनः।
स्खलनं यदभूदत्र क्षन्तव्यं तद्द्विजातिभिः॥ १॥

वेदकर्म्मकाण्डधर्म्म-शास्त्राध्यापको वेदकर्म्मकाण्डाचार्यः

झोपाह्वश्रीदामोदरशर्मा (मैथिलः)

श्री १०८ बालेश्वरीसंस्कृतविद्यालयकरनीबाद,

रामनिवासब्रह्मचर्याश्रम [ वैद्यनाथधाम ]

# विपिन-विलापः।



रचयिता—जगदीशशुक्लः, काव्यतीर्थः ( हेडपण्डितः )
राजराजेश्वरी हाईस्कूल, सूर्यपुरा ( शाहाबाद )

वहसि स्वविशालविग्रहे विपिनाद्यापि छविं विलक्षणाम्।
विविधद्रुमवीरुधौषधी कमनीयां कुसुमश्रियावृताम् ॥ १ ॥
अधुनापि विहङ्गमात्मजाः सुखयन्ति स्वरसम्पदा भृशम्।
शुचिशाद्वलपल्वलादयोऽप्यनिशं त्वां वनमेव संश्रिताः ॥ २ ॥
वसति क्व मुनीश्वरोऽधुना स वशिष्ठः क्व गता च नन्दिनी।
न महोपमखैर्विलोक्यते स दिलीपोऽपि वशी च गोऽनुगः ॥ ३ ॥
अयि कानन किन्न भाषसे क्व हि मेऽद्यादिकविः स विश्रुतः।
करुणार्द्रमनाश्चकार यः खलु रामायणकाव्यमुत्तमम् ॥ ४ ॥
न हि दाशरथी तपस्विनौ खलनिर्वापणतत्परावुभौ।
न विदेहसुता तपस्विनी गहनश्रीस्तव तादृशी कुतः ॥ ५ ॥
मखसम्भवधूम्रसञ्चयो गगने सम्प्रति नैव वीक्ष्यते।
श्रुतिगीतिरसो न लभ्यते बटुवृन्दोऽपि गतः क्व हन्त सः ॥ ६ ॥
मुनिवृन्दवियोगजाव्यथा तव चित्तं वद किन्न बाधते।
रुचिरावसथादिशून्यतां सहसे त्वं कथमीदृशीं बत ॥ ७ ॥
जगतोऽभवमादिशिक्षको न च शिष्योऽप्यहमस्मि साम्प्रतम्।
यदमूृन्विमुक्तवानहं मनसीत्येव नितान्तवेदना ॥ ८ ॥
अहह ! प्रतिकूलता विधेः कथमेषा समुपस्थिता मयि।
गमितासि कथं त्वमीदृशीं दयनीयाञ्च दशां भयप्रदाम् ॥ ९ ॥
हरिणैव हि लालितं भृशं स्वकराब्जेन च चारितं सदा।
प्रहिणस्ति न किं स धैनुकं वनवैतंसिकसञ्चयोऽधुना ॥ १० ॥
सुरसज्जनरक्षणोन्मुखं त्वरितं ब्रूहि गवां प्रियं प्रभुम्।
अवतीर्य्य जगद्द्रुतं विभो करुणासागर ! पाहि साम्प्रतम् ॥ ११ ॥
अभिधेहि मुनींस्तपोबलानवतारय भुवस्तलेऽखिलान्।
अयताम्पुनरुन्नतिं यथा विषयोऽयं खलु भारताभिधः ॥ १२ ॥
स 'सनातनधर्म' वारिदः सुखतोयं मधुरञ्च वर्षतु।
सततं सुरभारती भवेद्विदुषामादरभाजनं दृढम् ॥ १३ ॥

# अद्वैतवादे तर्कवादः।

ले०—पुरोहित तुलसीरामदर्शनशास्त्री ( कविरत्नम् )
श्रीसनातनधर्म सं० पाठशाला प्रधानाध्यापकः। "मथकोटी" ( गढ़वाल )

"ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव केवलम्"

इत्यद्वैतवाद श्रुतिमनुसृत्य किञ्चिद् वितर्क्यते यद्धि अद्वैतवादे जीवब्रह्मणो-रैक्यमुक्तं तत् कथं संगच्छेत ? यतो हि "लक्षण प्रमाणाभ्यां वस्तुसिद्धिर्नतु प्रतिज्ञामात्रेण" इति ( न्यायदर्शन ) डिण्डिमनादमाकर्ण्य नहि प्रत्यक्षादिप्रमाणै जीवब्रह्मणोरैक्यसिद्धिः। यद्दि च तोयतरङ्गादिदृष्टान्तैः जीवस्य चेतनत्वेन प्रत्यक्ष-त्वमद्वैते साध्येत, नहि तथापि साधीयान् पक्षः। ब्रह्मणोऽप्रमेयत्वान्न प्रत्यक्षत्वं जीवस्य च प्रमेयत्वेन प्रत्यक्षत्वम्, तदा प्रत्यक्षाऽप्रत्यक्षयोर्विरुद्धधर्मिणो रैक्या-संभवात्, लक्षणैक्याद्वस्त्वैक्यमिति नियमात्। "अप्रमेयमवितर्क्यं तद्ब्रह्म" इत्येवागमस्य पौनःपुन्येन वादः। यदि हि "एष द्रष्टास्प्रष्टाश्रोता घ्राता रसयिता मन्ता वोद्धा कर्ता विज्ञानात्मापुरुषः" "नित्यो नित्यानां चेतन श्चेतनानाम्" इत्यादि-श्रुतिद्वयबोधनेन जीवब्रह्मणो श्चेतनत्व साम्येन लक्षणैक्य मुररीक्रियते। तथापि—

"भक्षितेऽपि लशुने न शान्तो व्याधिः" इत्याभाणकदिशा—चैतन्येन तयो-र्नैक्यं वक्तुं सुशकम्। सुखित्व दुःखित्वादिना जीवानां भेददर्शनात्। 'तोयत-रङ्गादि निदर्शनमपि नैक्यपोषकम् "सत्यपि भेदापगमे नाथ! तवाहं न मामकी-नस्त्वं सामुद्रोहि तरङ्गः क्वचन समुद्रो न तारङ्गः" इति—अत उक्तालापोऽपि न युक्तियुक्तः।

यदि च तोयतरङ्गादौ कथनमात्रेण भेदः—वस्तुतोजलरूपत्वमेव तथैवा-ज्ञानेनैव जीवानां परस्परं भेदः वस्तुतोऽज्ञाननाशे भेदनाशः" इति धूलिप्रक्षेप-न्यायेन ब्रह्मैवाहमिति प्रत्यक्षगम्यत्वं साध्यते। तन्न मन्महे : तरङ्गादौ अनिल-वेगयोः कारणत्वात् अत्र च ब्रह्मणो जीवरूपत्वे कारणाभावादिति, नहि जीव-ब्रह्मणोरैक्ये प्रत्यक्षादिप्रमाणगम्यता।

---

# पश्चात्तापः ❀

प्रणेता—साहित्याचार्य्यः, पाण्डेयः श्रीकुसुमाकरशर्मा,

( 'पूर्णिमा' सम्पादकः, सं० कालेज मुजफ्फरपुरम् )

—❀:❀—

( क्रमागतः )

"अशान्ता भ्रान्ता क्व प्रणय-तम-दान्ता-वनमिता ?
अथाहो सा सिन्धुं कुपितजनबन्धुं त्वनुसृता ? ।
उताहो तत्प्राणाः जितकुसुमबाणा द्रुततया—
विदेशं यातास्ते रमणहृदयेशं वितरितुम् ?" १

"सखे ! हे रोलम्ब ! स्मरकृतविदेहे मयि दयां—
प्रयान्ती सा दृष्टा क्वचिदपि नु दृष्टा प्रियतमा ? ।
"मयासार्द्धं कान्ता प्रिय ! विरहशान्ता न मिलिता"
'मृतेत्येवं भूयो हतरतिरयो हा निपतति ॥" २ ॥

"कदाचित्कान्तारे क्वचिदपि च पाषण-शयनं—
कदाचिद्दूनो वासः क्वचिदपि हताशः 'क सुमुखि !' ।
कदाचिद्दूनो गेहं क्वचिदपि च मोहं प्रलभते—
विलोक्यैवं भृङ्गो मधुमदनसङ्गो विवदते ॥" ३

"कथं शौण्ड ! प्राज्ये सुखसुकृतराज्ये लुठसि को ?
स्थितेयं सा जाया प्रमद-सहजाया तव पुरः ।
इतिश्रुत्वा मत्तो विरहमदयुक्तो ह्युपविशन्—
न तां दृष्ट्वा ब्रूते "निजसुकृतलुते क रमणी" ? ॥" ४

"नभो दृष्ट्वा कान्तः भुवनविमुखान्तः प्रलपति—
क्षमां याचे कान्ते ! भ्रमसि नयनान्ते कथमिह ।
अधो दृष्ट्वा, कर्णाभरण ! 'कुसुम' ! श्रावयसि किम्—
असारे संसारेऽनुभवति स कष्टं तव निभः ! ? ।५

—❀:—

# वेदपुराणयोरेकवाक्यता।

## ( अश्लीलतानिरासः )

निबन्धा—श्रीदीनाथशर्म्मा शास्त्री सारस्वतः।

( स० ध० कालेजाऽध्यापकः, मुलतान )

( तृतीयसंख्याया अग्रे )

[ 'वेदपुराणयोरेकवाक्यता' इति निबन्धः १-२ संख्यायां ततः ३ संख्यायां मुद्रितः। ततः ७-८ संख्यायाम्। परं तृतीयसंख्यातोऽग्रिमो लेखो न मुद्रितो जातः, अस्यां संख्यायां प्रकाश्यते सः, येन प्रकरणविच्छेदो न स्यात्; पाठकाः प्रागमुं पठित्वा ततः ७-८ संख्यास्थं लेखं पठन्तु; ततोऽग्रिमम्—ले० ]

एवञ्च उपक्रमोपसंहारेऽश्राविते—'वैश्यकर्म च यो विप्रो लोभमोहव्यपाश्रयः। ब्राह्मण्यं दुर्लभं प्राप्य करोत्यल्पमतिः सदा। स द्विजो वैश्यतामेति वैश्वो वा शूद्रतामियात्। स्वधर्म्मात् प्रच्युतो विप्रस्ततः शूद्रत्वमाप्नुयात्' ब्रह्मपु० २२३।१६-१७, महाभा० अनुशा० १४३-१०-११—आभ्यां श्लोकाभ्याम् इह जन्मनि वर्णपरिवर्त्तनस्याऽऽशङ्का, × भवति; परं यदा एतस्मात् प्राक्तनः—

'यश्च विप्रत्वमुत्सृज्य क्षत्रधर्म्मान् निषेवते।
ब्राह्मण्यात् स परिभ्रष्टः क्षत्रयोनौ प्रजायते'।

—ब्रह्मपुरा० २२३।१५, महा० अनु० १४३।६।

अयं श्लोको दृश्यते; तर्हि 'क्षत्रयोनौ प्रजायते, इत्यादिनैतदग्रिमयोः श्लोकयोरपि जन्मान्तरे वर्णपरिवर्त्तनस्य आशयो ज्ञायते; यतो योनावुत्पत्तिरिह जन्मनि तु न जायते, सा वर्त्तमानयोनिस्तु पूर्व्वकर्म्माऽनुसारमेव जाता। एतज्जन्मकर्म्मफलन्तु अग्रिमजन्मन्येव भवति-इति सार्व्वजनीनम्। एतदादिश्लोकोपस्थापकानामार्य्यसामाजिकानां नेता स्वा० दयानन्दोऽपि सत्यार्थप्रकाशे नवमसमुल्लासे लिलेख—

'इस लिये पूर्व जन्मके पुण्यपापके अनुसार वर्त्तमान जन्म और वर्त्तमान तथा पूर्वजन्मके कर्म्माऽनुसार भविष्यत् जन्म होते हैं' पृ० ३१० (गुटकासाईज़)।

× शङ्का! एकपदत्वान्नित्यं परसवर्णः। परं गतलेखेषु मुद्रकैरेकपदेऽपि सर्व्वत्राऽनुस्वार एव मुद्रितः। एवम् 'ऋग्वेद' इति ह्रस्वे मुद्रणीये बहुत्र दीर्घऋकारो मुद्रितः। तृतीयसंख्यायां-'कर्त्तव्येव' अत्र 'कर्त्तव्येव' इति नकारो मुद्रितः; पाठकैः स्वयं ज्ञेयमेतदादिकम्। क्वचिच्च दीर्घऋकारमात्रायां ह्रस्वा मात्रा प्रयुक्ता।

एवं प्रतिपक्षिणः पूर्व्वाऽपरप्रकरणं त्यक्त्वा मध्यगाञ्छ्लोकाञ्छ्रावयन्ति; येन पुराणे विरुद्धता प्रतीयते, यत् ( पूर्व्वाऽपरप्रकरणाऽनुपस्थापनम् ) अनुचितं कर्म्म तेषाम् । एवं केचिद् भविष्यपुराणस्थान् ब्राह्मपर्व्वणः कतिचिच्छ्लोकान् संश्राव्य जन्मना वर्णव्यवस्थां पुराणविरुद्धां, कर्म्मणा च पुराणसिद्धां प्रतिपादयन्ति; परं यदा तत्रोपक्रमोपसंहारौ दृश्येत, तदा तत्र स्पष्टं सनातनधर्म-सिद्धान्तो दृश्यते । तत्र यदि तेषां मतेन जन्मना वर्णव्यवस्थाखण्डनमापाततो दृष्ट्वा कर्म्मणा वर्णव्यवस्थामण्डनं तेषां सिद्धान्तो मन्येत—एतदपि नास्ति । यथा तत्र जन्मखण्डनं दृश्यते; तथा तत्र विद्या-शरीराऽऽत्म-संस्काराऽऽचार-कर्म्मभिरपि वर्णखण्डनं कृतम्, तर्हि तूपस्थापकानां वादिनां मतमपि पुराणेन खण्डितं तत्र । यथा—

'संस्कारतः सोऽतिशयो यदि स्यात् सर्वस्य पुंसोऽस्त्यतिसंस्कृतस्य । यः संस्कृतो विप्रगणप्रधानो व्यासादिकैस्तेन न तस्य साम्यम्, भविष्य० ४१।३० इति वादिसम्मतसंस्कारखण्डनम् । 'वेदाऽध्ययनमप्येतद् ब्राह्मण्यं प्रतिपद्यते । विप्रवद्वैश्यराजन्यौ राक्षसा रावणादयः, भ० ४१।१ इति वादिसम्मतवेदविद्या-द्वारा ब्राह्मणत्वखण्डनम् । जातिधर्मः स्वयं किञ्चिद्विशेषः श्रुतिसङ्गमात् । असिद्धः शूद्रजातीनां प्रसिद्धो विप्रजातिषु, । भ० ४१।२१ इति वादिसम्मत-जात्याचारद्वारा वर्णखण्डनम्, अर्थाद्—यदा शूद्राणां कृते वेदे आचारस्य विधानमेव न; तर्हि शूद्राणां वेदविरुद्धाचारः कथम् ? । 'देहशक्तिगुणैः क्षीणैः कायभरमादिरूपवत् । तस्माद् देहात्मके नैतद् ब्राह्मण्यत्नाऽपि कर्म्मजम्, भवि० ब्रा० ४१।५७ अत्र शरीरद्वारा तत्कर्म्मद्वारा च वर्णप्राप्तिखण्डनं कृतम्; तेन वादिसम्मता कर्म्मणा वर्णव्यवस्थाऽपि पुराणेन खण्डिता । परं वादिन एत-दादिकपद्यानि जनतासमक्षं न स्थापयन्ति, एतदेव च्छलम् । इत्थं ४१-४२-४३-४४ अध्यायेषु पूर्व्वपक्षं प्रदर्श्याऽधुना ब्रह्मा सिद्धान्तपक्षं दर्शयति—

'इदं शृणु मयाऽऽख्यातं तर्कपूर्णमिदं वचः । युष्माकं संशये जाते कृते वै जातिकर्म्मणोः । १ । पुनर्वच्मि निबोद्धव्यं समासान्नतु विस्तरात् । संसिद्धिं यान्ति मनुजा जातिकर्म्म-समुच्चयात् । २ । सिद्धिं गच्छेद् यथा कार्य्यं दैव-कर्म्मसमुच्चयात् । एवं संसिद्धिमायाति पुरुषो जातिकर्म्मणोः, । ३ । भ० ब्रा० ४५ अ० । अयं जातिकर्म्मसमुच्चयो वर्णव्यवस्थासम्बन्धे सनातनधर्म्मस्यैव सिद्धान्तः; परं छलबलमलिना वादिन उपक्रमोपसंहारं परित्यज्य मध्यगश्लोकानेव श्रावयन्ति पुराणस्य; येनाऽर्थस्याऽनर्थो भवतीत्यहो साहसम् । एवं सति तु 'तदप्रामाण्यमनृतव्याघातपुनरुक्तेभ्यः, न्या० २।१।५६ इति न्यायदर्शनमपि वेद-

खण्डकं मंस्यते; यदि—'न-कर्म्मकर्तृसाधनवैगुण्यात्, न्या० २।१।५७ इत्यादि-तदुत्तरपक्षो न श्राव्येत।

किञ्च—बहव ईदृशा पारिभाषिकशब्दा अपि शास्त्रेषु भवन्ति; येषामापाततो दर्शनेन विरुद्धता प्रतीयते; यथा—वेदे—'पितुः पयः प्रतिगृभ्णाति माता तेन पिता वर्द्धते तेन पुत्रः' ऋ० ७।१०१।३ अत्राऽर्थो न ज्ञायते; यावत् तत्तत्परिभाषा नाऽधीयेत। परं तत्परिभाषाऽध्ययनेन समाधानम्भवति; यदत्रैषोऽर्थः—पितुः—दिवः सकाशात् पयः—वृष्ट्युदकं माता—पृथ्वी प्रतिगृभ्णाति-गृह्णाति; तेन हविरात्मना परिणतेन पिता—द्युलोको वर्द्धते, पुत्रः-पृथिव्या भवः प्राणिसङ्घोऽपि वर्द्धते। इत्थं पारिभाषिकपदानां परिभाषाऽध्ययनेन समाधानं भवति। यथा—'पाणिनेर्न नदी गङ्गा यमुना च, स्थली नदी, अर्थात् पाणिनिमते गङ्गाऽपि यमुनाऽपि च नदी नास्ति, किन्तु 'स्थली' यत्र जलस्य नामैव न-नदी वर्त्तते। 'यूस्त्र्याख्यौ नदी' १।४।३ पा० इति परिभाषाऽनध्येता पाणिनिकर्त्तृकगङ्गायमुनयोर्नदीत्वनिषेधकवचनं स्थल्याश्च नदीत्वविधायकवचनञ्च दृष्ट्वा पाणिनेर्म्मौर्ख्यं मत्तमतितां वाऽनुमिमीत। स स्वमौर्ख्यं कथञ्जानीयात्, यावत् तस्य तच्छास्त्रे प्रवृत्तिर्न स्यात्।

यथा वा—'गोमांसं भक्षयेन्नित्यं पिबेदमरवारुणीम्' एतत्पद्यं दृष्ट्वा भ्राम्यति जनः। एतत्परिभाषाऽध्ययनेन तु भ्रान्तिर्व्यपगच्छति, तथा च—"गोशब्देनोदिता जिह्वा तत्प्रवेशो हि तालुनि। गोमांसभक्षणं प्रोक्तं महापातकनाशनम्। जिह्वाप्रवेशसञ्जात-सुधुक्षणा-क्षोभसम्भवः। चन्द्रात् स्रवति यः सारः सैवेहाऽमर वारुणी।" एवमेव तान्त्रिकमद्य-मांस-मत्स्य-मुद्रा-मैथुनादिपञ्चमकाराणां परिभाषाज्ञानार्थं नित्यतन्त्रमहानिर्वाणतन्त्रादिग्रन्थानां यावत्पारायणं न क्रियेत, तावत् कथं घृणा व्यपगता भवेत्। वस्तुतस्तु वादिभिः स्वसीमितबुद्ध्या एव जुगुप्सनीयम्, यथा ग्रन्थान्तराणां दर्शनमात्रमेव न कृतम्। दिङ्मात्रं पञ्चमकाराणां लक्षणानीहाऽपि समुपन्यस्यन्ते—

'यदुक्तं परमं ब्रह्म निर्विकारं निरञ्जनम्। तस्मिन् प्रमदनं ज्ञानं तन्मद्यं परिकीर्त्तितम्' (विजयतन्त्रे)। 'माशब्दाद्रसना ज्ञेया तदंशान् रसनाप्रियान्। सदा यो भक्षयेद् नूनं स भवेन्मांससाधकः' (आगमसारे)। गङ्गायमुनयोर्मध्ये (शरीरस्थेडापिङ्गलानाड्योर्मध्ये) मत्स्यौ द्वौ (श्वासप्रश्वासौ) चरतः सदा। तौ मत्स्यौ भक्षयेद् यस्तु स भवेन्मत्स्यसाधकः (आगमसारे)। 'सत्सङ्गेन भवेन्मुक्तिरसत्सङ्गेन बन्धनम्। असत्सङ्गमुद्रणं यत्तु सा मुद्रा परिकीर्त्तिता'। 'कुलकुण्डलिनीशक्तिर्देहिनां देहधारिणी। तयोः शिवस्य संयोगो मैथुनं परिकीर्त्तितम्'

(विजयतन्त्रे)। एवं 'गङ्गायमुनयोर्मध्ये बालरण्डां तपस्विनीम्। बलात्कारेण गृह्णीयात् तद्विष्णोः परमं पदम्' अस्य परिभाषा—'इडा-भागीरथी गङ्गा, पिङ्गला-यमुना नदी तयोर्मध्यगता रण्डा सुषुम्णैव सरस्वती' इत्यादि।

फलतस्तत्तच्छास्त्रीय-पारिभाषिकशब्दाऽज्ञाने सति आपाततस्तत्तच्छास्त्रे विरुद्धताऽपि प्रतीयते, परं—'नैष स्थाणोर्दोषो येनाऽन्धस्तन्न पश्यति क्वाऽपि'। यथा-'प्रथमलिङ्गग्रहणञ्च' यो लिङ्गपरिभाषां न जानाति, सोऽत्राश्लीलतां मन्येत।

एवं यदा—'सन्ध्यां मा कार्षुर्यदाऽशुचयः स्युः' इति वाक्यं 'यदाऽशुचयः स्युः' इति वाक्यं मुक्त्वा पठ्येत, तर्हि सन्ध्यानिषेधस्य भानमापाततो भविष्यति। वर्त्तमाना पुराण-पुराणश्रवोऽर्वाञ्चोऽपीत्थमेव कुर्वन्ति। यो वादी पुराणादिकस्येदृशमुद्धरणं श्रावयेत्-यत्र विरुद्धताऽऽभासो दृश्येत, तर्हि पाठकैस्तत्पुस्तकनाम तत्सङ्केतञ्च पृष्ट्वा तस्योपक्रमोपसंहारौ द्रष्टव्यौ। तस्योत्तरं तत्रैव दत्तम्भविष्यति, तदा छलिनां छलं कर्प्पूरायिष्यते। परं धूर्त्ता वादिनः क्वचित् प्रकरणं विहाय, क्वचिच्च श्लोकान् व्युत्क्रमेण श्रावयित्वा, क्वचिदुपक्रमोपसंहारं निह्नुत्य अपठितजनतायां दुष्प्रभावं पातयितुमीशते—प्रतिवार्त्तञ्च ता वार्त्ता अवैदिकीस्साधयितुमभियुञ्जते। येषां प्राक्तनैः सप्तभिरपि पुरुषै र्वेदानां दर्शनमात्रमपि न कृतम्' स्वयञ्च वेदानां पृष्ठपरिवर्त्तनमपि न कृतम्, तेऽपि प्रतिप्रतोलि क्रोशन्तो दृश्यन्ते, यदेतद् वेदविरुद्धम्, गप्पमिदम् इतीत्थं बद्धसन्नाहा भवन्ति पुराणानि निराकर्त्तुम्। परमीदृशं कमपि वेदमन्त्रमुपस्थापयितुं न प्रभवन्ति, येन तत्पौराणिककथाया वेदविरुद्धता प्रतीयेत, केवलं वाङ्मात्रेणैव 'एतद् वेदविरुद्धम्' इति ब्रुवन्ति। वादिनामाग्रहस्य सीमाऽपि न, या वार्त्ता स्पष्टतया पुराणादिकस्य वेदे न मिलेत; तदा महता कण्ठेनेदं कथयन्ति-यदिदं वर्णनं वेदे नाऽस्ति इति। यदा तदेव वेदे प्रदर्श्येत; तदा तेऽर्थान्तर-व्याजं पुष्णन्ति। यदाऽर्थान्तरव्याजं ते भवितुं शक्यं न पश्यन्ति, तदाऽद्यत्वे तैर्नवीनैका युक्तिर्निस्सारिता स्वरक्षायाः, यदिदमालङ्कारिकवर्णनं स्तुतिमात्रं वा, काव्यं वा, अर्थवादो वाऽत्राऽत्र वास्तविकतेत्यभिधाय सत्यज्ञानत्वेन स्वयं मते वेदे मिथ्याज्ञानाऽऽरोपं प्रदर्श्य परद्रुहयया स्वमानरक्षां कुर्व्वन्ति, बत !!!

वयमद्य सङ्क्षेपेण कतिपयपौराणिकविषयानुपस्थाप्य तत्र वेदानामप्येकवाक्यतां दर्शयितुं चेष्टामहे पुराणरक्षणसक्षणानां पाठकानां समक्षम्। तत्राऽद्यत्वे पुराणानामश्लीलताऽवैदिकताऽसम्भवतानिदर्शनेऽर्वाचां महानुत्साहः। यदि कथ्येत—वेदेऽप्यश्लीलता विद्यते, एकमात्रं वेदानुयायीनि पुराणान्येव भवन्तोऽश्लीलतया कथम्परिजिहीर्षन्ति ? इति कथ्यमानास्ते प्रतिपादयितून् ना-

स्तिकान् वेदनिन्दकान् वा ब्रुवते । परं नैतज्जानन्ति, यदश्लीलतां विना संसारस्यैव न स्थितिः । अश्लीलतात्यागे सति वादिनां स्वमातापितृभ्यामुत्पत्तिरेव नाऽभविष्यत्! फलतो—वेदेऽपि दृश्यतेऽश्लीता । ये दिदृक्षन्तां वादिनः; ते पूर्वं स्वा० दयानन्दप्रणीतयजुर्वेदभाष्यस्य ६।१४, १३। ७६, १६। ८८, २०। ६, २५।१, २५। ७ इत्यादि मन्त्रेष्वश्लीलवर्णनं पश्यन्तु। अधुना मन्त्रान्तराण्यप्युपस्थापयामः; तथाहि—

'जार आभगम्' ऋ० १०.११।६ अत्र निरुक्तम्—'अपि त्वयं मनुष्यजार एवाऽभिप्रेतः स्यात्, स्त्रीभगस्तथा स्याद् भजतेः' ३।१६।६। 'पिता दुहितुर्गर्भमाधात्' ऋ० १।१६४।३३, अथर्व० ६।१०।१२।

[ एतदग्रे पाठकाः 'सूर्योदय'स्य ७-८ सङ्ख्ययाः ६५ पृष्ठे—'स्वा० द प्रणीतसंस्कारविधौ' इत्यत आरभ्य 'तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति, या देवानां या च मानुषाणाम्' नि० १३।६।१ इति १०३ पृष्ठपर्य्यन्तं निबन्धं पश्यन्तु; ततोऽग्रे-इति क्रमः । ]

---

ब्राह्मणस्य च देहोऽयं क्षुद्रकामाय नेष्यते ।
कृच्छ्राय तपसे चेह प्रेत्यानंतसुखाय च ॥
विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।

# सम्मानपत्रम्

## श्रीमन्तः सर्वतन्त्रापरतंत्राः षड्दर्शनाचार्या वाराणसेयाः पण्डितराजश्रीपद्मनाभशास्त्रिणः !

मोहमयीस्थानां विदुषां सद्गृहस्थानां च परिषदियं श्रीमतां गुणगणमहिम्ना संतुष्टा सम्मानपत्रेणार्चनं विधत्ते स्वीकरणीयं श्रीमद्भिः स्नेह सम्मानमिदम् ।

चतुर्दशविद्यास्थाननिकषरूपायां शिवरूपनिलानमहोमहोपाध्यायशिवकुमारमिश्रादिकाशीस्थविदुषां परिषदि दर्शनशास्त्रतत्त्वपर्यालोचनावसरे संततधारं शास्त्रतत्त्वनिरूपणेनानेकवारं धन्यवादेन प्रोत्साहितास्तत्रस्थविद्वद्भिर्लब्धप्रतिष्ठाश्च काशिकविद्वत्सभास्वपश्यं सम्मानार्हा भवन्त इति वितीर्यते सम्मानपत्रमिदम् ।

अत्रभवन्तः पूर्वं हिन्दुकालेजाभिधे महाविद्यालये ततो विश्वविद्यालये च दर्शनशास्त्राध्यापकपदे परमगौरवकारणे विराजमाना आसन । परं तत्र किंचिदिव धर्ममर्यादातिक्रमं दृष्ट्वार्थं तृणाय मत्वा परित्यक्तं श्रीमद्भि तत्पदमिति त्यागेन विद्यया च पूर्वतोप्यधिकतरं गौरवपदमारूढा भवन्त इति मन्यते परिषदियम् ।

हिन्दुकालेजाध्यापकपदपरित्यागसमकालमेव सनातनधर्मप्रचारकार्ये संलग्ना भवन्तोऽनेकवारं भारतीयप्रान्तेषु ग्रामं ग्रामं व्याख्यानप्रवचनाभ्यां भ्रान्तभारततरुणतदनुयायिनां कुशंकानिरसनेन च धर्मपथादपयान्तीं जनतामपवारयन्तस्तथा संपादितं धार्मिकसेवाकृत्यं तत्तत्प्रान्तेषु यथा क्रियावद्भिर्द्गणनाप्रस्तावे श्रीमतां नामधेयं स्मर्यते सज्जनैः ।

वर्णाश्रमस्वराज्यसंघस्य प्रस्थापनानन्तरं तस्य कार्येषु बद्धपरिकरा भवन्तोऽविगणय्य प्रवासादिक्लेशान् विधाय च स्वकीयस्यैवार्थस्य व्ययं निद्रादिसौख्यमप्यवधूय पंचनदयुक्तप्रान्तगुर्जरबंगादिदेशेष्वाटमाटं संघीयोद्देश्यप्रचारं कृतवन्तो भवन्त इति तु प्रथितमेव भावत्कमुज्ज्वलं यशः सर्वत्र इति तद्विषये न किंचिद्वक्तव्यमवशिष्यते ।

अत्र भवद्भिर्हरद्वारकुंभसंमेलने, उज्जयिन्यामिन्दोरराजधान्यां च "नदैन्यं न पलायनम्" इति स्वसिद्धान्तमनुसृत्य धर्मप्रचारं कुर्वद्भिर्बन्धनादिकष्टजातं राजपुरुषैर्दीयमानमप्यनुभूय प्रान्ते च मानपुरःसरं तैरेव निर्मुक्ताः परिभाव्य नास्तिकवृन्दं विशिष्टप्रकारेण धार्मिकप्रचारकृत्यं संपादितं येनाहितानामपि स्वान्तेषु बलादादरं दरं च स्थापयामासुः ।

श्री१००८मद्भिः शारदापीठाधीश्वरजगद्गुरुमाधवतीर्थशंकराचार्यचरणैरत्रभवतां भवतां दर्शनशास्त्रप्रावीण्यं प्रतिभानुगतं वक्तृत्वं धर्मकार्यधुरंधरत्वं च सम्यगनुभूय यथासमय "सर्वतंत्रस्वतंत्रः षड्दर्शनाचार्यः पंडितराजः" इत्यास्पदत्रयसंप्रदानेन पूर्वं संमानिता भवन्तः संप्रति श्रीवैष्णवाचार्यवर्यैर्विश्वविदितपाण्डित्यैरन्वर्थप्रतिवादिभयंकरपदैः श्री१००८मज्जगद्गुरुभिरनन्ताचार्यमहाराजैरपि संमान्यन्ते इत्यतःपरं किं स्यात्परमामोदस्थानं परिषदोऽस्या इति शम् ।

विहितसाभापत्ये,-बन्धुवर-श्रीमत्ताराामोहनवेदान्ततीर्थाभ्रिद्वितीयः श्रीमान् सौम्य-मूर्तिः प्रकृत्याकृत्यभिव्यक्तनानागुणगणो, ब्रह्मचर्यं स्फुरदुरुतेजःपुञ्जायमानः कषायवसने वसानः कण्ठस्वरविस्वरपिकस्वरः, सुस्वरधिक्कृतवीणानिक्वणः ज्वलदनजालस्फुलिङ्ग-लिङ्गाङ्गभङ्गया [किमप्यनिर्वचनीयकायकान्त्या नितान्तैकान्ते-कश्चन (दयानन्दस्वामी सरस्वती) शान्तः कान्तोऽप्यकान्तः शुद्धसिद्धा-न्तदर्शी प्रादर्शि।

अथ कोऽयं मोहयन्निव सद्यः सदःसदः, सदःपतिगिरमुररीकुर्वन् ब्रह्मण्य-नर्ज्जरो निर्जरो जर्जरीकृतचित्तसन्दोहानन्दमातन्वन् क्षिप्र मुहूर्त मनर्गलवाग्जाल विन्यासैरनिर्वाच्यां कामप्यतिचमत्कारितामतानीत्!!

अथ प्रथमदर्शनगोचराणामेतेषां महामहात्मनां सरस्वतीभूतानां, सरस्वती-भूतानां नाम्नापि, श्रीमद्दयानन्दस्वामीति सार्थकनामधेयानामार्यवर्याणां सुलभ एव समभूत्तदानीं परिचयः।

प्रायः समस्तानामेव व्यतिव्यस्तानां सदःसदां कोऽयं कोऽयं इति विविदिषाविषयः किसलयरागनिलयो लयालय आनन्दलयो दयालयश्च तयोः स्वामी श्रीमान् समासीद्दयानन्द महोदय एव।

अद्यापि च कर्णशष्कुली समालम्बित इव तदानीन्तनः किन्नरकण्ठ-साधित "यं ब्रह्मा वरुणेन्द्ररुद्रमरुत स्तुन्वन्ति दिव्यैः स्तवै" रित्यादि स्तवगानमिषा च्छ्लोकोच्चारण-निःस्वनः शनैः शनै रनिशमनुभूयत इव। प्रत्यक्षीभूता इव च संप्रति प्रतीयते का च सा "दशभुजा"—विषयिणी याऽसाधारणी विहिता तदा वक्तृता।

परमतो वाराणस्यां यस्यां कस्यांचन विविधायां धार्मिकपरिषदि बहुशो व्यलोकि लोकोत्तरः सुमधुरगुरुसारसंकुलितसरलभाषणपरायणः प्रकृत-विषय समर्थननिपुणः सुर-गुरु-प्रियदर्शनो दर्शनमर्म्मदर्शी स्वान्तस्पर्शी दूरदर्शी।

अयि! शोककुलसंकुलमनसः सुमनसः! कपोलतलस्थलविन्यस्तकरा धरा-मराः! जाने न भवतामेतदविदितम्—

"स जातो येन जातेन याति देशः (वंशः) समुन्नतिम्।
परिवर्त्तिनि संसारे मृतः को वा न जायते"॥ इति॥

हा हाऽहन्त! सन्ततमेव विपरिवर्तमाने भुवनेऽस्मिन् नियतमुत्पद्यन्ते विपद्यन्ते च कतिशो लोकाः, परन्तु तेषां मध्ये प्रविरल एव कोऽप्येवं विधो जायते। यस्य हि नामचरित्रं सर्वसाधारणार्थमादरणीय (मनुकरणीय) मनुसरणीयञ्च भवेदिति।

अविश्रान्त-दिगन्त-संक्रान्त-यशोराशिभिश्च धन्यम्मन्या । मान्या चोच्चैर-वस्थिता सकललोकसमर्च्चिताद्य भवेन्मातृभूमिः ॥

परन्तु ये खलु वहुशो भाग्यादीदृशाः कतिपये महानुभावाः समासादिता भारतभुवि, तेषामन्यतमोऽस्तमिततमस्तोमः समालोच्यचरितः सुचरितः सर्वेषा-मेवार्य्याणामनार्याणाञ्च भारतविषयवासिनामादरणीयानुकरणीयचरितो दया-नन्दः । नचातिप्रयोजनकोऽस्य नवः परिचयः ।

अहो नु हन्त ! हा हा हतविधे ! न केवलमद्य कस्यचन महामनस्विनो महाप्रया-णमेव समजनि, किन्तु सन्तः ! हाहाहन्त !! वङ्गभूमेः—वाराणस्याः—भारतधर्म-महामण्डलस्य—किमधिकैः—भारतवर्षस्य—जगतो वा धार्म्मिकभावो धर्म्म-प्रचारो वा कीदृग्विपर्ययं पर्ययासीदिति स्मरतामपि "अशोच्यानन्वशोचस्त्वं" इत्यादि गीतोपदेशमवगच्छतामपि नियतमन्यथैव संवृत्ता चित्तवृत्तिः ।

महानयं विनिपातितो दृढ़तरो भारतधर्म्ममहामण्डलस्य भित्तिस्तम्भो निर्द-येन करालकालेन कलिना । हा हा !! महानयमनर्थः समसाधि सहसा हसताऽने-हसा दुरन्तेन—

ध्वस्तोवङ्गधरा धराधरशिरश्चूडामणि र्हा हठात्
स्रस्तो भारतधर्म्ममण्डलमहास्तम्भो-भुवं कम्पयन् ।
विश्वं निःस्वमिव क्षणात् स विदधत् सचिन्त्य विश्वेश्वरम् ।
श्रीविश्वेश्वरमाप विश्वविदितः स्वामी दयानन्दकः ॥
दयानन्दं विना नैव ज्ञानानन्दो विभासते ।
निरानन्दतया मन्दो ज्ञानानन्दोऽपि नामतः ॥

हे धर्मवीर ! कर्म्मिन् ! दयानन्द स्वामीति नाम्नात्व मासीः । अथास्य भव-दभिधानस्य यादृगवार्थः पर्यालोच्यते—सर्वःखलु संभवत्येव निर्विवादम्—दयया आनन्द स्तस्यस्वामीत्येकः दया चानन्दश्च तयोःस्वामीत्यपरो वा । अतएव च केनचिदिदानीं प्रगीयते—

द्वन्द्वगर्भ स्तत्पुरुष स्तृतीया गर्भकोऽथवा ।
स्वाम्यन्तक दयानन्द-पदे, द्वावर्थतः समौ ॥

ईदृशे परमाश्चर्यविपर्यये विना ज्ञानं कथमपि नार्हति भवितुमानन्दलवोऽपि इति ज्ञानमात्र सहायेन यदि कियानपि ते स्यादानन्द स्तदैव ज्ञानानन्द इति नाम-धेयं भावि-भाव सूचकं सार्थकं स्यादिति किमत्र वक्तुमवशिष्यते—हाहा काल-कालक कले ! दुर्विज्ञेयस्ते महिमेति विरम्यते ।

———

# समालोचनासारः।

## संस्कृत-गीतमाला।

पुस्तकमिदं श्रीवासुदेवद्विवेदिना विनीतेन विरचितम्। ग्रा० भवानीछपरा, पो० परोहा, जि० गोरखपुरतः प्राप्यते। मू० =) आनकद्वयम्।

पुस्तकेऽस्मिन् संस्कृतभाषायां सरलमञ्जुला भावपूर्णा गीतिकाः सन्ति। प्राचीनभारतगौरवम्, धर्ममहिमा मनःकामना-प्रभृतिभिः शीर्षकै गीतकानि-निबद्धानि संस्कृतच्छात्राणां गेयानि सन्तीति कामयामो वयमस्या मालायाः संस्कृतसमाजे प्रचारम्। १) रुप्यकैकतो न्यूनमूल्येन वी० पी० प्रेषितुं न शक्यत इति प्रकाशकस्यादेशोऽपि लिखितो दृश्यते। अतः पुस्तकाभिलाषिभिरधिक-मूल्येनैव पुस्तकग्रहणे यतेलिमम्।

---

## श्रुतबोधः।

निर्माता श्रीमान् पं० यमुनाप्रसादशर्मा। प्राप्तिस्थानम्—श्रीगङ्गाधर शर्मा ब्रह्मचारी ब्रह्मचर्य्याश्रम गजीपुरम्, मुजफ्फरपुर। पुस्तकमिदं छन्दोज्ञानाय परमोपयोगीति सर्वेऽपि मर्मज्ञा जानन्त्येव। कालिदासीयश्रुतबोधे छन्दोलक्षण-पद्यस्थविशेषणानि विद्यार्थिनामनुपयुक्तान्यासन्। सम्प्रति धर्मशास्त्रनिष्णातेन विदुषा सन्निवेशितानि विशेषणानि हिन्दुसंस्कृतिसमुपोद्बलकानि जातानि। तत्र तत्र पद्येऽर्थान्तरसन्निवेशेण विशिष्टार्थपरिष्कारकवाक्यसन्निवेशेन च पुस्तकस्यास्योपादेयता स्फुटं सम्वर्द्धिता विद्यते। पुस्तकपरिष्कर्त्रा भारतीय-संस्कृतिपरिचयाय स्वनिर्मितान्युदाहरणानि सन्निवेश्य तु प्रपानकरसे एलासन्निवेशा-दधिकरोचता प्रापिता। कतिपयलक्षणेषु लक्षणान्तरज्ञानपारतन्त्र्यादि दोष-दूरीकारेण तथा आवश्यकज्ञातव्यविषयादि सन्निवेशेन च परीक्षार्थिनां महानुप-कारो विहित इति सर्वथा शाणोल्लीढमणिहारवदुद्दीपितमहिमाऽयं श्रुतबोधः परीक्षार्थिभिरवश्यमुररीकरणीय इति स्वहयेनेव कर्णजमुद्रणप्रकाशनादिसौन्दर्य्य-विमुग्धमना विरमामि विस्तरात्। एवममूल्यस्यास्य पुस्तकस्योपयोगितापेक्षया आणकत्रयं ≡) मूल्यन्त्वमूल्यमेवास्ति।

समालोचकः श्रीगोपालशास्त्री ( दर्शनकेशरी )

---

## ३१---प्रणवोपदेशः साधनोपदेशश्च ।

दयामयः श्रीगुरुदेवः स्वरूपोपलब्धिद्वारमुद्घाटयितुं स्थूलरूपतः प्रणवमुपदिश्य साधारण्येन चतुर्णां वेदानां महावाक्यचतुष्टयमुपदिशेत् । शब्देन तदर्थ-बोधः, अर्थेन भावानुभवः, तेन च स्वरूपोपलब्धौ साहाय्यम् । अतः सर्वतः प्रथमं कुटीचकदीक्षायां वर्णात्मकं प्रणवं वेदचतुष्टय-चतुर्महावाक्यानि साधारणतः शिष्याय समुपदिश्य स्वस्वरूपोपलब्धिमार्गे तं संचालयति । ततश्चोत्तरोत्तरदीक्षायां मन्त्रचैतन्योन्नतावस्थायां च मुमुक्षुः शिष्योऽग्रेसरति । कुटीचक व्रतधरः संन्यासी मन्त्रयोगमधिकरोति । गुरुदेवो यदि समीहेत, तर्हि योगान्तरमप्युपदेष्टुं शक्नुयात् । कुटीचक व्रतिने मानसयागविधिरेवोपयुक्तः । अतो बहिर्धारणा अन्तर्धारणा, स्थूलरूपध्यानं, पञ्चोपासनासु यथाधिकारं तत्स्वरूपध्यानम्, मानसपूजासमुत्पन्नविघ्ननिरासोपायः, मानसयज्ञविधिः, मानसध्यानरहस्यं, मानसयागसफलतोपायादिकं च श्रीगुरुदेवः कृपालुः शिष्यहिताय समुपदिशति । मन्त्रयोगमनुसृत्य मानसयागो हि सर्वश्रेष्ठः । अतः कुटीचकव्रतधरः साधको मानसयागे समुन्नतो भवेत् । यथेच्छमसौ लोकसंग्रहार्थं बहिर्यागमप्यनुष्ठातुं शक्नुयात् । कुटीचकव्रतग्रहणार्थं साधनोपदेशोऽयमधोलिख्यते । ब्रह्म-विष्णु-शिवस्वरूपः श्रीगुरुदेवो जगद्गुरुः साधनासु न्यूनाधिक्यमप्यनुष्ठातुं शक्नोति । उदङ्मुखाय नित्यशुद्धबुद्धपरमानंदाद्वयब्रह्मप्रतिपादकं प्रणवं दक्षिणकर्णे प्राङ्मुखः सन्नुपदिशेत् । प्रणवस्यार्थं आचार्यवचनेन बोधयेत् । ॐ पंचीकृत पंचभूतेत्यादिना । ततः, अयमात्मा ब्रह्म । तत्त्वमसि । अहं ब्रह्मास्मि । प्रज्ञानमानन्दं ब्रह्मेत्यादीनि शिष्यशाखा-वाक्योपदेश-पूर्वकम् उपदिशेत् । एषामर्थं च बोधयेत् ।

### ( कुटीचकसाधनानि )

पञ्चधा-सगुणोपास्तावधिकारी कुटीचकः
ऊर्द्ध्व-पुण्ड्रं धरेदाद्यो ज्ञान गौरवभूषितः ॥
वहिः पूजा शुभाऽद्यस्य योगसंपूतचेतसः ।
मन्त्रयोगः सदाद्यस्य स्वाधिकारप्रयोगतः ॥
आद्यो जपेद् वाचनिकं ध्याननिर्धूतकल्मषः
कुटीचकस्तु संन्यासी योगसाधनसंयमौ ।
अभ्यसेद्धि विशेषेण पञ्चसाकारब्रह्मसु ॥
कस्मिंश्चिदत्र मनसो रुचिरुग्रास्ति तस्य वै ।
तस्मिन् रूपे सदा ध्यात्वा ब्रह्मोपासनमाचरेत् ॥

प्रदोषे पररात्रे च मध्यरात्रे तथैव च ।
सन्ध्यास्वह्नि विशेषेण चिन्तयेन्नित्यमीश्वरम् ॥
विष्णुश्चिदा यस्तु सता शिवः सन् ।
स्वतेजसाऽर्कः स्वधिया गणेशः ॥
देवी स्वशक्त्या कुशलं विधत्ते,
कस्मैचिदस्मै प्रणतिः सदास्ताम् ॥
त्रिपुरदलनदक्षश्चन्द्रखण्डावतंसः
कलितभसित-लेपो हस्तविन्यस्तशूलः ।
भवतु तव कपर्दी क्रीडदुन्मत्तगङ्गो
दधदधितनु देवीं त्र्यम्बको मंगलाय ॥
जयति सकल-विघ्नध्वान्त-विध्वंससूर्यो
मदपरिमललुब्धैः सेव्यमानो मिलिन्दैः ।
निजचरणपरेभ्यो दिव्यभोगस्य दाता
विलसितरददण्डो हस्तितुण्डो गणेशः ॥
मघवमुखसुराणामुत्तमाङ्गेषु यस्याः
चरणनखरभासो माल्यभावं भजन्ति ।
महिषकदनचण्डैः सायुधैर्बाहुदण्डै-
र्जयति विकटमूर्तिः प्रेयसी त्र्यम्बकस्य ॥
वहति वियति यस्य स्यन्दनं सप्तसप्तिः ।
सततमनुभचक्रं चोद्यमानोऽरुणेन ।
स जयति तिमिराणां तक्षणे लब्धदीक्षो
विरतविधुविकाशो बान्धवः पंकजानाम् ॥
अधिसलिलधि तल्पीकृत्य शेषं शयानो
द्रुहिणमभिनुवन्तं नाभिपद्मे दधानः ।
चरणयुगलमङ्के कल्पयन्निन्दिरायाः
सजल जलदकान्तिः पातु नारायणो वः ॥
स्वस्वाकाशादिभूतप्रकृति-गुणयुजां साधकानां विमुक्त्यै
ब्रह्मैवैकं स्वमायोशवलितमभवत्पञ्चदेवात्मकं तत् ।
नामाकारक्रियाभिर्वियदिव न भिदा वस्तुतोऽस्तीति तत्त्वं
एकं पञ्चापि पञ्चैकमपि बुधजनाः शान्तिसौख्यं भजन्तु ॥
एषु पञ्चसु रूपेषु यस्य कस्यापि निश्चितम् ।

गुरुणैवोपदिष्टेषु ध्यानं कुर्याद्यतात्मवान् ॥
सच्चिदेकं ब्रह्म इति रूपेण मुनिपुंङ्गव।
व्रतानि यानि भिक्षूणां तथैवोपव्रतानि च ॥

---

## ३२---कुटीचकाचारोपदेशः ।

कुटीचकव्रती संन्यासो काम्यकर्माणि गार्हस्थ्यवानप्रस्थोपयोगीनि नित्यनैमित्तिककर्माणि च परित्यजेत् । किञ्च स्वाश्रमानुकूलानि नित्यानि नैमित्तिकानि च कर्माणि न विजहीत । उपासनायां ज्ञानोपार्जने च समधिकं पुरुषार्थं समनुतिष्ठेत् । सामान्यतः तदाचारा अत्र प्रदर्श्यन्ते—

( कुटीचकाचाराः )

संन्यासदीक्षामादाय कामिन्यादीन् विहाय च ।
कुटीचकः स संन्यासी नगरप्रान्तसीमनि ॥
क्वचिन्मनोरमे स्थाने कुटीं निर्माय संवसेत् ।
योगोपनिषदध्यायैःकुर्यादाध्यात्मिकोन्नतिम् ॥
ऋतुद्वये हि संन्यासी क्षौरं कुर्यात् कुटीचकः ।
दण्डत्रयं धरेदाद्यस्तपसा शुद्धमानसः ॥
आद्यो वारत्रयं स्नानमाचरेद् वीतकल्मषः ।
एकाहारः सदाद्यस्य सम्मतः स्वात्मशुद्धये ॥
कुर्यान्नाद्यो गुरोः कार्यं सर्वप्राणिहिते रतः ।
संत्यजेद्वपुषोऽभ्यासमाद्यः स्थूलस्य सर्वथा ॥
रक्षेदाद्यः शिखासूत्रे ब्रह्मकर्मणि तत्परः ।
प्राणान्ते स्थूलदेहस्य दाहादिविषये स्मृतिः ॥
प्राणहीनः स्थूलदेहमाद्यस्य दहनं व्रजेत् ।
संन्यासी गुरुदेवस्य संनिधाने कुटीचकः ॥
स्पृष्ट्वैवोपनिषद् ग्रन्थं गृह्णीयाद्भक्तितो व्रतम् ।
दृष्टानुश्रविकैश्वर्यमूर्ध्वलोकादिकं च यत् ॥
कुटीचकस्तु मन्त्रेण तत्सर्वं साधु संत्यजेत् ।
कुटीचकानां लक्ष्यं तु वक्ष्यमाणं निशामय ॥
विषय-वासनात्याग इन्द्रियाणां च संयमः ।

दृष्टानुश्रविकाणां हि विषयाणां विशेषतः ।।
त्यागसंकल्प आख्यातः सकामस्य च कर्मणः ।
त्यागस्तथा गृहस्थानां वानप्रस्थगतस्य च ॥
धर्मस्य त्यागः कथितो देहाध्यासनिवारणे ।
तथा प्रयत्नो बहुधा सर्वकर्मस्वपि ध्रुवम् ॥
आत्मनैव समं योगो योगसाधनमेव च ।
पराभक्ते स्तथा लाभस्तत्त्वज्ञानागमश्च ह ॥
विषयेषु च वैराग्यं संन्यासे तीव्रकाङ्क्षिता ।
यदा जायेत विप्रस्य तदैव प्रव्रजेद् गृहात् ॥
कस्यचिदुपयुक्तस्य गुरोः संन्यासिनोऽन्तिके ।
बद्धाञ्जलिर्नतशिरा दीक्षामभ्यर्थयेत्स्वयम् ॥
इत्थं कुटीचकव्रतं प्रार्थयित्वा द्विजोत्तमः ।
प्रसाद्य देवर्षि-पितृन् देशे काले गुणान्विते ॥
आकांक्षेत ततो धीरः संन्यासव्रतधारणम् ।
आत्मीयकुलजातीनां त्यक्त्वा सम्बन्धमप्युत ॥
शरीरयात्रां निर्वोढुं धर्मात्मन्यात्मजे सति ।
कुटीचकस्तु गृह्णीयादन्नवस्त्रे ततोऽपि च ॥
एतत्त्वाश्रमनिष्ठानां यतीनां नियतात्मनाम् ।
भैक्षेण वर्तनं प्रोक्तं फलमूलैरथाऽपि वा ॥
एककालं चरेद् भैक्ष्यं न प्रसज्येत विस्तरे ।
भैक्ष्ये प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥
सप्तागारे चरेद्भैक्ष्यमलाभे द्वे पुनश्चरेत् ।
प्रक्षाल्य पात्रे भुञ्जीयादद्भिः प्रक्षालयेत्तु तत् ॥
अथवान्यदुपादाय पात्रं भुञ्जीत नित्यशः ।
भुक्त्वा च संत्यजेत्पात्रं यात्रामात्रमलोलुपः ॥
विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शराव-सम्पाते भिक्षां नित्यं यतिश्चरेत् ॥
गोदोहमात्रं तिष्ठेत कालं भिक्षुरधोमुखः ।
भिक्षेत्युक्त्वा सकृत्तूष्णीमश्नीयाद्वाग्यतः शुचिः ॥
प्रक्षाल्य पाणिपादौ च समाचम्य यथाविधि ।
आदित्ये दर्शयित्वान्नं भुञ्जीत प्राङ्मुखोऽत्वरः ॥

हुत्वा प्राणाहुतीः पञ्च ग्रासान् अष्टौ समाहितः ।
आचम्य देवं ब्रह्माणं ध्यायीत परमेश्वरम् ॥
अलाबुं दारुपात्रं च मृण्मयं वैणवं तथा ।
चत्वारि यतिपात्राणि मनुराह प्रजापतिः ॥
एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते ।
उपेत्य च स्त्रियं कामात् प्रायश्चित्तं समाहितः ॥
प्राणायामसमायुक्तं कुर्यात्सान्तपनं शुचिः ।
ततश्चरेत नियमान् कृत्स्नान् संयतमानसः ॥
पुनराश्रममागत्य चरेद्भिक्षुरतन्द्रितः ।
न नर्मयुक्तमनृतं हिनस्तीति मनीषिणः ॥
तथापि न च कर्तव्यः प्रसंगो ह्येष दारुणः ।
एकरात्रोपवासश्च प्राणायामशतं तथा ॥
उक्त्वाऽनृतं प्रकर्तव्यं यतिना धर्मलिप्सुना ।
हिंसा चैषा परातृष्णा या चाऽऽत्मज्ञाननाशिका ॥
एवं कृत्वा स दुष्टात्मा भिन्नवृत्तो व्रतच्युतः ।
भूयो निर्वेदमापन्नश्चरेच्चान्द्रायणं व्रतम् ॥
विधिना शास्त्रदृष्टेन सम्वत्सरमिति श्रुतिः ।
भूयो निर्वेदमापन्नश्चरेद्भिक्षुरतन्द्रितः ॥
अकस्मादपि हिंसां तु यदि भिक्षुः समाचरेत् ।
कुर्यात्कृच्छ्रातिकृच्छ्रन्तु चान्द्रायणमथापि वा ॥
स्कन्देदिन्द्रियदौर्बल्यात् स्त्रियं दृष्ट्वा यतिर्यदि ।
तेन धारयितव्या वै प्राणायामास्तु षोडश ॥
दिवा स्वप्ने त्रिरात्रं स्यात् प्राणायामशतं तथा ।
एकान्ने मधुमांसे च नवश्राद्धे तथैव च ॥
प्रत्यक्षलवणे चोक्तं प्राजापत्यं विशोधनम् ।
ध्याननिष्ठस्य सततं नश्यते सर्वपातकम् ॥

# ३३—अग्निहोत्रिणां विशिष्टोविधिः ।

कुटीचकवतं जिघृक्षोरग्निहोत्रिणः कृते निम्ननिर्दिष्टो विधिर्हिताधायकः । पुराकालेऽपि सर्वेऽपि ब्राह्मणा नाग्निहोत्रिणो भवन्तिस्म । विधिरयं यद्यपि न सर्वहितकरस्तथापि तदुल्लेखो नितरामावश्यकः ।

## ( गृह्याग्निमतो विशेषः )

अष्टश्राद्धेष्वावसथ्येऽग्नावग्नौ करणम् ॥ हुतशेषं दत्वा पृथ्वी त इति पात्रमालभ्यानन्तरं परिवेषणम् ॥ ततोऽन्नसंकल्पः ॥ प्रति पार्वणं लेखाग्रे ये रूपाणोति मन्त्रेण प्रतिमन्त्रमुल्मुकनिधानम् ॥ सकृदाच्छिन्नानां सोल्मुकानामावसथ्येऽग्नौप्रसनम् ॥ कृष्णपक्षे सन्यासश्चेदपकृष्य दर्शस्थालीपाकः ॥ आरब्धत्वात्पौर्णमासस्य ॥ आवसथ्ये अग्नौ ब्रह्मान्वाधानम् ॥ नाग्नावाग्निपरिग्रहः ॥ जागरोत्तरं प्रातराग्नेयः स्थालीपाक एकदेवत्यः स्थालीपाकधर्मेणावसथ्येऽग्नौ ॥ अनन्तरं विरजाहोमस्तत्रैव पूर्ववत् ॥ समाप्ति चेत्युपस्थानान्ते ॥ अरण्याः पात्राणां चावसथ्येऽग्नौ दाहः ॥ तैजसानां गुरवे दानम् ॥ अथावसथ्याग्नेरात्मसमारोपः ॥ ॐ अयन्ते योनिर्ऋत्वियो यतो जातोऽ अरोचथाः । तं जानन्नग्नऽ आरोहाथा नो वर्द्धया रयिम् ॥ ३।१४ अस्तन्वर्या च भूमि यज्ञियो यज्ञयातनू मारुरोह देहि मे प्राणानारोह ॥ इति मन्त्राभ्यां प्रज्वलितमावसथ्याग्निं मुखोच्छ्वासेन पिबेत् ॥ सकृन्मन्त्रेण द्विः तूष्णीम् । आचम्य ॥ इत्यात्मसमारोपः । अन्यत्सर्वं पूर्ववदिति गृह्याग्नेः संन्यासप्रयोगः ॥ अथाहिताग्नेः अष्टौ श्राद्धानि गृह्याग्नौ ब्रह्मान्वाधानम् ॥ पौर्णमास्याममायां वा शुक्लपक्षे एकादश्यां द्वादश्यां वा पौर्णमास्यां चेत्पौर्णमास्यामस्तमयात्प्राक् आहवनीयदक्षिणाग्न्योरुद्धरणम् ॥ गार्हपत्ये पूर्णाहुतिवदाज्यं संस्कृत्य चतुर्गृहीतेनाहवनीये ब्रह्मान्वाधानम् ॥ तेष्वग्निषु सायंप्रातर्होमः ॥ गार्हपत्यमुत्तरेण दण्डादीनां द्वन्द्वशः सादनम् । आहवनीयं दक्षिणेन कुशेषु कृष्णाजिनमास्तीर्य तस्मिन्श्वेतवस्त्रमास्तीर्य तस्मिन्नुपविश्य जागरः ॥ प्रातः प्रातर्होमानन्तरं सद्योऽन्वाधानादि ब्राह्मणतर्पणान्तः पौर्णमासयागः ॥ अनन्तरमपकृष्य दर्शयागः ॥ एवमावसथ्ये स्थालीपाकस्यापि ॥ दर्शे चेत् ॥ दर्शेऽपि दर्शस्थालीपाकावेव ॥ शुक्लैकादश्यां द्वादश्यां चेद्दर्शपौर्णमासयोरुभयोरप्यभावः ॥ ततो वैश्वानरीयेष्टिः प्राजापत्येष्टिर्वा स्वसूत्रोक्ता । अत्र विकल्पेनान्यतरप्राप्तौ वैश्वानरीष्टिरुचिता ॥ प्राजापत्येष्टौ विहितायाः सर्वस्व दक्षिणाया दानस्यासंभवात् ॥ उक्तं च स्मृतौ ॥ प्राजापत्यां निरूप्येष्टिं तथासर्वस्व दक्षिणाम् ॥ आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहादिति ॥ अत्र कर्काचार्याः ॥

सांचेयं पुरुषमेधाख्या सर्वस्यैव-सदक्षिणा प्राजापत्येष्टिरित्युक्तवन्तः ॥ तेनवैश्वानरीयेष्टिरेव ॥ अस्याः कृष्णं वासो दक्षिणा ॥ अथ प्रयोगः ॥ देशकालौ संकीर्त्य ॥ करिष्यमाण-संन्यासपूर्वाङ्गविहितवैश्वानरीयेष्ट्याऽहं यक्ष्ये ।। अग्निर्वैश्वानरोद्वादश-कपालः ॥ सप्तदशो वज्रः ॥ कृष्णं वासो दक्षिणा ॥ ऋतावानं वैश्वानर मृतस्य ज्ज्योतिषस्पतिम् । अजस्रङ्घर्म्ममीमहे ।। इति पुरोनुवाक्या ॥ वैश्वानरस्य सुमतौ स्याम राजा हि कम्भुवनानामभि श्रीः ।। इतो जातो विश्व मिदंविचष्टे वैश्वानर यतते सूर्येण इति याज्या ॥ अन्यत्सर्वं पौर्णमासवत् ॥

प्रधानस्विष्टकृदन्तरे स्थालीतः स्रुवाहुतीर्जुहुयात् ॥ ॐ ऋतावानं वैश्वानर० मीमहे स्वाहा ॥ इदमग्नये वैश्वानराय नममेति सर्वत्र त्यागः ॥ ॐ वैश्वानरस्य-सुमतौ २६।८ सूर्येण स्वाहा वैश्वानरो न ऊतयऽ आ प्र यातु परावतः अग्निरुक्थेन मव्वाहसा शु० य० अ० २६, मं० ६—८ स्वाहा । वैश्वानरो न ऊतय आ प्रयातु परावतः । अग्निर्नः सुष्टुतीरुप स्वाहा १८।७३। पृष्ठो दिवि पृष्ठो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश । वैश्वानरः सहसा पृष्ठो अग्निः स नो दिवा स रिषस्पातु नक्तम् ॥ अश्याम तं काममग्ने तवोती अश्याम रयिं रयिवः सुवीरम् । अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते ॥ वयं ते अद्य ररिमा हि काम मुत्तानहस्ता नमसोप सद्य । यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो अग्ने ॥ धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः । सचेतसो विश्वे देवा यज्ञं प्रावन्तु नः शुभे ॥ त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥

इदमग्नय इदं ब्रह्मणे बृहस्पतये विश्वेभ्यो देवेभ्यश्च नमम ॥ ततो यजमानः पुरुष-सूक्तेनाहवनीमुदतिष्ठते ॥ सहस्रशीर्षापु० सन्ति देवाः ॥ ततः स्विष्टकृदादिकर्मापवर्गान्तं पौर्णमासवत् ॥ दक्षिणा मन्त्रे कृष्णं वासोऽस्यूर्जं मयि धेहि इति विशेषः ॥ वैश्वानरीष्टिं समाप्य आवसथ्येग्नौ प्राणादि विरजाहोमान्तं कृत्वा ॥ सं मा सिञ्चन्तु मरुतः समिन्द्रः संबृहस्पतिः । संमाऽयमग्निः सिञ्चतु प्रजया च धनेन च ( पार०गृ० ३।१३ ) ॐ संमा० चंत्विति मंत्रेण आहवनीय गार्हपत्य दक्षिणाग्नीनुपस्थाय ॥ अग्ने ( ऋ० ५ म० ३५, ) नय सुपथा रायेऽ अस्मान्विश्वानि देव-व्वयुनानि व्विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिं विधेम ॥ इतिनमस्कृत्य ॥ आवसथ्यमपि ॥ ततः श्रौतारणी मुसलोलूखलव्यतिरिक्तानि सर्वाणि काष्ठपात्राणि आहवनीये दहेत् ॥ तैजसान्यध्वर्यवे दद्यात् ॥ मृन्मयान्यश्ममयान्यप्सु क्षिपेत् ॥ ततः ॐ अयं ते योनि० ३।१४ वर्द्धया रयिम् ॥ अस्तं च यांचभमि यज्ञियो यज्ञिया तनूमारुहोह देहि मे प्राणानारोह ॥ इति

मन्त्राभ्यामाहवनीयाग्निं मुखोच्छ्वासेन पिबेत् ॥ सकृन्मन्त्रेण द्विस्तूष्णीम् ॥ इत्याहवनीयं समारोप्य गार्हपत्ये अरणी संदह्याभ्यामेव मन्त्राभ्यां गार्हपत्यं समारोप्य दक्षिणाग्नावुलूखल मूसले संदह्य मन्त्राभ्यां दक्षिणाग्निं समारोप्यावसथ्येग्नौ स्मार्तारिणिपात्राणि ॥ तैजसानि गुरवे दत्वा दारुमयानि संदह्या ऽनेनैव विधिनाऽऽवसथ्यंसमारोपयेत् ॥ एवमावसथ्यं समारोप्य गार्हपत्यं गत्वा तत्समीपे पौरुषसूक्तं जपित्वा वेदिमध्ये स्थित्वा ॥ ॐ कोऽसि कतमोऽसि कस्मै त्वा काय त्वा ॥ सुश्लोक सुमङ्गलसत्य राजन् ॥ २०।४ इतिपठेत् ॥ ततः आवसथ्यं गत्वा ॥ ॐ एह्यग्ने सह इष्टापूर्तं शरीरमनुसंचारन्नहं त्वा मपहाय परागा मा मपहाय परागाः ॥ इत्यावसथ्यं विसृज्य ॥ पुनराहवनीयसमीपमागत्य पुत्राशिषदानादियोगपट्टान्तं पूर्ववदित्याहिताग्नेः संन्यासविधिः ॥ वस्तुतस्तु ब्रह्मचारिस्नातकनिरग्निकानामग्न्यभावाद् ब्रह्मान्वाधानविरजाहोमवर्जितः कपिलोक्तः संन्यासो युक्तः ॥ स उच्यते ॥ निरग्निकः कर्ता उक्तप्रकारेण प्रायश्चित्ताष्टश्राद्धोपवासं संकल्प्य सावित्रीप्रवेशान्तं कृत्वा ॥ सायं संध्यामुपास्य कौपीनादि पदार्थसंनिधानं कृत्वा विष्वगर्चनादिना रात्रिं निनीय प्रातः स्नात्वा संध्योपास्त्यनन्तरं कौपीनादियुक्तो गत्वा पुत्राशिषदानादियोगपट्टान्तं कुर्यादिति निरग्निकसंन्यासप्रयोगः ॥ केचित्तु ॥ औपासनं ह्यावसथ्यं पृष्ठो द्विविजमेव वा ॥ लौकिकान्यतरं वापि श्रद्धावान् स यदा भवेत् ॥ इति कात्यायनेन लौकिकाग्निः ॥

---

## ३४--आतुरसंन्यासः ।

कुटीचकदीक्षाग्रहणाभावे, दैववशाच्च देहावसानसमये समुपस्थिते, आध्यात्मिक्याः समुन्नतेः शुभसंस्कारं जिघृक्षुणा मुमुक्षुणा विज्ञेनातुरसंन्यासो गृहेलिमः । आतुरसंन्यासविधिरधो निर्दिश्यते । विधिविधानासमर्थो मुमुक्षुः कमपि संन्यासिनं श्रीगुरुदेवरूपं द्वारीकृत्य केवलं प्रेषमन्त्रोपदेशं गृहीत्वा, स्वयमुच्चार्य्य च आतुरं संन्यासव्रतं सफलीकुर्यात् । ततश्च स्थूलदेहावसाने वासनामयभोगलोकत उपरि तस्योत्तमलोकस्य गतिस्तेनावाप्यते । संन्यासिनोऽप्यभावे चतुरो ब्राह्मणान् द्वारीकृत्य प्रेषमन्त्रस्य पृथक् पृथक् चत्वारि पदानि श्रुत्वाऽसौ स्वयं संन्यासी सम्पद्यत इति शास्त्रसम्मतः सिद्धान्तः । ज्ञानमार्गारूढो मुमुक्षुस्तु स्वयमपि प्रेषमन्त्र मुच्चार्य संन्यासे दीक्षितः सम्भवति ।

## ( आतुरसंन्यासविधिः )

स च जाबालोपनिषदि "यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत्" इत्यादिनोपदिष्टः । आतुरो द्विविधः । रोगादिना मुमूर्षुः जलादिव्याघ्रादिभयाक्रान्तश्च ।

आतुराणां च संन्यासे न विधिर्नैव च क्रिया ।
प्रैषमात्रं समुच्चार्य संन्यासं तत्र कारयेत् ॥

इत्यादिवाक्यै रोगाद्यातुरस्य पुरुषसूक्तहोमविरजाहोमोपवासजागरणाद्यङ्गकलापरहितः संन्यासो भवति । तत्राथ प्रयोगः अङ्गिरसोक्तप्रकारेण प्रदर्श्यते ।

प्रक्षालितपाणिपादः शुद्धवस्त्रे सन्धार्य मन्त्रस्नानं कृत्वाऽऽचम्य प्राणानायम्य हस्ते कुशादिकमादाय देशकालौ सङ्कीर्त्यामुकशर्माऽहं मम करिष्यमाणसंन्यासेऽधिकारसिद्ध्यर्थं चतुष्कृच्छ्रात्मकव्रतप्रत्याम्नायगोचतुष्टयनिष्क्रयद्रव्यं रजतं चन्द्रदैवतं विप्रेभ्यो विप्राय वा दातुमहमुत्सृजे इति सङ्कल्प्य दद्यात् ।

पुनः कुशादिकमादाय देशकालकीर्तनान्ते मम निरतिशयानन्दावाप्तये परमहंसाश्रमाधिकारसिद्ध्यर्थमातुरविधिना संन्यासमहं करिष्य इति संकल्प्य ब्राह्मणानुज्ञया शिखायाः पञ्च सप्त वा केशानवशेष्य वपनं कृत्वा स्नात्वा सन्ध्यादिकर्म यथासम्भवं सम्पाद्य जलसमीपं गत्वा पात्रे अप उद्धृत्य तस्मात् हस्ते जलमादाय अप्सु जुहोति । जलाशयसान्निध्याभावे पात्रान्तरे जलं धारयित्वा हस्ते जलमादाय तत्र जुहोति—

"ॐ एष वाऽग्नेर्योनिर्यः प्राणः प्राणं गच्छ स्वां योनिं गच्छ स्वाहा" इति प्रथमाहुतिं हुत्वा—

"ॐ आपो वै सर्वा देवताः सर्वाभ्यो देवताभ्यो जुहोमि स्वाहा" इति द्वितीयाहुतिं हुत्वा पात्रस्थं हुतशेषं जलम् "आशुः शिशान" इत्यनुवाकेन "जयन्तं त्वाऽनुदेवा मदन्तु" इत्यन्तेनाभिमन्त्र्य—

"ॐ पुत्रैषणावित्तैषणालोकैषणा मया त्यक्ताः स्वाहा" इत्यभिमन्त्रितोदकं हस्तेन किञ्चिदादाय प्रथमं पीत्वा—

"ॐ अभयं सर्वभूतेभ्यो मत्तः स्वाहा" इति द्वितीयवारं किञ्चित्पीत्वा
"ॐ संन्यस्तं मया स्वाहा" इति तृतीयवारं निःशेषं पिबेत् ।
ततो गायत्रीं व्याहृतिषु प्रवेश्य व्याहृतीः प्रणवे प्रवेशयेत् ।
तद्यथा - ॐ भूः सावित्रीं प्रविशामि तत्स० ण्यम् ।
ॐ भुवः सावित्रीं प्रविशामि भर्गो० हि ।
ॐ स्वः सावित्रीं प्रविशामि धियो० यात् इति व्यासेन०—

ॐ भूर्भुवः स्वः सावित्रीं प्रविशामि तत्सवि० यात्।

इति समासेन गायत्रीप्रवेशः।

ॐ व्याहृतिं प्रविशामि भूः।

ॐ व्याहृतिं प्रविशामि भुवः। ॐ व्याहृतिं प्रविशामि स्वः। ॐ व्याहृतीः प्रविशामि भूर्भुवः स्वः। इति व्याहृतिप्रवेशः।

ततः प्राङ्मुख ऊर्ध्वबाहुः—

ॐ भूः संन्यस्तं मया ॐ भुवः संन्यस्तं मया ॐ स्वः संन्यस्तं मया ॐ भूर्भुवः स्वः संन्यस्तं मया इत्युपांशु मध्यममुच्चैश्च त्रिः ब्रूयात्। ततः—

ॐ अभयं सर्वभूतेभ्यो मत्तः स्वाहा इति प्राच्यां दिश्युदकं निनयेत्। ततस्तूष्णीं शिखां निकृत्य यज्ञोपवीतं च छित्वा तद्द्वयमुदकाञ्जलिना सह गृहीत्वा ॐ भूः स्वाहा इत्यप्सु जुहुयात्। तत ऊर्ध्वं पितृगृहं न गच्छेत्। अत्यन्तमातुरश्चेत् प्रैषमात्रं वदेत्। तत आचम्य यस्य स्मृत्येति पठेत्।

इत्यातुरसंन्यासप्रयोगः।

आतुरस्य च संन्यासे विशेषः कोऽपि नो विधिः।
अल्पान्नाभ्यवहारेण रहःस्थानासनेन च।
ह्रियमाणानि विषयैरिन्द्रियाणि निवर्तयेत्।
प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत्कृताः॥
व्याहृतिः प्रणवैर्युक्ता विज्ञेयं परमं तपः।
दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात्।
प्राणस्योत्क्रमणासन्नकालस्त्वातुरसंज्ञिकः
नेतरस्त्वातुरः कालो मुक्तिमार्गप्रवर्तकः।
आतुरेऽपि च संन्यासे तत्तन्मन्त्रपुरःसरम्।
मन्त्रावृत्तिं च कृत्वैव संन्यसेद्विधिवद्बुधः॥
आतुरेऽपि क्रमे वाऽपि प्रैषभेदो न कुत्रचित्।
न मन्त्रः कर्मरहितः कर्म मन्त्रमपेक्षते।
अकर्म मन्त्ररहितं नातो मन्त्रं परित्यजेत्॥
मन्त्रं विना कर्म कुर्यात् भस्मन्याहुतिवद्भवेत्।
विध्युक्तकर्मसंक्षेपात् संन्यासस्त्वातुरः स्मृतः।
तस्मादातुरसंन्यासे मन्त्रावृत्तिविधिर्मुने।
आहिताग्निर्विरक्तश्चेद्देशान्तरगतो यदि।

प्राजापत्येष्टिमप्स्वेव निवर्त्यैवाथ संन्यसेत्।
मनसा वाथ विध्युक्त-मन्त्रावृत्याऽथवा जले।
श्रुत्यनुष्ठानमार्गेण कर्मानुष्ठानमेव च।
आतुरस्य तु संन्यासे प्रैषमात्रं हि केवलम्।
न श्राद्धादि न चान्यत् स्याज्जलमध्यादि सर्पणम्।
प्रैषं वक्तुमशक्तश्चेद्वाच्योऽसौ मनसैव हि।
प्रैषं कुर्यात् स्वयं धीरो मरणे समुपस्थिते।
आतुराणां तु संन्यासे न विधिर्नैव च क्रिया॥
प्रैषमात्रं समुच्चार्य संन्यासं तत्र कारयेत्।
तनुं त्यजेद्धि यो विप्रः कृत्वा संन्यासमात्मवान्।
मानसाद्वाचकाद्वापि प्रैषादेवात्र जायते।
कालान्तरेऽथवा सद्यो ब्रह्मलोकं स गच्छति॥
सन्न्यस्तमिति यो ब्रूयात् प्राणैः कण्ठगतैरपि।
स सूर्यमण्डलं भित्वा ब्रह्मलोके महीयते।
ब्रह्मणो मरणे तेन ब्रह्मणा सह धैर्यवान्।
यदि संस्कारशेषः स्यात्स्वयं स्वश्राद्धमाचरेत्।
इति कुटीचक संन्यासपद्धतिः समाप्ता।

——:***:——

## ३५—बहूदकव्रतग्रहणम्।

कुटीचकव्रतधारी मुमुक्षुरेव पूर्वोक्तप्रकारानुसारं तीर्थवासादिकमनुतिष्ठन् आत्मोन्नतिं विदध्यात्। ततश्च वर्षत्रयानन्तरम् इतः पूर्वं वा स्वकीययोग्यतानुरूपं बहूदकसंन्यासव्रतं गृहीत्वा मुक्तावुत्तिष्ठेत। कठिनतमस्य संन्यासधर्मस्य चरितार्थतायै गुर्वाज्ञावशवर्त्ती भवन् कुटीचक-बहूदक-हंसाचारान् क्रमशः परिपालयन् साधको महात्मा त्रिलोकपवित्रयित्रीं परमहंसगतिमासादयेत्। नाऽत्र क्षिप्रकारिता विधेया। उत्तरोत्तरसाधनक्रमे श्रीगुरुदेवस्य दयोपदेशादिकमेव मुख्यमवलम्बनम्। गुर्वाज्ञामनुसृत्य, आत्मनो योग्यताया औचित्यमनुसृत्य वा अधिकारमिममधिगन्तुमर्हेत्। कल्याणकरस्यैतस्याधिकारस्यावाप्तये शुभेऽवसरे तेन गुरुरेवमभ्यर्थनीयः—

### ( बहूदकव्रतग्रहणार्थं गुरुप्रार्थना )

हे शिष्यहृत्तमोहारिन् करुणावरुणालय!

संसारसिन्धुसन्तारिन् गुरुदेव ! नमोऽस्तु ते ।
कुटीचकव्रतं धृत्वा कृपया भवतः किल ।
दुरूहे साधनामार्गे समर्थः सर्त्तुमग्रतः ॥
अलब्धीं तावकीनां हि दयामनुभवन्नहम् ।
उपस्थितोऽस्मि भगवन् भवतश्चरणाम्बुजे ॥
भवान् प्रसन्नो मयि चेत् सर्वथाऽऽज्ञावशंवदे ।
भवदीयो मया यद्वा निदेशः परिपालितः ॥
आध्यात्मिके सुमार्गे माम् अग्रे सारयितुं प्रभो !
दीक्षा द्वितीया दातव्या नाश्रयोऽन्यस्त्वया विना ॥

### ( गुरोरनुग्रहः )

हे वत्स ! कुलदीप ! त्वं भाग्यवानसि सर्वथा ।
पितृदेवर्षिदयया सफलं ते कुटीव्रतम् ॥
तुभ्यं सानन्दमधुनाऽधिकारं देवदुर्लभम् ।
बहूदकव्रतस्याहं परिपालयितुं ददे ॥
तत्त्वज्ञानेषु निष्णातो भगवद्भक्त उत्तमः ।
निवृत्तिमार्गे परमे परं साफल्यमागतः ॥
कर्मयोगी भवन् सद्भिरुपायैः शास्त्रदर्शितैः ।
जीवन्मुक्तपदे श्रेष्ठे प्रतिष्ठामाशु लप्स्यसे ॥

——:***:——

## ३६—बहूदकादिसंन्यासाधिकारप्राप्तिः ।

देवदुर्लभां परमहंसगतिं, त्रिलोक-पवित्रकारिणीं जीवन्मुक्तिदशां च प्राप्तुं यथा किल संन्यासाश्रमस्य महत्त्वं, तथैवाश्रमान्तरापेक्षया संन्यासाश्रमस्य काठिन्यमपि सर्वसम्मतमेव । एतादृशसमुन्नततमाधिकारप्राप्तये-क्रमोन्नतिसोपानेषूत्तरोत्तरमारोहणं नितरामावश्यकम् । पूर्वजन्मार्जित-सत्कर्म-फलमहिम्ना कल्याणकारिण्याः श्रीजगदम्बायाः कृपाधिक्येन शब्दब्रह्मातिवर्त्त-मानो भाग्यवानधिकारी यदि सहसैवात्मज्ञानमुपलभेत, तर्हि तदर्थं नास्ति किमपि विधिनिषेधप्रयोजनीयत्वम् । "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति श्रुतिरेवात्र प्रमाणम् । किन्तु क्रमशः समुन्नताधिकारप्राप्तये सोपाना-रोहणमावश्यकमेव । एतत् क्रमानुसारमेव कुटीचक-बहूदक-हंस-परमहंसा-ख्याश्चत्वारोऽधिकारा निर्दिष्टाः । एतेषु त्रयः साध्यावस्थान्तर्गताः, चतुर्थस्तु

सिद्धावस्थाकोटिगः । अतश्चतुर्थस्य परमहंसाश्रमस्य कृतेऽधिकारनिर्णयो निष्प्रयोजन एव । अधिगतस्वरूपज्ञानो महात्मा मनोवासनानाशपुरस्सरं जीवन्मुक्तदशामधिकरोति । जीवन्मुक्तो महापुरुष एव परमहंस इत्युदीर्यते । परमहंसदशाऽपि स्थूलशरीरगतिमनुसृत्य ईश-कोटि-ब्रह्म कोटि-तुरीयातीता-वधूतप्रभृति-बहुभेदभिन्नाऽवगन्तव्या । एतस्याः त्रिलोकपवित्रकारिण्या गते-रधिगमनात् पूर्वमधिकारनिर्णयो नितरामपेक्षितः । अधिकारनिर्णयं सर्वज्ञो गुरुदेव एव सुसम्पादयितुं शक्नोति ।

मध्यमम्, उत्तमम्, अधिमात्रम्, परमं चेति वैराग्यं चतुर्धा विभक्तम् । इन्द्रियभोगसाधनेषु विषयेषु, साधारणासु एषणासु च दोषदर्शनमेव मध्यमं वैराग्यम्, वैषयिकसंगे दुःखप्रतीतिरुत्तमं वैराग्यम्, विषयस्मरणमात्रेणैवान्तःकरणे आध्यात्मिकसुखाभावरूपो दुःखसद्भावो हि अधिमात्रवैराग्यम्, अन्तःकरणस्य विषयाकारधारणायाः पूर्णः परित्यागः, विषयेभ्यः पूर्णरूपेण मनसो वैमुख्यम्, एकतत्त्वमयी चित्तावस्था चेति परमं वैराग्यमवगन्तव्यम् । अस्यामवस्थायां नरोऽयं साक्षान्नारायणोऽवगम्यते । वस्तुतस्तु ब्रह्मसद्भावः, स्वरूपोपलब्धिः, परा भक्तिः, परमं वैराग्यम् कर्मयोगिता, तुरीयातीतावस्था, जीवन्मुक्तिश्चेति नामान्तराणि विज्ञातव्यानि । एतस्या अवस्थाया अनुसरणं नास्ति किल साधारण-बुद्धिगोचरम् । मध्यमम् उत्तमम्, अधिमात्रं चेति वैराग्यत्रयं विचारगोचरता-मापद्यते । मध्यमस्य, उत्तमस्य, अधिमात्रस्य च वैराग्यस्य यथाक्रमं समुदये कुटीचकबहूदक-हंसाख्यानां संन्यासाधिकाराणां क्रमशः प्राप्तिः शास्त्रसिद्धा । साधनचतुष्टयेऽपि तथैवावगन्तव्यम् शमदमादि षट् सम्पत्तिः, नित्यानित्यवस्तु-विवेकः, इहामुत्रफलभोगविरागः, मुमुक्षुत्वं चेति साधनचतुष्टयम् । अत्र मुमुक्षुत्वं नाम सर्वहिताधायकं त्रिभिरपि समानरूपेणावलम्बनीयम् । अवशि-ष्टानि त्रिणि शनैःशनैः एकैकपूर्णतया प्राप्तव्यानि । षट्सम्पत्तिविशेषप्रयत्न-शीलस्य कुटीचके, नित्यानित्यवस्तु विवेके प्रयतमानस्य च बहूदकेऽधिकारदानं समुचितम् । एतदधिकारद्वयप्राप्तौ सत्यामिहामुत्रफलभोगविरागसिद्धौ च हंसव्रताधिकारः कल्याणकरः । सर्वत्रैव गुरोराज्ञयैव साधकैर्व्यवहर्तव्यम् । मुमुक्षोर्ज्ञानाधिकारपरीक्षणं गुरुदेवेनैवानुष्ठेयम् । ज्ञानदा, संन्यासदा, योगदा, लीलोन्मुक्तिः, सत्पदा, आनन्दपदा, परात्परा चेति सप्त ज्ञानभूमयो राजयोग-शास्त्रे निर्धारिताः । प्रथमयो र्द्वयोः कुटीचके मध्यमयो र्द्वयो बहूदके, अन्तिमानां तिसृणां चाधिकारदानं हंसे हितकरं कल्याणसाधकं फलप्रदं च सिध्यति । आचार-प्रकृति प्रवृत्ति-संस्कार-शक्तीनां विचारानुसारेण कुटीचकस्य बहूदकस्य

हंसस्य वाऽधिकारो दातव्यः । सर्वज्ञो गुरुदेव एव तन्निर्णयं विधातुं शक्नोति । जीवमात्रस्यैकमात्रपोषकोऽहङ्कारोऽवगन्तव्यः । सर्वनाशकरोऽयमहङ्कार उत्तरोत्तरं ह्रसते नवेति परीक्ष्यैव समुन्नताधिकारदानं श्रेयसे कल्पते । अहङ्कारिणे बहूदका-धिकारार्पणं तदमंगलं जनयति । अहङ्कृतिलेशस्यापि सद्भावे कुटीचकव्रत-पालनमेव कल्याणकरम् । चतुर्धा एषणा विभक्ताः—वित्तैषणा, दारैषणा,पुत्रैषणा (शिष्यैषणा वा ),लोकैषणाचेतिचतुर्विधैषणापरित्यागानान्तरमेव बहूदकसंन्यास-ग्रहणेऽधिकारः । कुटीचकसंन्यासिना गुरुकृपया शास्त्रव्यासंगतपस्साधनादिभि-रेषणाचतुष्टयं विजित्यैव बहूदकसंन्यासाधिकारे प्रवेष्टव्यम्, नाऽन्यथेति शास्त्रीयः पन्थाः । लोकैषणा शिष्यैषणा च संन्यासिनो हंसधर्मपरिपालने नितरां बाधेते, अतो बहूदकव्रतग्रहणतः पूर्वं नामयशःशिष्यवृद्धिसमीहा सर्वतः परिहातव्या । एषणासद्भावे संन्यासधर्मचारितार्थ्यमसम्भवप्रायमेव । विद्यासन्ततेः शिष्य-सम्प्रदायस्य वा परिवर्धनं केचिदाचार्या अनुमोदन्ते । किन्तु सम्प्रदायविशेष-सम्बन्धवतां लोकसंग्रहेण धर्मस्थापने प्रवृत्तानां, बहूदकानां हंसानां परमहंसानां वा स्वाभाविकाऽहंकारमोहतो निवर्त्तमानानां, विद्यासन्ततीनां शिष्यश्रेणीनां वा परिवर्द्धनं समुचितमिति तदभिप्रायः । कुटीचकव्रतधारी स्वीयसंम्प्रदाय-मनुसृत्य साधारणधर्मोपदेशदाने न निषिध्यते किन्तु शिष्यैषणा-वृद्धिरपि तत् तपोबाधिकैवेति निश्चप्रचम् । बहूदकेनैवाऽयमधिकारो गुरोराज्ञया प्राप्तुं शक्यते ।

——:***:——

## ३७—स्नानसंकल्पादयः ।

गङ्गास्नानं निकटस्थतीर्थस्नानं वा समन्त्रकमनुष्ठाय श्रीगुरुचरणशरणं शरणीकृत्य पूर्ववन्महासंकल्पं कुर्य्यात् । ( महासंकल्पः पूर्ववदनुष्ठेयः, केवलं कुटीचकस्थाने बहूदकशब्दः प्रयोक्तव्यः ) ततश्च गुरुपूजां विधाय साधनोप-रणदण्डादिशोधनं यथापूर्वं सम्पादयेत् । सम्प्रदायविशेषे दण्डद्वयधारणविधौ वर्त्तमाने सति त्रिदण्डं परित्यज्य दण्डद्वयमेव स्वीकुर्यात् । सर्वस्यामप्यवस्थाया-मेकदण्डः प्रशस्यते । यतस्त्रिदण्डधारिणा मुमुक्षुणा मनोवाकायरूपं त्रिदण्डं धृत्वा सदैवान्तर्मुखेन भवितव्यम्, इत्येव त्रिदण्डस्याध्यात्मिकं रहस्यम् । द्विदण्ड-धारिणा तु अन्तर्धारणाबहिर्धारणारूपदण्डद्वयावलम्बनेन स्वकीयान्तःकरणधृतिं स्थिरयति अन्तर्मुखत्वमासादयति च । द्विदण्डस्यैतदेवाध्यात्मरहस्यम् । किन्तु तत्त्वदर्शिमहर्षिसमर्थितमेकदण्डमाहात्म्यं तु सर्वतोऽतिरिच्यते । एकदण्डस्तु ज्ञानमयाद्वैतबोधकः स एव विज्ञानमयकोषाधाररूपः । एकतत्त्वप्रातिरूपिणी धारणा मनोमयकोषस्याधारस्वरूपा । योगिनो हि स्वशरीरस्थो मेरुदण्डोऽद्वितीय

आश्रयः । स च प्राणमयं कोषं स्थिरीकरोति । गोमहिषकुक्कुरसर्पादिभयवारणाय स्थूलशरीरसुखप्रद आधार एकदण्ड एवान्नमयेन कोषेण सह सम्बध्नाति । सहि संन्यासाश्रमस्य मुख्यं चिन्हमपि । अस्मादेव कारणात् कुटीचकबहूदकहंस-व्रतधारिणां कृते दण्डधारणं व्यवस्थापितम् । जीवन्मुक्तदशां प्राप्तस्य परमहंसस्य कृते तु न कोऽपि विधि दृश्यते सर्वदैवानन्दमयकोषेऽवस्थितः परमहंसस्तु शश्वत् स्वस्वरूपमुपलभमानः सांसारिकं कार्यं कुर्वाणोऽपि "पद्मपत्रमिवाम्भसा" सर्वतो निर्लिप्तो ब्रह्मानन्दाम्बुधावुन्मज्जति निमज्जति चेति ।

## ३८–बहूदकव्रतग्रहणनिमित्तकहवनादयः ।

संन्यासमार्गेऽग्रेसरता कुटीचकेन संन्यासिना स्वयंहवनादिकमकृत्वा कमपि योग्यकर्मकाण्डिनं द्वारीकृत्य बहूदकव्रतग्रहणं विधेयम् गुरोराज्ञैवात्र प्रमाणम् । कृपालुर्गुरुदेवो यथोचितमनुष्ठातुमाज्ञापयेत् ।

पूर्वोक्त प्रकारेण गणपतिपूजनं, पुण्याहवाचनं मातृकापूजनं ब्रह्माञ्जलिं च यथा पूर्वं विदध्यात् । द्वितीयदिने गुरोराज्ञया ब्राह्मणद्वारा अग्निं स्थापयित्वा प्राणादि होमं पुरुषसूक्तहोमं विरजाहोमं चानुतिष्ठेत् ब्राह्मणद्वारा अग्निस्थापनादि-कार्ये सम्पाद्यमानेऽपि स्वयमेवाहुतिं प्रदद्यात् । अग्निसमारोपणप्रक्रियां मानसिक-धारणया सम्पादयेत् । ततश्च गुरुदेवकृपापूर्वकं गायत्रीप्रवेशः सम्पादयितव्यः तद्विधिस्तु निम्ननिर्दिष्टः ।

ततो नाभिप्रमाणं जलं प्रविश्य प्राङ्मुखः सन्गायत्रीं प्रविशामि इतिसंकल्प्य । ॐ भूः सावित्रीं प्रविशामि, तत्सवितुर्वरेण्यं । ॐ भुवः सावित्रीं प्रविशामि, भर्गोदेवस्य धीमहि । ॐ स्वः सावित्रीं प्रविशामि, धियो योनः प्रचोदयात् । ॐ भूर्भुवः स्वः सावित्रीं प्रविशामि, तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात् । ॐ परोरजसि सावदोमिति जपित्वाचम्य प्रण-वमयमात्मानं ध्यात्वा जले स्थितः ॐ तरत्समंदीति चतुरृचं जपित्वादित्यमुपतिष्ठेत, पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थितोऽहं भिक्षाचर्यं चरा-मीत्युक्त्वा पाणिनाप्सु आपो हुत्वा प्रैषोच्चारं कुर्यात् ।

ततश्च श्रीगुरुदेवेन कृपापूर्वकं कुटीचकदीक्षायां वाचनिकरूपेण यस्य प्रैषमन्त्रस्योच्चारणं कारयितमासीत् दार्शनिकस्वरूपेण तन्मननं "यतिधर्म-रहस्य" नामकाध्यायानुसारेण शिष्येण समनुष्ठापनीयम् । ततश्च गुरुर्बहूदक-चिन्हधारणमाज्ञापयेत् । आधिदैविकाध्यात्मिक-शक्तिसम्पादनाय शिष्येण सम्प्रार्थितो गुरुर्बहूदकसंन्यासव्रते दीक्षितं विधातुं पूर्वोक्तप्रकारं शिष्यमभिषे-चयेत्, शान्तिपाठं च विदध्यात् ।

# सूर्योदयः ।

एकादशे वर्षे } ज्येष्ठस्य पूर्णिमा सं० १९९३, { द्वादश-संख्या


## सम्पादकीया अभिप्रायाः ।

—:०:—

### संस्कृतज्ञानां जीविका समस्या ।

—०:※:०—

सम्प्रति वर्णव्यवस्थाया अव्यवस्थितत्वात् वर्तमान-शासकानां औदासीन्येन भारतवर्षीयाऽचारविचारपरिवर्तनेन च सर्वत्रैव वृत्तिसाङ्कर्य्यं दृश्यते । पूर्वमिह भारते आर्थिकदशा सुव्यवस्थिता आसीत् । यतो हि इहत्या ब्राह्मणा ज्ञातदेश-तत्त्वसाराः सर्वत्रैव ज्ञानप्रसारकृत्येन जनान् सुमार्गे नयन्तिस्म । विविध-शिक्षया सर्वानेव स्व-स्वव्यापारे व्यापारयन्तिस्म। प्रतिनगरं प्रतिग्राममटाट्यमानाः संस्कृतभाषाध्यायिनो ब्राह्मणा स्तत्तत्प्रान्तीयभाषाभिज्ञाः सन्तः सर्वा अपि जनताः कथावार्तया धार्मिकं सामाजिकमार्थिकं सुव्यवस्थानञ्चोपदिशन्तिस्म । ता जनता अपि ब्राह्मणान् अन्नवस्त्रादिप्रदानेन स्वपोषं पुष्यन्तिस्म । सम्मानार्हणादिना च समर्चन्तिस्म । ब्राह्मणानामुपदेशेन क्षत्रियो राजानश्च स्वकृत्यतत्पराः शासन-कर्मणि कुशलाः प्रजानां कृषिव्यापारादि-सम्बर्द्धनाय प्रयतन्तेस्म । चौर-लुण्ठाकानाञ्च दण्डव्यवस्थाभि नियमनं कुर्वन्तिस्म । ब्राह्मणानामेव सततमुद्योगेन समुचितोपदेशेन च नियन्त्रिता वैश्या विविधवाणिज्येन देशमिमं रत्नसमृद्धं कुर्वन्तिस्म, कृषिगोरक्षण-वाणिज्यादि-व्यापारेण देशदेशान्तरीय-द्रव्यजातमिह देशे समानयन्तिस्म । येन देशोऽयं तदानीं सुवर्णभारत इति संज्ञया वैदेशिकैराकार्य्यते स्म । किं बहुना तदा वर्णत्रयस्य च स्वकर्म-व्यापृततया शूद्रा अपि साधु स्वकर्तव्य-कुशला उद्यमशीला देशोन्नतिकरकर्मणि व्यापृता एव आसन् । ब्राह्मणानामिदानीन्तनानां प्रशस्यं कृत्यं दृष्ट्वैव भगवता मनुनाऽभिहितम्—

> "एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
> स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥" इति ।

अद्यत्वे तु सर्वोऽपि वर्णाश्रमव्यवहारो विगुणितो जातः। ब्राह्मणानान्तु सर्वमेव जीविकानिर्वाहस्रोतः संघीभूय वैदेशिकैः स्वभाषाध्यापनप्रचारेण निरुद्धं विद्यते। सम्प्रति सर्वत्रैवाध्ययनाध्यापनादिकृत्यं सर्वेऽपि वर्णाः समाचरन्ति। प्रतिष्ठितं पदन्तु तत्रापि चान्यैरेवाक्रान्तम्। न्यायाधीशपदं प्राड्विवाकपदं सर्वविधं ज्ञान-विज्ञानप्रसारमार्गजातं आङ्गलभाषाविद्भिः स्वायत्तीकृतं विद्यते। तेभ्यस्त्यक्तं स्थानमप्यल्पमनुन्नतमेव विद्यते। तत्रापि वर्णान्तरगा भारतीया एव विराजन्ते। इत्येवमिहत्या भारतीयाः संस्कृतज्ञा ब्राह्मणास्तु सङ्कुचित-वृत्तिकाः सन्तो विद्या-विज्ञान-कलामार्गं विहाय बहवो व्यापारान्तरमाश्रित्य कथमपि जीवनं यापयन्ति। बहवश्च सर्वतः सङ्कुचिताः स्त्रीबालक-शूद्र-कलकनमेवानुतिष्ठन्ति। बहवस्तु पौरोहित्यादि-कर्मणा स्वनिर्वाहं कुर्वन्ति। अतश्च संस्कृताध्ययनमल्पीयांस एव ब्राह्मणाः कुर्वन्ति। तेऽपि जीविका-समस्याग्रस्ताः पराश्रयेण परलोक-सत्ता-विश्वास-शून्यानामेव वर्णान्तराणां पुरतः कथं कथमपि दुर्गापाठ-जप-देवार्चनादिना धर्मशास्त्र-विगर्हितवृत्त्या वा स्वजीवन-यात्रां चालयन्ति। मूर्खाश्च ब्राह्मणयुवाः पाकनिर्माणप्रपाचालन-धावकादिकृत्यैः स्ववंशज-मर्य्यादां विगुणयन्ति। अहो! कालप्रभावः! येषां ब्राह्मणानां कृते भगवान् मनुरेवमादिशति यत्—

"सर्वेषां ब्राह्मणो विद्याद् वृत्त्युपायान् यथाविधि।
प्रब्रूयादितरेभ्यश्च स्वयञ्चैव तथा भवेत्॥"

शास्त्रान्तरेष्वपि—

"सर्वस्वं ब्राह्मणस्येदं यत् किञ्चिज्जगतीतले।
तस्यैव सम्प्रसादेन भुञ्जते त्वितरे जनाः॥"

"स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च" इत्यादि

सम्प्रति तेष्वेव ब्राह्मणेषु संस्कृतभाषाध्येतारस्तु स्वजीवन-निर्वाहायैवं विलपन्ति। तथाहि—

"जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया,
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।
कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना,
मयाप्तं रामत्वं कुशलवसुता नत्वधिगता॥"

तदन्यभाषाध्येतारश्च ब्राह्मणा यत्र कुत्रचन सेवक-लेखकादि-कृत्येषु भृत्यत्वेन कर्मणा स्वजीवन-निर्वाहं कुर्वन्ति। अक्षरज्ञान-शून्याश्च तज्जातीयाः शूद्र-कर्मणोदरपोषणमाचरन्ति। साम्प्रतं ब्राह्मणजातेरवस्थावर्णने न प्रभवति लेखनी। किन्तु—महाभारतीयाऽर्जुनदशैवोपस्थिता भवति। तथाहि—

वेपथुश्च शरीरे मे रोमहर्षश्च जायते।
लेखनी स्रंसते हस्तात् त्वक् चैव परिदह्यते
नच शक्नोम्यवस्थातुं भ्रमतीव च मे मनः।
निमित्तानि च पश्यामि विपरीतानि पाठकाः!

सत्येवं व्यतिकरे संस्कृताध्यायिभि र्ब्राह्मणैः किमनुष्ठेयमिति क्षणमपि दत्तावधाना भूत्वा विचारयन्तु संस्कृतज्ञा विद्वांसो विद्यार्थिनश्च।

अस्माँस्तु प्रतिभाति यदद्य यावदिह भारते यत् किञ्चिदपि समनुष्ठितं तद्ब्राह्मणैरेव। यद्यधुनाऽपि संस्कृतज्ञा ब्राह्मणा विद्वांसो ज्ञातदेशकालात्मतत्त्वा भारतीय-संस्कृतिरक्षापरा बद्धपरिकरा भूत्वा इहत्य-धर्मविज्ञान-धर्मकल्पद्रुम-पुराणरहस्य—प्रभृति—धर्मोपदेशप्रदग्रन्थान् महामण्डलतः प्रकाशितानन्यांश्च धर्मोपदेशग्रन्थान् तथा रामायण-महाभारत-भागवतादि-धर्मग्रन्थानधीत्य प्रतिग्रामं प्रतिनगरं प्रविश्य धर्मोपदेशकृत्यं कुर्य्युस्तेनैव सह देशकालोपयोगि आयुर्वेद-ग्रामसंग्रन्थन-स्वास्थ्येतिवृत्त—शौचाचाराद्यत्यावश्यक—ज्ञानञ्च विप्रतो व्यासकथाप्रणाल्या जनताः प्रबोधयेयुस्तदाऽल्पेनैव कालेन भारतीया जनता ज्ञात-स्वकर्तव्या भूत्वा भारतमिमं देशं भारतं कुर्य्युः। संस्कृतज्ञानां जीविका-समस्याऽपि स्वयमेव सुघटिता स्यात्। साम्प्रतं पाश्चात्यवात्याऽन्धीकृतनयनाः किंकर्तव्यविमूढा नवयुवका अपि स्वमार्गं समागच्छेरन्। सर्वोऽपि देशः प्रसाद-मधिगत्य स्वसंस्कृति-परिचितः स्यात्। कृत्यमिदं संस्कृतज्ञैरेवानुष्ठातव्यं भविष्यति। नान्योऽधिकारी भारतीय-संस्कृति-संरक्षणे।

"सर्वस्वं ब्राह्मणस्येदं यत् किञ्चिज्जगतीतले"

यदिदमुक्तं तत् प्रत्यक्षरं सत्यं विद्यते। यदि ब्राह्मणा ब्राह्मण-कृत्यं विदध्युः, तर्हि तेषामवश्यमेव हस्ते भारतीयं सर्वम् रत्नं सर्वतः समुपस्थितं स्यात्। सम्प्रति ये केऽपि सर्वजनीनं कृत्यं कुर्वन्ति, तेषां हस्तेऽनायासेनैव द्रव्यजातमायाति याञ्चाया अपि नायात्यवसरः। यदि ब्राह्मणास्तत् कृत्यं करिष्यन्ति तर्हि तेषां द्रव्याभावस्तु कदापि स्थास्यत्येव नहि। इदं हि सम्प्रति ब्राह्मणानां परमं कृत्यमस्ति यद् सदुपदेशप्रदानेन पौरोहित्येन च जनानां सन्मार्गं प्रवर्तनम्, वर्णव्यवस्था—रहस्यप्रचारणम्, देशकालानुरूप-धर्मोपदेशेन वर्णाश्रम-धर्मसंरक्षणम् इत्यादि। संस्कृतज्ञानामेवालस्यौदासीन्यतस्तु देशोऽयं स्वकर्तव्य-च्युतो भूत्वा पाश्चात्यधर्मशून्यशिक्षा-निरतो दैनन्दिनं वर्णाश्रम-धर्म-मर्यादां परिजिहीर्षुर्म्लेच्छतामृच्छति। संस्कृतभाषाञ्च मृतभाषां मन्यमानस्तदध्ययनतो विमुखीभवन् युवकसमाजो ब्राह्मणान् संस्कृतगिरो वेदाँश्च निन्दति। येन संस्कृता-

व्यायिनां जीवननिर्वाहोऽपि दुष्करतां जातो विद्यते, का कथाऽन्यविषये । महा-पण्डितेन राजनीतिनिपुणेन चाणक्येनापि—

"व्यवस्थितार्य्यमर्य्यादः कृतवर्णाश्रमस्थितिः
त्रय्या हि रक्षितो देशः प्रसीदति न सीदति"

इत्यादिना वर्णाश्रममर्य्यादारक्षणेनैव वेदधर्मप्रचारेणैव च देशोन्नति र्व्या-हारि । अतश्च समुपसंहरन्तो वयं पौनःपुन्येन संस्कृतज्ञाननुरुन्ध्मो यत्ते वर्तमान-पाश्चात्य-शिक्षा-पद्धतिं परिहाय धर्मोपदेशयुक्तां-शिक्षामधिगत्य कार्य्यक्षेत्रे-ऽवतरन्तु । देशकालात्मज्ञानं कृत्वा देशरक्षां वर्णाश्रमधर्म-मर्य्यादा-रक्षां स्वप्राचीन-संस्कृति-रक्षां ब्राह्मण गौरवरक्षाञ्च कुर्वन्तः स्वजीविकासमस्यां सरलीकुर्वन्तः पाश्चात्य-पैशाचिकाऽधर्मभावं वर्द्धमानं निरुन्धन्तु । नो चेद्दिनानुदिनं देशोऽयं धर्मपथात्परिभ्रष्टोऽर्थकाममोक्षाख्यान् तदनुजान् पातयन् स्वयमपि श्रीमद्भिः सहैव शोच्यां दशां न गच्छेदिति सर्वान्तर्यामिणं सम्प्रार्थ्य विरमामो विस्तरात् ।

---

## विहारसंस्कृतकन्वोकेशन-सभ्यनिर्वाचनम् ।

——:o:——

सम्प्रति संस्कृत-शिक्षाया राजपक्षाश्रयाभावात् या हि विद्यते दुरवस्था, सा नास्ति अविदिता तन्मर्मज्ञानां संस्कृतज्ञविदुषाम् । कियतः कालात् विहार-प्रान्ते संस्कृतकन्वोकेशन-सभ्यानां निर्वाचनप्रणाल्या भवति संग्रहः । तत्र ३१ एकत्रिंशतः सभ्यानां मतदातृभिर्निर्वाचनं करणीयं विद्यते । अपरे कियन्तश्च स्व-यमेव राजकर्मचारिभिरेव उन्नीतनामानो भवन्ति । सर्वेषामेषां किं कर्तव्यमस्ती-ति बहूनां संस्कृतज्ञविदुषां ज्ञानमेव नास्ति । यतो हि कन्वोकेशन-कर्तव्य-नियम-पुस्तिका तु इंग्लिशभाषायां विद्यते । संस्कृतज्ञेषु महापण्डितेष्वपि तद्भाषाभिज्ञा विर-ला एव भवन्ति इति जानन्त्येव सूर्योदय-पाठकाः । कन्वोकेशन-नियमादिज्ञानस्य कृते तु विद्यत एव इंग्लिशभाषायां तन्नियमप्रकाशनरूपोऽन्तरायः । परन्तु पण्डि-तानां नामावली अपि रोमनलिप्याम् इंग्लिशभाषायां प्रकाश्यते, इत्यहो विडम्बनम्! संस्कृतभाषाया देवनागरीलिपीनां चानादरस्येयं पराकाष्ठा खलु वर्तमान-राज-पक्षाश्रितानां कर्मचारिणां पक्षतो दृश्यते । परन्तु निर्वाचिताः सभ्यमहोदया गत्वा तत्र किमनुतिष्ठन्तीति न ज्ञायते ? पश्यन्तु सर्वेऽपि सभ्याः संस्कृतभाषा-वेदिनः सन्ति । सर्वेऽपि विहारप्रान्तीया एव विद्यन्ते । देवनागरीलिपि-ज्ञान-मपि सर्वेषां बाल्यादेव विद्यते । राजकर्मचारिणोऽपि यदि संस्कृत-कन्वोकेशन-

सम्बन्धभाजः सन्ति, तर्हि तेषां देवनागरीलिपिज्ञानं तु स्यादेव संस्कृतज्ञानं स्यान्न वेति नास्त्यस्माकं वक्तव्यम्। एवं सत्यपि सर्वतो देवनागरीलिपि-सन्निवेश-प्राधान्ये संस्कृत-कन्वोकेशन-कृत्ये संस्कृत-पण्डितानां नामावली इंग्लिशभाषायां निःसरति! किमिहापि किञ्चिद्वक्तव्यमवशिष्टं विद्यते? किमितोऽपि भविष्यति संस्कृतभाषायाः कोऽप्यनादरातिशयः? किमद्यापि प्राचीनसंस्कृतज्ञपण्डितानां तत्र कन्वोकेशन-सभ्यत्वेन निर्वाचितानां कृत्यस्य ज्ञानेऽवशिष्यते किंचित्? ते हि सर्वेभ्यो विद्वद्भ्यो निर्वाचनं लब्ध्वा कन्वोकेशन-सभायां गत्वा किं कृत्यमनुतिष्ठन्तीति अवशिष्यते ज्ञातुम्?

अहो! आश्चर्य्यम्! व्यतीतवर्षनिर्वाचित-संस्कृत-कन्वोकेशन-सभ्य-पण्डितेषु भूयांस एवमासन् येषाम् इंग्लिशभाषाया 'ए' 'बी' 'सी' 'डी' इत्याद्यक्षर-परिचयोऽपि नास्तीति सर्व एव तत्तन्मण्डलस्था निर्वाचका विद्वांसो जानन्ति। अन्यमण्डलीय-पण्डितानां विषये तु न वयं जानीमः। परन्तु छपरामण्डलीयानां निर्वाचित-विदुषान्तु विषयेऽस्माकं साधु ज्ञानं विद्यते। यत्ते न सन्ति इंग्लिशभाषाभिज्ञा इति। किम् तैरस्य नियमस्य विरोध एकदापि कृतः? यद्देवनागरीलिप्यां संस्कृतभाषायां सर्वमपि कन्वोकेशन-कार्य्यं सम्पादनीयम्। इंग्लिशभाषायां रोमनलिप्यां वा कथं संस्कृत-कन्वोकेशन-कृत्यं भवतीति।

विहारसंस्कृत-कन्वोकेशन-निर्वाचक-सभ्यानां नामावली तु रोमनलिप्यां प्रकाशिता भवत्येव। संस्कृत-परीक्षार्थिनामुत्तीर्णतासूचक-पत्रमपि (परीक्षा-गजट) रोमनलिप्यां इंग्लिशभाषायां च प्रकाशितं भवतीति महान् खेदावसरः।

वयन्तु कथयामो यत् सर्वेऽपि निर्वाचिताः संस्कृत-कन्वोकेशन-सभ्या इंग्लिशभाषायां महापण्डिता भवेयुर्नाम नास्त्यस्माकं तत्र किञ्चिद्वक्तव्यम्। परन्तु यदि ते निर्वाचित-सदस्याः सन्ति, तर्हि तेषामिदम् परमं कर्तव्यम् विद्यते यत् ते स्वनिर्वाचकानां विदुषां संस्कृतच्छात्राणाञ्च सौकर्य्यं कुर्य्युरिति। रोमनलिप्यां संस्कृत-परीक्षा-फल-प्रकाशनं संस्कृतपण्डितानां नामावली प्रकाशनञ्चेत्येतत्तु सर्व-प्रत्यक्षं दृश्यते निर्वाचितसभ्यानां स्वकर्तव्यकर्मपराङ्मुखत्वम्। अन्यत् सर्वविद्यालयेषु पुरस्कार-छात्रवृत्ति-प्रदानादिकम् अध्यापकानां मासिकवृत्ति-वर्द्धनादि व्यवस्था, संस्कृतशिक्षाया विस्तारे राजकर्मचारिणाम् ध्यानाकर्षणम्, बलाद्वा तत्र कर्मणि तेषां प्रवृत्तिप्रेरणम्, भारतीय-धार्मिक-संस्कृति-संरक्षणाय संस्कृत-शिक्षैवोपयोगिनीति तेषां पुरः प्रदर्शनम्, संस्कृतज्ञानां निर्वृत्तिकानां पण्डितानां वृत्ति-

व्यवस्थार्थं शिक्षाविभागस्थ-राजकर्मचारिणामनुरोधनम् इत्यादि गूढतरं बहु-प्रयाससाध्यं कार्य्यन्तु दूरे तिष्ठतु । गतवर्षीय-निर्वाचित-सभ्यैः किं कृतमिति किं प्रायो न जानन्ति निर्वाचकाः ?

अस्तु, पुनरपि ऐषमो विहार-संस्कृत-कन्वोकेशन-सभ्यनिर्वाचन-समयः समागतोऽस्ति। २८ अष्टाविंशतितमैव तिथिः सितम्बरमासीया अवधिर्विद्यते निर्वाचनस्य। तन्मध्ये सर्वेऽपि निर्वाचका विद्वांस ऐकमत्यं विधाय ईदृशान् एव विदुषः संस्कृतकन्वोकेशन-सदस्यतार्थं निर्वाचयेयुर्ये हि तत्कार्यदक्षा लोकनिपुणाः संस्कृत-भारती-सेवातत्परा निःस्वार्थभावेन संस्कृतज्ञानां विदुषां विद्यार्थिनाञ्च कल्याणकरणे समर्था वाक्पटवः तार्किकबुद्धयो विवादावसरे स्वपक्षपोषणपटवो ज्ञातकन्वोकेशन-कार्य्यपद्धतयः सन्ति । किम्बहुना सर्वेषां निर्वाचकानामिदं परमावश्यकं कृत्यं विद्यते यत्तेऽयोग्यान् केवलं स्वौत्सुक्यनिवर्तनार्थमेव कन्वोकेशने गन्तुकामान् विदुषो नैव प्रेषयेयुः। प्रत्युत भर्त्सयेयुस्तान् यत् कथं भवन्तः सर्वजनीनकृत्यमपि स्वार्थभावनया विगुणयन्ति । तत्र गमनेन भवन्तः किं कार्य्यं साधयिष्यन्तीत्यादि। इदं निर्वाचकानां महान् दोषो विद्यते यत्ते जानन्तोऽपि योग्येभ्यो मतप्रदानं न कुर्वन्ति । एवं हि निर्वाचनप्रथाया एव हननं भवति—यत् केनापि निमित्तान्तरेण संकोचाश्रयेण वा स्वान्तःकरणविरुद्धमन्यानुरोधेन च कन्वोकेशन-कार्य्यसम्पादनासमर्थाय जनाय स्वमतप्रदानमिति । निर्वाचनप्रथा हि एतदर्थमेवास्ति यत् स्वतन्त्रतया सर्वेऽपि मतदातारो निर्बाधं निर्वाच्यमानान् विदुषः परीक्ष्य योग्यायैव स्वमतं दद्युरिति ।

निर्वाच्यमानानां सदस्यानां प्रतिमण्डलमेवं विद्यते संख्या। यथा—पाटलिपुत्रे३, शाहाबाद ३, गया ३, मुजफ्फरपुर ४, दरभङ्गा ५, सारन् ३, चम्पारन् २, भागलपुर २, मुङ्गेर २, पुर्णिया १, सन्थालप्रगना १, राची १, पलामु १, इत्थं हि व्यवस्थिता संख्या।

तत्र प्रतिमण्डलं निर्वाचका अपि शतसंख्यया न्यूना अधिका वा भविष्यन्ति। कतिपयेषु मण्डलेषु ततोऽपि भवेयुरल्पीयांसः। इमे निर्वाचकमहोदयाः परस्परं परामर्शं विधाय प्रतिमण्डलं निर्वाच्यमानान् पण्डितान् सम्यक् परीक्ष्यैव तेभ्यः स्वमतं दद्युश्चेन्न स्यात् किमपि वैपरीत्यम् । ये हि विद्वांसः कन्वोकेशनकार्य्य-मर्मज्ञाः, वर्तमान-प्रगतिपरिचिताः स्युस्त एव निर्वाच्या नान्ये । तत्र सभायामुपस्थाय ये साधु वक्तुं जानन्ति, ये च राजकर्म-चारिणां तर्क-पद्धतिं स्वतर्क-बलेन खण्डयितुं समर्थाः ये च समयोचितोत्तरप्रदाने निपुणा वावदूकाश्च, एवम्भूता एव

विद्वांसो निर्वाच्याः। उत्तरदायित्वपूर्णेऽस्मिन् संस्कृत-कन्वोकेशन्-सदस्य-निर्वाचन-कर्मणि स्वविवेक-प्रहाणं कृत्वा अयं मम सम्बन्धी विद्यते, अयं मम गुरुर्विद्यते, एतस्यानुरोधः कर्तव्योऽयं मां बहु निरुणद्धि इत्यादि बुद्धया मतदानं निर्वाचका नैव करिष्यन्ति।

वयम् सम्भावयामो यत् अस्मिन् वर्षे विहारसंस्कृतकन्वोकेशनस्यकृते निर्वाच्यमानाः सदस्या योग्यतरा एव भविष्यन्ति। एतान् प्रति हि नास्ति बहु-वक्तव्यावसर इति विरम्यते, सति समये पुनरपि किञ्चिन्निवेदयिष्यामः।

---

## विहार-संस्कृत-कन्वोकेशन-सदस्य-निर्वाचक-छपरामण्डलीय-विदुषां पुरः प्रार्थनाः।

अयि महानुभावाः!

संस्कृतभाषायाः सर्वाङ्गीणोन्नतिमेव हि भारतीय-संस्कृति-संरक्षण-सम्वर्द्धने समवलम्बेते। अतश्च तस्याः समुन्नतये सर्वथा प्रयतनम् श्रीमतां परमं कर्तव्य-मस्ति। संस्कृत-शिक्षायाः समुन्नत्यै सम्वर्द्धनाय च विहार-प्रान्ते विहार-संस्कृत-समितिनाम्नी प्रसिद्धा संस्था विद्यते। यस्याः सम्प्रति विहारप्रान्तीयविद्वद्भ्यः सदस्य-निर्वाचनं भवति।

तत्र छपरामण्डलतः त्रयाणां विशिष्टविदुषां सदस्यानां निर्वाचनं भवति। तेषु एकस्य सदस्यस्य कृते छपरामण्डलस्था विद्वांसः काशीस्थ-प्रसिद्ध—विद्वांसं काशीपण्डितसभायाः प्रधानमन्त्रिणं काशी—संस्कृत—साहित्य—समाज—सञ्चालकं 'सुप्रभात'-पत्र प्रवर्तकं महामहाध्यापकं श्रीमन्तं पण्डितश्रीगोपालशास्त्रित्रिपाठिनं दर्शनकेशरिणं साहित्याचार्यं-न्यायतीर्थं-व्याकरणशास्त्रिणं प्रस्तुतवन्तः। वयं सर्वेऽपि शास्त्रिमहोदयं सर्वोत्तमं विहार-संस्कृत-कन्वोकेशन-सदस्यमाकलयामः। यतो हि शास्त्रिमहोदयस्य सर्वस्मिन्नेव संस्कृत-साहित्ये विशेषतो दर्शनशास्त्रे प्रकाण्डं पाण्डित्यं विद्यते। हिन्दी-भाषायां इंग्लिशभाषायामपि तदीयः पूर्णः प्रवेशोऽस्ति। संस्कृत-व्याख्याने शास्त्रार्थे च तदीया महती प्रसिद्धिरस्ति। अद्यावधि संस्कृत-सेवायामेव तदीयः समयो व्यत्येति। तस्य महोदस्य सदस्यतया छपरामण्डलस्य महद्गौरवं भविष्यति। तदीय प्रयत्नेन च छपरामण्डलस्य विदुषां संस्कृतच्छात्राणां संस्कृत-विद्यालयानाञ्च विशिष्टा समुन्नतिर्भाविनीति निश्चितमस्ति।

अतश्च वयं सर्वानेव छपरामण्डलस्थान् मतदातॄन् ( वोटर ) महाशयान् प्रार्थयामहे यत्तस्मै विशिष्टविदुषे स्वीयमेकं मतम् (वोट) अवश्यमेव दत्वा स्वकीय-सद्विवेक-परिचयं ददतः संस्कृतोन्नतिमार्गं प्रशस्तं करिष्यन्तीति ।

## निवेदकाः ।

श्रीहरिहरकृपालुद्विवेदी ( महामहोपाध्यायः )
श्रीबालकृष्णमिश्रः (प्रधानवेदान्ताध्यापक हिन्दूविश्वविद्यालयकाशी)
श्रीरामयत्नओझाः (प्रधान ज्योतिषाध्यापक, हि० वि० वि० काशी )
श्रीचन्द्रशेखरधरमिश्रः ( चिकित्सकचूडामणि चम्पारन् ) ।
श्रीगिरीशतिवारी ( बरेजा ) श्रीभरतमिश्रः ( छपरा )
श्रीजयदेवनारायणसिंहः ( एम्० ए० एल०एल० बी० एम० एल० सी० साहित्याचार्यः चेयरमैन डि० वोर्ड छपरा ) ।
श्रीप्रभुनाथसिंहः ( वाइस चेयरमैन डि० वो० छपरा ) ।
कुमार श्रीपशुपतिसिंहः ( चेयरमैन लोकलबोर्ड छपरा सदर )
श्रीरामजीसिंहः ( वाइस चेयरमैन लोकलवोर्ड सिवान ) ।
श्रीत्रिभुवननारायणसिंहः ( चेयरमैन लो० बो० गोपालगंज )
श्रीमहादेवरायः ( वाइस चेयरमैन लो० बो० गोपालगंज ) ।

---

## श्रीतुलसीजयन्ती ।

—*:*—

जातः श्रीतुलसीकविर्बुधसभाशास्त्रार्थसंयोजकः
नानामानवपूजितो बुधगुरुः साक्षाद्धि [1]दन्तीकविः ।
दीना ये मनुजाः कलौ तु सुलभास्तेषां प्रियं मानसम्
धन्यं काव्यरसामृतं सुललितं निष्कण्टकं पीयताम् ॥

प्रेषकस्य—
देवसहायत्रिवेदस्य
[ बी. ए. रिसर्चस्कालर गोल्डमेडलिस्ट ]

---

[1] रोमदेशजातो महाधुरन्धरकविः ( Dante )

# वेदपुराणयो रेवाक्यता ।

निबन्धा-पं० दीनानाथ शर्मा शास्त्री सारस्वतः संस्कृत कालेजाध्यापकः
मुलतानस्थः ।

( क्रमागता )

अथवा—कथञ्चिद् देवानां पाप-युक्त-चरित्र-वत्त्वमपि मन्येत; तर्हि तेषां-चरित्रस्य सत्यतया प्रकटयितॄणां पुराणानामेतेन कोऽपराधो जातः 'उशन्ति घा ते अमृतास एतदेकस्य चित् त्यजसं' ऋ० १०।१०।३ इति 'स्वर्गे लोके बहु स्त्रैणमेषाम्' अथ० ४।३४।२ इति च वेदेनाऽपि देवानां कामित्वसङ्केत + प्रतिपादितः, पुराणै रेतत्सङ्केतस्यैव भाष्यं कृतम्; तर्हि वेदाऽनुयायिनां पुराणानामेव कथं मन्तुर्मन्तव्यो भवेत् । येन देवादिना यद्यत् कृतम्, पुराणैस्तच्चरित्रं प्रकटितम् तानि ( पुराणानि ) अस्माँस्तथाविधकर्माचरणे बाध्याँस्तु न कुर्व्वन्ति 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' गी० ३। २१ इति वचनस्य 'यान्यनवद्यानि कर्म्माणि तानि त्वयोपास्यानि नो इतराणि' तैत्ति० ११ अनु० । 'नैतत्समाचरेज्जातु मनसाऽपि ह्यनीश्वरः' भाग० १०।३३।३१ 'न देवचरितं चरेत्' विष्णु पु० 'अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् । नाऽनुष्ठेयं मनुष्यैस्तदुक्तं कर्म्म समाचरेत्' हा० स्मृ० इत्यादीन्यपवादवचनान्यपि दृश्यन्ते । तादृशकथानामुपक्रमोपसंहारे दृष्टे तादृक्कर्म्मकरणाऽऽज्ञा कदाऽपि न दृश्येत । प्रकरणात् पार्थक्ये कृते त्वर्थस्याऽनर्थं + प्रतीयते । प्रत्युत तानि पुराणानि तादृशकथा + प्रदर्श्याऽपि बंहिष्ठशिक्षां ददति, यत्-स्त्रीयोनिर्महाभयावहा—'घृतकुम्भसमा नारी तप्ताऽङ्गारसमः पुमान् । तस्माद् घृतञ्च वह्निञ्च नैकत्र स्थापयेद् बुधः ।' अविद्वांसमलं लोके विद्वांसमपि वा पुनः । प्रमदा ह्युत्पथं नेतुं कामक्रोधवशाऽनुगम्, मनुः २।२१४ 'मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' मनुः २।२१५ 'स्वां प्रसूतिं चरित्रञ्च कुलमात्मानमेव च । स्वञ्च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति' मनुः ९।७ * इममेवाऽर्थं—यस्य पुराणानि उदाहरणम्—वेदोऽपि पुष्णाति—'न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदया-

+'तेजीयसां न दोषाय' भाग० १०।३३।३० इति पौराणिकवचनस्योपर्युक्तो वेदमन्त्र एव मूलम् ।

*'पौंश्चल्याच्चलचित्ताच्च नैस्नेह्याच्च स्वभावतः । रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्व्वते' मनुः ९।१५। 'स्वभाव एष नारीणां नराणामिह दूषणम्, मनुः २।२१३ 'नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः । सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते, मनुः ९।१४

न्येता, अ० १०।६५।१५ अत्र सायणः—'अस्य ( स्त्रैणस्य ) स्नेहस्य असारतामाह, स्त्रैणानि–स्त्रीकृतानि सख्यानि न वै सन्ति न सन्ति खलु । अभावे कारणमाह–एता–एतानि (स्त्रैण-)सख्यानि साला वृकाणां हृदयानि, तेषां हृदयानि यथा विश्वासापन्नानांवत्सादीनां घातकानि तद्वत्'। अत्र शतपथ ब्राह्मणम्-' न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणाᳪ हृदयान्येता–इति मैतदादृथा न वै स्त्रैणᳪ सख्यमस्ति' शत० ११।५।१।६ अत्र वक्त्री स्त्री उर्व्वशी स्वयमेव । तस्यैवाऽर्थस्य विस्तरेण विशकलकानां पुराणानामत्र कोऽपराधो जातः ! तैरुपोद्बल्यते-यदेतत्सम्बन्धे कलिमलकलुषितैर्नरैः शिक्षा ग्राह्या,, यद्-भवन्तᳪ कदाचित् स्वाऽसामर्थ्यात् तदाकृष्टा विलयं न प्रायुः । वाल्मीकिरामायणे रावणस्य दुष्कृत्यं, महाभारते च दुर्य्योधनस्य दुष्कृतं सामञ्जस्येन प्रकटितम्' तत्परिणतिश्चाऽपि दत्ता, किमेतेन वाल्मीकिरामायणं महाभारतं वाऽमन्तव्यम्भविष्यति ? दलपतिरायसङ्कलितदयानन्दचरित्रे दयानन्दस्य मातुलानीसेवनेन मूर्च्छादिकं निदर्शितम्, आर्य्यसमाजमतविरुद्धञ्च तत्र दयानन्दस्य बाल्यकाले मूर्त्तिपूजा ततश्शिवभक्तिश्च प्रदर्शिता, एवमन्यदपि, किं तच्चरित्रपुस्तकमेवाऽमन्तव्यं भविष्यति ? हन्त ! वस्तुतस्तु पौराणिक-कथानां बहवो भावाः, बहव एव तत्रोपदेशाः, ( परकीयस्खलनैर्यथा शिक्षा प्राप्यते, न तथा तत्सच्चरितेन ) यान् कदाचित् पुनᳪ प्रकटयितास्मः । अद्यैतदेव कथयामो यद्-यदि एतदाद्युत्तेजककथाभिर्भवन्तस्ताम्यन्ति, पुराणानि च गर्हापात्राणि मन्वते; तर्हि वेदे ( मन्त्रे ब्राह्मणे च * ) अप्यश्लीलतादर्शनाद् ( ब्राह्मणादिष्वपि तथा कथादर्शनाद् ) यदादर्शं पुराऽदीदृशाम-वेदा अपि त्यक्तव्याः । अथ च परमात्मा सर्व्वस्त्रीपुरुषाणां गुह्याऽङ्गेष्वपि निधुवनसमयेऽपि च प्रविष्टः, सोऽपि सर्व्वत्र द्विविधं दुष्कृत्यं कुर्व्वाणोऽत एव च पापी मन्तव्यः, तेन च सोऽप्यमान्यᳪ कर्त्तव्यः । यदि निराकारत्वान्निर्लेपोऽसाविति चेत् साकारत्वेऽपि केषाञ्चिन्निर्लेपता दृष्टा, यथा–सूर्य्यादीनाम् । नहि सूर्य्यादयᳪ खङ्गतैल मुकुर जलाद्यालम्बनेषु × तत्तद्धर्म्मैर्लिप्यन्ते । नहि जले विद्यमानमपि कमलदलं जलेनाऽऽविलीक्रियते; तेन पुराणे साकारोऽपि परमात्मा तथैव निर्लेपः, गोप्यादिसङ्गतोऽप्यसङ्गो ज्ञेयः । घटे भग्नेऽपि घटाकाशं न भज्यते, घटेऽपवित्रेऽपि घटाकाशं नाऽपूतम्भवति; वात्यायाञ्चलन्त्यामपि आकाशं

* ब्राह्मणभागोऽपि मन्त्रभागवद् वेद इति यै र्दिदृक्षणीयं स्यात्; तैर्जयपुरीय 'संस्कृतरत्नाकर' स्य तृतीयवर्षीयाऽऽरम्भिकसंख्यासु प्रकाशयिष्यमाणो मल्लेखो द्रष्टव्यः ।

× एवं मलमन्त्रेऽपि ज्ञेयम्; अत्राऽग्निगङ्गादयोऽप्युदाहर्त्तुं शक्यन्ते ।

नाऽऽविलीक्रियते, वृष्ट्यां भवन्त्यामपि गगनमार्द्रतां न धत्ते, उष्णरश्मि-रश्मिभिश्च तदूष्माणं न धत्ते ॥ अयं भवत्सङ्कुचितबुद्धेरेव दोषो मानुषमर्य्यादा परमात्मनि देवेषु च न प्ररोढुं शक्ताः अतश्शतपथे –'अपहतपाप्मानो देवाः' २।१।३।४ अथर्व्व वेदे च—'अनस्थाः पूताः पवनेन शुद्धाः......स्वर्गे लोके बहु स्त्रैणमेषाम्' अ० ४।३४।२ इति, 'अपापविद्धम्' यजुः ४०।८ इति कथनञ्च सङ्गच्छते। देवानां परमात्मनश्च इदञ्चरित्रैरपापविद्धत्वेऽपि यत्र तच्छरीरपरिवर्त्तनं शापादिकञ्च पुराणेषु दर्शितम्, तत्रैतदेव कारणं यन्मनुष्यास्तदनुकरणं न कुर्य्युः, मानुषभाविमर्य्यादाभङ्गश्च न स्यात्।

पुराणेषु ब्रह्मपुत्र्या यथा कथाः तथैवर्ग्वेदेऽपि १० मण्डलस्य ६१ सूक्ते ५-६-७ मन्त्रेषु, शतपथस्य प्रथमकाण्डे १।७।४, ऐतरेयस्य ३ पञ्चिकायाः ३३ कण्डिकायाम्। दक्षप्रजापतेर्दितिपुत्राणाञ्च यथा कथा पुराणेषु, तथैव शतपथद्वितीय-काण्डे २।४।४।२ इत्यादि। यथा रुद्रोत्पत्तिवर्णनं मार्कण्डेय-विष्णुपुराणयोः; तथैव शतपथे ६।१।३।७-१६ शाङ्खायनब्राह्मणे ६।१।१-६। देवीभागवते यथाऽहल्यागोतमयोः कथा तथा शतपथे ३।३।४।१८ प्राप्यते। च्यवनसुकन्ययोर्यादृशञ्चरित्रं महाभारते; तथैव शतपथतुरीयकाण्डे ४।१।५। परीक्षिज्जनमेजययोः शतपथे १३।५।४।१, दुष्यन्तादीनाञ्च शतपथे १३।५।४।११। वृत्रस्येतिहासः पुराणादिवच्छतपथे १।६।३, तैत्तिरीयसंहितायाञ्च २।५ प्रसिद्धः। उर्व्वशीपुरूरवआयुषां विशिष्टकथा शतपथे ३।४।१।२२, ११।५।१।१ दृश्यते। नमुचेरसुरस्य इन्द्रकर्तृकवधस्य च कथा शतपथे १२।७।३।१ प्रसिद्धा! पुराणानां याः काश्चन कथा न प्राप्यन्तेऽद्यत्वे वेदादिके, तत्कारणं ११३१ वेदशाखासु बहूनां शाखानां बहूनाञ्च ब्राह्मणानां लोपो नाम। तेषु सूत्रभासां कथानां सम्यगनुमीयते सम्भाव्यते च, कथान्तरसूत्रदर्शनात्।

अथ च बहवो महात्मानः पुराणेषु भगयोनिलिङ्गादिशब्दान् दृष्ट्वा पुराणान्यश्लीलानि मन्यन्ते; ते भगलिङ्गादिकस्य मूत्रेन्द्रियाद्यर्थं एव भ्राम्यन्ति; वास्तविकभावं न पश्यन्ति। ते 'प्रथमलिङ्गग्रहणञ्च' इत्यादिवार्तिके, 'लिंगम शिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इत्यादिवार्त्तिकभाष्यादिषु न जाने कमर्थं गृह्णीयुः। 'सप्तशत्याः' प्राधानिकरहस्ये चण्डिकादेव्याः कृते लिखितम्—'नागं लिंगञ्च योनिञ्च बिभ्रती नृप! मूर्द्धनि' ।५। किं लिंगं योनिर्वा स्त्रीमूर्द्धनि भवति-अवालोकिघा शङ्का? एवं 'लिंगहस्तः' 'भगः' इत्यादि पुराणलिखितेऽप्यवसेयम्। वेदे निम्नमन्त्राः प्राप्यन्ते-'सोमजुष्टं ब्रह्मजुष्टं मर्य्यम्णा सम्भृतं भगम्। धातुर्देवस्य सत्येन कृणोमि पतिवेदनम्' अ० २।३६।२ अत्र 'स्त्रीभगस्य' वर्णनम्,, अत्र

भगशब्देन किं गृह्णन्ति शङ्काकाः। अस्मिन् मन्त्रे स्त्रीपत्योर्व्वर्णनाद् भगशब्दः स्त्रीमूत्रेन्द्रिया ऽर्थे तात्पर्य्यं ग्राहयति; तस्यैव द्वितीयान्त भग' स्य 'सोमजुष्टम्' 'ब्रह्मजुष्टम्' 'अर्य्यम्णा सम्भृतम्' इति विशेषणत्रयम्, अर्थात् स भगः सोमेन ब्रह्मणा अर्य्यम्णा च सेवितः, अधुना तं पतिवेदनम्-पत्या प्राप्तव्यं करोमीत्यर्थः। यदि वेदो भगस्य ब्रह्मादिजुष्टतामाख्याति; तर्हि पुराणानां भगस्य रुद्रसेवितत्वोल्लेखे कोऽपराधः? मन्त्रान्तरम्—'भगस्य नावमारोह......तयोपप्रतारय यो वरः प्रतिकाम्यः' अ० २।३६।५ अत्र स्त्रिया भगरूपनाव आरोहणम्; तद्-द्वारा वरस्य (पत्युः) उपप्रतारणञ्च वेदेन निर्दिष्टम्, अत्राऽपि प्रकरणवशाद् भगस्य स्पष्टाऽर्थता प्रतीयते। एवम्-'एवा भगस्य जुष्टेयमस्तु नारी सम्प्रियापत्या विराधयन्ती।' अ० २।३६।४ अत्र 'भगजुष्टा नारी पत्या ' इत्यादिः स्पष्टतैव। 'अयमौक्षो अथो भगः। एते पतिभ्यस्त्वामदढुः' अ० २।३६।७ अत्र भगस्याऽपि पत्ये दानं निर्दिष्टम्। अत्र स्त्रीपत्योः स्पष्टे प्रकरणेऽपि भगशब्दस्य कमर्थमातन्वते शङ्काकाः। यदि मूत्रेन्द्रियस्येति कथ्येत; तर्हि वेदमनुसरतां पुराणानामेतेन कोऽपराधो जातः, वास्तविका अपराधिनो वेदा एव निगृह्यन्ताम्। यद्यर्थान्तरं क्रियेत शङ्काकैर्भगस्य एतादृशस्पष्टप्रकरणेऽपि; तर्हि पौराणिकलिंगभगादिशब्दानामपि तैरर्थान्तरमवसेयम्। यदि कथ्येत वेदे लिंगशब्दो न दृश्यते; तर्हि तस्यैतदेवोत्तरम्; यत्-स (वेदः) लिङ्गस्य शिश्नाऽर्थमेव न मनुतेः तदैव तु न्यायदर्शनकारेण 'आत्मनो लिङ्गम्' १।१० इति चिह्नाऽर्थे लिङ्गशब्द प्रयुक्तः; एवं दर्शनकारान्तरैरपिः तेन 'लिङ्गपुराणा' दिकस्थेऽपि लिङ्ग' शब्दे नाऽश्लीलता। यदि कथ्येत, वेदे लिङ्गवाचक कोऽपि शब्द एव नास्ति; एतत्तु भ्रान्तिमात्रमेव; एतः, यजुः २३।२२, तैत्ति० ७।४।१९।३, यजुः २०।९, अ० ६।७२।२,३। 'शेपः' ऋ० ६।११।२४, अ८० १४।२।३८, ऋ० १।८५।३७, अ० ४।४।१। 'शिश्नम्' ऋ० ७।२१।५, मेहनम् ऋ० १०।१६३।५ अ० १।३।७। 'सपः' ऋ० १।१०४।५। मेढ्रम्' यजुः ६।१४। 'इन्द्रियम्' यजुः १९।७६। 'वैतसम्' ऋ० १०।९५।४,५। उपस्थः' यजुः ३५।५ इत्यादयस्तत्पर्य्यायवाचकाश्शब्दा वैशद्येन दृश्यन्त एव वेदे।

'स मुखाच्च योनेर्हस्ताभ्याञ्चाऽग्निमसृजत; तस्मादेतदुभयमलोमकमन्तरतो ऽलोमका हि योनिरन्तरतः शतपथ० १४।४।२।११ इतिवेदप्रमाणेन तु परमात्मनो योनिरपि साधिता, अलोमका—इति तद्वर्णनेन भगस्य नाम स्पष्टमेव। एवम्—'अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तः समुद्रे' ऋ० १०।१२५।७ एतन्मन्त्रप्रवित्री तद्देवता वा वागाम्भृणी स्त्री वर्त्तते, यतोऽस्मिन् सूक्ते तद्विशेषणानि 'अहं राष्ट्री संगमनी। ३। 'भूर्य्यावेशयन्तीम्। ३। 'आरभमाणा' ८।

'एतावती महिना । ८। इत्यादीनि स्त्रीलिंगान्तानि; तह्यंत्र 'योनि' शब्दस्य कमर्थं विधास्यन्ति शङ्काः । यदि स्त्रीजननेन्द्रियमिति, यतः स्त्री तद्वकत्री; तर्हि पुराणानामपि वेदाऽनुकूलत्वं सिद्धम्, अर्थान्तरे पुराणेष्वपि स एवाऽर्थ ̐ कर्तुं शक्यः । 'मूर्धन् मम योनिः' ऋ० १०।१२५।७ इतिमन्त्रस्य 'लिंगञ्च योनिञ्च, बिभ्रती नृप ! मूर्द्धनि ।४। इतिमार्कण्डेयपुराणान्तर्गतसप्तशतीप्राधानिकरहस्यपद्यस्य च परस्परं साम्यात् पुराणानामपि वेदाऽनुकूलता स्पष्टैव । 'प्रजापतिर्मा प्रजननवान्' ऋ० १६।१७।१६ अत्र मन्त्रे प्रजापतिपरमात्मनोऽपि प्रजननवत्वं—लिंगधारित्वमुक्तम्' प्रजननं पुंव्यञ्जनम् । एवं लिंगविषयेऽपि मन्त्रा उपस्थापयितुं शक्याः ।

हन्त पुरुषापसदाः ! किञ्चिद् विचारचक्षुस्तु स्थापयत । सत्यार्थप्रकाशे 'जब वीर्य का गर्भाशय में गिरने का समय हो, उस समय स्त्री और पुरुष दोनों स्थिर और नासिका के सामने नासिका* नेत्र के सामने नेत्र अर्थात् सूधा शरीर और अत्यन्त प्रसन्न चित्त रहें, डिगें नहीं, पुरुष अपने शरीर को ढीला छोड़े, और स्त्री वीर्य प्राप्ति के समय अपान वायु को ऊपर खींचे—योनि को ऊपर सङ्कोचन कर वीर्य को ऊपर आकर्षण करके गर्भाशय में स्थित करे, इत्यादि स्वधर्मपुस्तकलिखिता नियोगसदृशवेश्याकर्मादिसदृश्यश्च वार्त्ता भवद्भिरश्लीलतायामपि न दृश्येरन्; परं पुराणवचनानां ज्ञानार्थं 'समाधि-लौकिक-परकीयादि' विचित्रभाषाणाम् आध्यात्मिकाऽऽधिदैविकाऽऽधिभौतिकभावानां वेदादिसकलशास्त्राणाञ्च पठनमननाऽऽवश्यकता; यदर्थञ्च 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' गी० ४।३४ 'तद्विज्ञानार्थं गुरुमेवाऽभिगच्छेत्' इत्यनुसारं तन्मर्मज्ञगुरुचरणाऽरविन्दमधुव्रतताऽऽवश्यकता; एभि ̐ पुराण-पुराणपद्यिपन्थिभिर्व्वाग्भिः 'मुखमस्तीति वक्तव्यं दशहस्ता हरीतकी, ति न्यायेन तेषां निन्दनार्थं साधारणपुस्तिकापठनमात्रेणैव चेष्टा क्रियते इति महद्दुःसाहसिक्यमेतत् । अस्तु—तत्कथानां विवेचनं वयमित ̐ पृथग्लेखे करिष्यामः । अधुना पौराणिककतिपयसिद्धान्तानां वेदवाक्यैकवाक्यता प्रदर्श्यते । अस्माभिस्साक्षिभूतास्सुगमा एव वेदमन्त्रास्सङ्कलिताः; यदर्थं केषामपि विसंवाद एव न तिष्ठेत् । तेन अत्र यत्र तत्र तदर्थोल्लेखाऽऽवश्यकतैव न, क्वचिद्दनवबोध्यस्थले विवरणं क्रियेताऽपि । कठिनेषु मन्त्रेषु स्वसिद्धान्त-

* कश्चिद् तोऽत्राऽवकथद् यत्-स्त्रीपुरुषयोरन्यतरो यदि वामनः स्यात्: तर्हि नासिका के सामने नासिका, नेत्र के सामने नेत्र, इति स्वामिचरणानां वैदिकयात्रा कथं पूरयितुं शक्येत ।

पुष्टिं दृष्ट्वाऽपि ते ते मन्त्रा काठिनोभियोपेक्षिताः। अस्माभिर्विस्तीर्ण्णिभयादेव वक्ष्यमाणविषयेषु पुराणश्लोकसंग्रहो न कृतः। इमे पौरणिकविषया जगत्-प्रसिद्धा एव, इम एव चार्व्वाचीनैराक्षेप्यास्सन्ति; अतएवाऽस्माभिरर्व्वाचीयशङ्का विषयरूपेण शीर्षकरूपतां प्रापिताः। आरण्यकोपनिषत्सूत्रस्मृत्यादिप्रमाणानि चाऽपि प्रायो विस्तरभियैवोपेक्षितानि, क्वचिदावश्यकस्थले प्रदर्शितान्यपि। तेषु त्वमी समस्ता एव सिद्धान्ता इति विश्वविश्रुतम्। अथ च शतपथादि-ब्राह्मण प्रमाणसंग्रहो ब्राह्मणानां वेदत्वादेव कृतः। 'ब्राह्मणभागस्यापि मन्त्रभागवद् वेदत्वम्' इति मल्लेखो जयपुरीय संस्कृतरत्नाकरे' तार्त्तीयीकवर्षारम्भे द्रष्टव्यः। क्वचिन्मनुवचनान्यपि निर्दिष्टानि; यतः—'स सुन्वते मघवा जीरदानवेऽविन्द-ज्ज्योतिर्मनवे हविष्मते' ऋ० १०।४३।८ इति परमात्मना मनवे ज्योतिर्दत्तम्। 'वेदाऽर्थोपनिबद्धत्वात् प्राधान्यं हि मनोः स्मृतम्' इति बृहस्पतिः। 'यत् किञ्च वै मनुरवदत् तद् भेषजम्' इत्युक्तेश्च। अथ च वादिनामपि स्मृत्यन्तरेभ्योऽस्या-मेवाऽधिकश्रद्धा प्रत्युताऽस्यां वेदेभ्योऽप्यधिकाऽभिनिवेशस्तेषां दृष्टः। सत्यार्थ-प्रकाशस्य प्रथमसमुल्लासे वेदमन्त्राः १२, मनुश्लोकास्तु ३। द्वितीये—मन्त्राणां सर्व्वथाऽभावः, मनुश्लोकौ द्वौ। तृतीये—४ मन्त्राः पूर्णा द्वौ चाऽर्धौ, मनोस्तु ३० श्लोकाः। चतुर्थे—११ मन्त्राः पूर्णाः, एकश्चाऽर्धः, मनोस्तु ७६ पूर्णाः, एकश्चाऽर्धः। पञ्चमे—१ मन्त्रः, मनुपद्यानि तु २७॥ षष्ठे—२ मन्त्रौ पूर्णौ, चत्वा-रोऽपूर्णाः, मानवश्लोकास्तु ११८॥। सप्तमे—१७ मंत्राः पूर्णा द्वावर्धौ, मनोः १ श्लोकः। अष्टमे—८ पूर्णमन्त्राः, ८ खण्डाश्च, मनोः ३ पूर्णाः, द्वावपूर्णौ। नवमे-३ मन्त्राः, मानवश्लोकाः २६। दशमे-२ मन्त्रौ, मनोः २७ पद्यानि पूर्णानि, त्रीणि चाऽर्द्धानि। एकादशे समुल्लासे-२ पूर्णौ मन्त्रौ,, ६ अपूर्णाः, मनोस्तु ६ श्लोकाः पूर्णाः, १० अपूर्णाः। शिष्टेषु समुल्लासेषु न वेदमन्त्रा न च मनुश्लोकाः। इत्येवं यन्मतप्रवर्त्तकेन मानवपद्यैः स्वपुस्तकं तुन्दिलितं स्यात्; तदनुयायिनां समक्षे मनुपद्यनिदर्शनं कथं न क्रियेत, अथ च स्वामी मनुस्मृतिं सृष्ट्यादौ निर्म्मितामाख्यत् सप्तमसमुल्लासे। अस्तु-

निम्नविषयाणां साधनप्रसङ्गेन योऽस्मान् 'लकीर के फकीर' इत्यभिद-धीत, तेनैतद् ध्येयम्—रेखोपासका हानिं न प्राप्नुवन्ति, बाष्पयानं नियतरेखा-याञ्चलति; यदि तद् इतस्ततो भवेद् रेखातस्तर्हि तस्य न कुशलम्, सूर्य्यचन्द्रा-दिमण्डलं स्वरेखान्तस्तिष्ठति; सीता रेखातो बहिर्भवनेनैव रावणेन चोरिता, समुद्रो रेखातो बहिर्भूतः प्रलयं घटयेत्; मरुत्तरा यानानि च नियतमार्गे रेखातो भ्रष्टानि स्वयात्रिणामस्थीन्यपि भञ्जयेयुः। किमेतदभिधातार एव

स्वधर्म्मग्रन्थविरुद्धं काय्यं कर्त्तुमीशते ? यद्येवम्, तर्हि तु वैदिकम्मन्यास्ते धन्याः; यदि तेऽपि वेदादिविरुद्धं न किमपि कर्त्तुमीशते; तर्हि तेऽपि 'लकीर के फकीर' पदवाच्याः । स्मर्त्तव्यम्; सनातनधर्म्मस्याऽद्य यावदपि नाशो यन्नाऽजनिष्ट; तत्रैतदेव कारणम्; यत् स रेखाऽन्तरस्थात्, अन्यथा प्रलयगर्भंगतानां जात्यन्तराणां धर्म्मान्तराणामिव चाऽस्याऽपि नामशेषोऽभविष्यत् । अद्यत्वे यद् हिन्दूनां सङ्ख्या नैयून्यमश्नुवाना दृश्यते; तत्कारणं तेषां नियतरेखाबहिर्भाव एव; वेद उपदिशत्यस्मान्—'अहं गृभ्णामि मनसा मनांसि मम चित्तमनु चित्तेभिरेत । मम वशे हृदयानि वः कृणोमि, मम यातमनुवर्त्मान एत' अ० ३।८।६।१२ पुराणानि चाऽपि तदेवोपदिशन्ति, यद् वेद इति वयं साधयितास्म पदाऽनुपदम् । अस्तु । अधुना सङ्कलयिष्यमाणानां विषयाणां सूची प्रदर्श्यते—

## ( १ ) अश्लीलतानिरासे—

१ भूमिका—इयं पठितैव स्याच्छ्रीमद्भिः स्वसमक्षस्थिता ।

## ( २ ) अवैदिकतानिरासे—

२ वेदेष्वप्यश्लीलता पुराणादिवत् । ३ देवा मनुष्येभ्यो भिन्नाः । ४ देवपूजा । ५ इन्द्रस्य देवराजत्वं स्वर्गशासकादिकत्वञ्च । ६ देवानां भेदा दिशश्च । ७ देवानामुत्पत्तिः । ८ देवानां पौराणिकनामानि । ९ देवानां पत्न्यः । १० देवानामलौकिकशक्तिः । ११ देवाऽसुरयुद्धम् । १२ आसुरी माया । १३ मायिनां मायाकरणं परमात्मक्रोधश्च । १४ पिशाचादीनां वर्णनम् । १५ परमात्मनो रूपशरीर वर्णनम् । १६ अद्वैतवादः । १७ परमात्माऽवतारः । १८ परमात्मनस्तस्करता, जारता, असत्यवादित्वं, नग्नत्वदर्शनञ्च । १९ मूर्तिपूजा । २० त्रिकालसन्ध्या । २१ पापफल दूरीकरणप्रार्थना । २२ आत्मन कर्म्मण्यपि परतन्त्रता । २३ ब्राह्मणस्य श्रेष्ठता, जन्मना वर्णव्यवस्था वा । २४ उच्चनीचता । २५ वरशापप्रदानम् । २६ चत्वारो वर्णाः । २७ शूद्रस्याऽनार्य्यत्वम् । २८ मृतक श्राद्धम् । २९–३० स्वर्गनरकादिलोकाः, अप्सरसश्च । ३१ वैवस्वतयम-तद्दूतवर्णनम् । ३२ वैकुण्ठादिकस्याऽऽकाशे सत्त्वम् । ३३ गोदानमाहात्म्यम् । ३४ गोषु देवतानिवासः । ३५ शकुनादिफलम् । ३६ दुःस्वप्नादिफलम् । ३७ नक्षत्राणां प्रार्थना । ३८ ग्रहपूजा । ३९ सूर्य्यग्रहणम् । ४० पृथिव्याः स्थिरत्वं, सूर्य्यस्य भ्रमणम् । ४१ तीर्थवर्णनम् । ४२ स्त्रीणामावरणम् । ४३ पतिरेकः स्त्रियो बह्व्यः । ४४ पर्व्वतानां पक्षास्तद्विदारणञ्च । ४५ सहस्रवर्षाणामायुः । ४६ मृत्योरभावः । ४७ अकालमृत्युसम्भवः । ४८ मृतस्य जीवनम् । ४९ शिरश्छेदेऽपि जीवनम् ।

५० विष्णुकर्णमलोद्भूतत्वादिकम् । ५१ शत्रूणां नाशप्रार्थना । ५२ कुशोपयोगः । ५३ मांसवर्णनम् । ५४ मद्यवर्णनम् । ५५ द्यूतदेवनम् । ५६ वेदा द्विजमात्राऽर्थम् । ५७ हिन्दुशब्दस्य वैदिकत्वम् । ५८ सङ्कलितपौराणिकवार्त्ताः । ५९ प्रत्येक पुराणे भिन्नभिन्न देवस्याऽतिशयितस्तुतिः । ६० पुराणेष्वतिशयोक्तिः । ६१ पुराणेषु परस्परं विरोधः, पुनरुक्तिश्च । ६२ केचित् पौराणिकेतिहासा वेदे । ६३ पुराणस्य नाम वेदादिके । ६४ पुराणब्राह्मणयोर्भेदः । इमे विषया वैदिकमन्त्रैः साधिताः ।

## ( ३ ) असम्भवतानिरासे ।

६५ प्रकृतिनियमानां सामान्यशास्त्रता । ६६ वृद्धाय यौवनदानम् । ६७ मृतसञ्जीवनम् । ६८ विना स्थूलमैथुनं सन्ततिः । ६९ विचित्रोत्पत्तयः । ७० रक्तबीजस्य रक्तादसुरोत्पत्तिः । ७१ बहुसन्ततिः । ७२ स्त्रिया पुरुषभवनं, पुरुषस्य स्त्रीभवनम् । ७३ एकाऽधिकमुखवत्त्वम् । ७४ पुरुषाणां दध्यादिकम् । ७५ दीर्घायुष्कता । ७६ हनुमत्कर्तृकस्सूर्यग्रासादिः । ७७ पशुपक्षिणाम्भाषणम् । ७८ सूर्याच्छादनम् । ७९-८० विना दर्शनमपि युद्धादिवृत्तज्ञानं भविष्यज्ज्ञानञ्च । ८१ शिवढक्कातश्चतुर्दशसूत्रप्राप्तिः । ८२ आग्नेयवायव्यसम्मोहनाद्यस्त्राणि । ८३ तीर्थस्थानानां तज्जलानां च पवित्रता । ८४ नारदादीनामाकाशे गमनं ततोऽवतरणञ्च । ८५ आकाशे आकाशगंगादिस्थितिः । ८६ गोवर्द्धनपर्व्वताद्युत्थापनम् । ८७ समुद्रमन्थनम् । ८८ अगस्त्यस्य समुद्रपानम् । ८९ देवादीनामन्यदीयाऽऽकारनिर्म्माणे शक्तिः । ९०-९१ कुम्भकर्णनिद्रा, अनिद्रा च । ९२ प्रह्लादादिचरितस्य सम्भवः । ९३ समुद्रे प्रस्तरसन्तरणम् । ९४ ग्रहणाद्यशौचविज्ञानम् । ९५ अस्पृश्यताविज्ञानम् । ९६ व्रतादिमहिमा । ९७ पुराणानामेककर्तृकता । ९८ पौराणिकवस्तुगवेषणा । ९९-१०० पुराणलाभाः, उपसंहारश्च ।

एष्वसम्भवाभासेषु विषयेषु प्रायः प्रत्यक्षघटना बहुत्र च वेदमन्त्रा अपि दर्शिताः । एवमिमे शतं विषया अस्मिन् महानिबन्धे सन्दृब्धाः । इमे क्रमशः 'सूर्योदये' प्रकाशमेष्यन्ति । सनातनधर्म्मणां परमकर्त्तव्यमेतत्; यत्—ते महानिबन्धमिमं स्वयं पठन्तु, अन्यांश्च स्वप्रशस्यवयस्यानपि एतत्पठनाय प्रेरयन्तु । समर्थानां विदुषां कर्तव्यमेतत्; त एतद्विषय उपयोगिपरामर्शान् दत्वा मां कृतार्थयन्तु; येन तत्परामर्शानां* मुद्रायिष्यमाणे सन्दर्भे स्तुपयोगः क्रियेत—इति निवेद्याऽत्र विरम्यते । अग्रिमसंख्यातो 'वेदपुराणयोरेकवाक्यता' इतिनिबन्धस्य द्वितीयभागः—'अवैदिकता-निरासः' प्रकाशयितुमुपक्रम्येत ।

॥ इति अश्लीलतानिरासः ॥

* परामर्शानाम्-निषिद्धव्यवधानाग्रहणः ।

# श्रीबालकृष्णार्या-पञ्चविंशतिः।

ले०—पण्डित विनायकराव भट्टः।

जयतु परमरमणीयः श्रीवसुदेवात्मजो नित्यः।
प्रणतजनेषु दयालु र्लोकविलोचनकलाधरः कृष्णः ॥ १ ॥
नन्द-यशोमत्यङ्के विहरणशीलः सदानन्दः।
सुर-नर-मुनि-विद्याधर-किन्नर-गन्धर्व-सिद्ध-संगीतः ॥ २ ॥
विषस्तन्यै शिशुघ्न्यै बाल्ये दयया च पूतनाख्या यै।
पीत्वा स्तन्यं योऽदात्सुर-काम्यां दुर्लभां मुक्तिम् ॥ ३ ॥
अथ शकटासुरमेकं कंसादिष्टं समागतं दृष्ट्वा।
बालक्रीडाऽऽसक्तोऽप्यहनच्चरणाग्रभागेन ॥ ४ ॥
तृणावर्त-नामानं दनुजविशेषं न्यपातयत् पृथ्व्यां।
गत-जीवनः स दैत्यो यत्कृपया प्राप मोक्षपदम् ॥ ५ ॥
मृत्स्नामत्सि यशोदा-संत्रस्तो बालसुलभमतिः।
पश्येत्यदर्शयत्तां जननीं रम्यानने श्रियं परमाम् ॥ ६ ॥
कस्मिंश्चित्समये किल दधिभाण्डस्फोटकौतुकी बालः।
निरपराधोऽपि मात्रा दाम्ना चोलूखले बद्धः ॥ ७ ॥
नलकूबरमणिकण्ठौ करुणावरुणालयः कृपया।
यमलार्जुनतरुभूतौ नारदशापान्मुमोच धनदसुतौ ॥ ८ ॥
गाश्चारयन् कदाचित् वृन्दारण्ये सुवत्सवेषधरं।
पापिनमसुरं ज्ञात्वा भ्राम्यन् पद्भ्यां जघान बली ॥ ९ ॥
पतत्रिरूपधारिणमथ बकसंज्ञकं पूतनावरजं।
करकमलेन गृहीत्वा चञ्चुपुटाद्व्यदारयत्तृणवत् ॥ १० ॥
अघमहिरूपधरं खलु ज्ञात्वा संविश्य तन्मुखे गतभीः।
निजवपुर्वर्द्धयित्वा भिन्नशरीरं च तं कृतवान् ॥ ११ ॥
गोगोपवत्सहरणम् मायामुग्धेन केन कृतं।
कृत्वात्मानम्बहुधा स्वैश्वर्य्यञ्च दर्शयामास विधिम् ॥ १२ ॥
कालियविषसंयुक्तं पीत्वा सलिलं कलिन्दनन्दिन्याः।
गावो गोपा वत्सा यत्रासन् मूर्च्छिताः सर्वे ॥
तत्रागत्याशु कृतं तेषाम् संजीवनं सुधादृष्ट्या।
तेऽपि बभूवुश्चकिताः विलोकयन्तो मिथो नूनं ॥ ( युग्मं ) १३।१४

कुशलनटचक्रवर्ती मूर्द्धन्योपरि ननर्त नागपतेः ।
पदपद्मचिन्हितं तं निरयापयच्च सूरिजातः ॥ १५ ॥
मुंजारण्ये गोपान् वत्सांश्च दावानलेन सन्तप्तान् ।
तं लीलया दवाग्निं पीत्वा च ररक्ष सर्वजनान् ॥ १६ ॥
ब्रजवनिता यद्धेतोः स्नात्वा चक्रुः सुपूजनं देव्याः ।
साक्षाद्भूतो हृत्वा तासामज्ञानवासांसि ॥ १७ ॥
गोपालसुप्तपूजः कुपितेन्द्रः प्रैरयत्प्रलयमेघान् ।
ब्रजमण्डलं समस्तं मंक्तुं सप्ताहपर्य्यन्तम् ॥
निज-करजोपरि धृत्वा गोवर्द्धनसंज्ञितं ह्यचलं ।
गोगोपगोपियुक्तं ब्रजं समस्तं जुगाप यस्याधः ॥ (युग्मं) १८ । १९
सोत्फुल्ल मल्लिकायां, शरदि ब्रजयुवतिभिः समं रचितं ।
परमोत्कृष्टं ललितं वृन्दा-विपिने महारासम् ॥ २० ॥
विद्याधरस्तु कश्चिन्नन्द-पदग्राहकोऽजगर-योनिः ।
सद्यः शापान्मुक्तो यस्याङ्घ्रि-स्पर्श-मात्रेण ॥ २१ ॥
कंसप्रेषितमसुरं व्यहनद्दुष्टं सदाऽरिष्टम् ।
केशिनमपि हयवेषं यतः स खलवृन्दमारणे दक्षः ॥ २२ ॥
श्रीयमुनासलिलान्ते स्यन्दनमध्ये तथैव शोभाढ्यं ।
दर्शयामास दिव्यं भक्ताक्रूरं निजं रूपम् ॥ २३ ॥
कुब्जामृज्वीं कृत्वाऽसौ च कंसकार्मुकं भङ्क्त्वा।
कुवलय करिणं हत्वा रराज यो रङ्गशालायाम् ॥ २४ ॥
शल-तोशल-खल-कूटक-मुष्टिक-चाणूर-कंस-संहर्ता ।
भूयात्सदैव शरणं, सर्वेषाम् सुन्दरः श्यामः ॥ २५ ॥

---

## निर्वेद-शतकम् ।

ले०—पं० बालमुकुन्दशर्म्मा, वीरपुर, साहित्यसुधाकरः ।

श्रीकृष्णःशरणं नित्यं वदन्तोऽपि वयञ्जडाः
तं विस्मृत्य प्रपञ्चेऽस्मिन्पतामोऽन्धा इवासकृत् ॥ १ ॥
मनोबलसमीक्षायां प्रतिष्ठायै मुहुर्मुहुः
कदर्थयन्तरतं धर्मः१ध्वजाःस्मो हन्त वा न किम् ॥ २ ॥

---

१ धर्मे ध्वजाो येषां ते, स्वार्थसिद्ध्यर्थं भगवन्नामरूप-धर्मचिह्नेन वर्तमाना इत्यर्थः ।

विद्याविस्मृतिशीलाऽथो लक्ष्मीर्लोला स्वभावतः
गदागारश्च देहोऽयं त्रिकेऽस्मिन् का स्थिरा मतिः ॥ ३ ॥
पितरौ स्वार्थसापेक्षौ पृष्ठचौराः२ सहोदराः
आधयो निलयेऽनेके तथाप्यत्र वृथा रतिः ॥ ४ ॥
धेनुःस्तनंधयी३ स्वस्या गृहिणी चाप्रियंवदा
उभे पोषयतो दुःखं गृहिणो वेत्ति मानसम ॥ ५ ॥
शरीरमलसम्भूते सुते काऽऽस्था शरीरिणाम्
उपादानगुणं४ कार्य्यं कालेनाप्नोति सर्व्वदा ॥ ६ ॥
ये कायप्न्तिच्छलप्रीत्या तीक्ष्णमन्तर्निरादराः
कुत्सितं दुग्धयन्तोऽस्मान्केऽस्माकं ते कुटुम्बिनः ॥ ७ ॥
न वरा यत्र नेतारोऽवसरे परिपन्थिनः
बुधारयो बुधाः केऽमी ज्ञातयः पक्षपातिनः ॥८
मित्राणि हि विचित्राणि प्रभवन्ति क्रियामिषैः
तान्येव कृति-वैलभ्याद्वैपरीत्यं न यान्ति किम् ॥ ९ ॥
वसुधायां विशालायां सङ्ख्या ग्रामस्य का भवेत्,
यतो ममत्वं कुर्व्वाणा जीवन्तोऽपि म्रियामहे ॥ १० ॥
यदि नास्ति सुखं शश्वदिति बुद्धयाऽनुभाष्यते
तत्किमर्थं वृथाक्लेश स्तत्तर्केणापकृष्यते ॥ ११ ॥
नास्माकं भजतो नेत्रे कृष्णरूपसुधाकणम्
किन्तु नित्यं निरीक्षेते स्त्रीणाम्नो मांसपिण्डकान् ॥ १२ ॥
वर्हिवर्हस्थितौ स्निग्धौ चन्द्रकौ चेतनां विना
नादध्यातां यथाऽऽमोदं तथैते तत्त्वदर्शनात् ॥ १३ ॥
श्रुतौ श्रीकृष्णगीताया स्तिष्ठामो वधिरा यथा
ग्राम्यगीतप्रसङ्गस्य रसज्ञोद्पज्ञया वृताः १४ ॥ (क्रमशः)

---

२ भ्रातरोऽग्राग्रजक्रममपहाय पृष्ठे पितृरिक्थस्य चौरा इति यावत् ।
३ आत्मनः स्तनंधयति पिबत्येतादृशी गौः ।
४ कार्य्यं कालेन हेतुना कारणगुणं प्राप्नुते, अत्रेयं प्रक्रिया यदि मलाज्जातस्तर्हि मल एव ।
५ "शब्दं कुर्वन्ति वदन्ति वा ।

# मूर्तिपूजा ।

ले०—पं० सीतारामाचार्यः प्रधानाध्यापकः
रामदेशीक संस्कृतविद्यालय दारागंज प्रयाग ।

अस्यां महामहिमशालिन्यां धर्मप्राणायां भारतभूमौ ऋषिमहर्षिभिः श्रुति-स्मृति पुराणादिभिश्च प्रतिपादिता सृष्टिक्रमादारभ्याद्यावधि विद्यमाना इदानीन्तनैरपि ऐहलौकिकपारलौकिककल्याणकामनया प्रतिक्षणमनुष्ठीयमाना अनुभूयमानफला "मूर्तिपूजा" प्रकाशते । शास्त्रीयविधिना देवाराधनेन सर्वाण्यभीष्टानि सिध्यन्त्यत्र नास्ति सन्देहः सनातनधर्मावलम्बिनाम् । परन्तु महान् खेदप्रदोऽयम् विषयः बत नास्तिकाः केचन सुधारकाः पाश्चात्यशिक्षाविभूषिताः सनातनधर्म-निन्दापरायणा इत्थमुद्घोषयन्ति यद्नहि सर्वव्यापकस्य "परमात्मनः काष्ठमूर्तौ पाषाणमूर्तौ धातुमूर्तौ वा प्रकाशसम्भवः अत इयम् ढकोसलेति" ।

परन्तु तेषामयम् भ्रमः । यथा विद्युत् सर्वत्र तंत्रीषु विद्यमानापि सर्वत्र न प्रकाशते किन्तु यत्र प्रकाशकयन्त्राणां संयोगस्तत्रैव प्रकाशते, तथैव सर्वत्र व्यापकोऽपि परमात्मा यत्र शास्त्रीयविधिना प्रतिष्ठितो भवति तत्रैव सोऽपि प्रकाशते, अर्थात् तत्रैव वरप्रदायी ईश्वरशक्तिराविर्भवति । अतः सर्वैरपि मूर्तिपूजा अवश्यं कर्त्तव्येति शम् ।

---

# अस्पृश्यान्दोलनम् ।

ले०—साहित्याचार्यः रामेश्वरशर्मा शास्त्री, विद्यालङ्कारः, लक्ष्मणगढ़ ।

( ततः प्रविशतो विदेशीयवेषभूषाभूषितौ द्वौ पुरुषौ )

पाश्चात्यानां भाषाधीता, कृत्वा नाशं सर्वस्वम् ।
आवाभ्याम् हतमानाभ्याम् वा, गतवित्ताभ्यां निर्गर्वम् ॥ १ ॥
धर्मस्त्यक्तो योऽपरिहार्यः ऋजुता त्यक्ता सौख्यवहा ।
नष्टं वित्तं बलमप्यात्ता, लालिकता या क्लेशवहा ॥ २ ॥
किं किं कुर्मो यामः कुत्र, कथमुदरम्भरणीयम् ।
"रामेश्वर" चरणाम्बुजप्रेम कथय कथं करणीयम् ॥ ३ ॥

प्रथमः—मित्रमहेश ! आकर्ण्य मित्रेभ्य आंग्लभाषाप्रशंसां धर्मविरोधिनीं

तामहमपाठिषम्, कृत्वा प्रचुरधनव्ययमुच्चपदोपलब्ध्यै। परन्त्वद्यावधि बी० ए० परीक्षामुत्तीर्यापि स्वोदरपूरणैकसाधनमपि किंचित्स्थानं न लभे-किं करोमीत्यधुना त्वया वाच्यम्—

द्वितीयः—गिरीश! त्वदुत्तरदाने न मे मतिर्मनागपि स्फुरति, अहमपि त्वादृश एवोदरपूरणचिन्तापरोऽस्मि—न जाने किमस्माकमाङ्ल-भाषाध्यायिनां भविष्यतीति। (स्मृतिमभिनीय) आम् किं न श्रुतं त्वया! अधुनास्माक वृत्तिसमुपार्जनाय सहैवोच्चपदलाभाय च महात्मना गान्धिना सञ्चारितं सञ्चरति "अस्पृश्यान्दोलनम्"।

गिरीशः—पत्रेषु बहुधा तत्समाचारा आकर्णिताः।

महेशः—आकर्णिताः—तर्हि रोचते न वा तुभ्यं तदान्दोलनम्।

यद्यावां तदान्दोलनं प्रचारयावस्तदास्माकं वित्तान्नसम्बधिनी चिन्तापि व्यपगमिष्यतीति मया चिन्त्यते।

गिरीशः—वाढम्, परन्तु साम्प्रतं यथान्दोलनमान्दोल्यते तदस्माकं सनातनधर्मानुकूलं तु नास्ति? अहो! किमावामुदरभरणार्थं धर्मविरोधमपि करिष्यावः?

महेशः—सखे! उदरचिन्तायां सत्यां का धर्मचिन्ता? यस्मिन्दिने समारब्धमावाभ्यामाङ्गलभाषाध्ययनं संस्कृतभाषां विहाय तदैव धर्मचिन्ता तु चितायां समारोपिता। तत् धर्माधर्मविचारं परित्यज्य तथैव करणे सन्नद्धो भव—

> धार्यो धर्मो वृथावुष्टैरलसैर्वित्तगर्वितैः,
> प्राणात्ययेऽपि किं मित्र! धर्मचिन्ता विधीयते?

गिरीशः—वरं-यथा कथयसि तथा करिष्यामि।

"अस्पृश्यगृहम्"।

केचन वृद्धा युवानो बाला धृतजर्जरवस्त्रखण्डास्तत्रोपविष्टाः—बालाश्च धूलिधूसरिताः। क्रीडन्ति तत्रैकस्तरुणः—

पितामह! बहुदिवसेभ्यः अद्यास्माकमपि सुदिवसः समागतः यदुच्चगृहस्था अपि-अस्माकमुन्नत्यै प्रयतन्ते व्याख्यानं प्रदायास्माकं सुधाराय चेष्टन्ते। बहुशस्तु सुधारका गृहानुपेत्य बालेभ्यो वितीर्य प्रसादमस्माकं गृहानपि मार्जयन्ति।

वृद्धः—अहो! किं ब्रूषे, अयमस्माकं सुदिवसः समागत इति, परन्तु नायं सुदिवसः, किन्तु अस्माकं वृत्त्यपहारकः करालः कालः, एते सुधारका धनिभ्योऽ-

स्मद्र्थं साहाय्यमभ्यर्थ्य तस्य चतुर्थभागमस्मासु व्ययीकुर्वन्ति, शेषं निश्शेषं स्वोदरपूर्त्यै रक्षन्ति, मार्जनकर्मकरणेन त्वस्माकं वृत्तिमप्युच्छिन्दन्ति।

तरुणः—किमेवंविधः स व्यापारः ?

वृद्धः—किमत्राप्यस्ति कोऽपि सन्देहः ?

( क्रीडन्तो बालकाः - आगत्य )

पितामह ! समायातौ द्वौ पुरुषौ खद्दरधारिणौ तावस्मान् स्निह्यतः।

वृद्धः—तर्हि तौ प्रवेशयन्तु।

तावेव गिरीशमहेशौ धृतशुक्लवस्त्रौ मार्जनीहस्तौ प्रविशतः।

उभौ—आवां भवतां वेश्म मार्जयावः, यूयं मलिनवसना निवसथ, अतस्तानि शोधयावः, बालेभ्योऽपि स्नानादिकं कारयावः—

वृद्धः—यजमानौ ! शोधनकर्मास्माकीनं विद्यते, अन्येषां गृह-शोधनक्रियया जीवन-निर्वाहका वयं, भवद्भ्य एतत्कार्यं कारयितुं नेच्छामः, तस्मात्तत्प्रक्रियामुपदिश्यैव युवां गन्तुमितोऽर्हथः।

( वृद्धवचनमनाकर्ण्य तौ तथा कुरुतः झटिति समाप्य तत्कर्म तद्बालांश्च गृहीत्वा मध्येसभं यातः )

तत्र महेशः—

महाशयाः ! शृणुत-अस्माकं भारते वराकानामस्पृश्यानां दशा विचित्रैव विद्यते, एते न्यक्कृता अस्मत्तः स्वजीवनं यथा तथा धारयन्ति, नैतेषां जीवनम् जीवनम्, इत्यस्माभिरद्य तेषां गृहे गत्वा प्रत्यक्षीकृतम्। एतादृशं घृणास्पदं जीवनं निर्वहन्त एते तस्माज्जीवनादुदासीनाः सन्तस्तं परित्यज्य मुस्लिम-ईसाई धर्मे प्रविशन्ति। तस्मादेतेषां सौकर्याय धनं प्रदाय धनिकैरन्यैश्चास्मादृशैस्तनुभिरेतेषां सेवा विधेया। ( बालकावग्रेकृत्य ) अवलोकनीयम् यथावाभ्यामद्य इमे बालकाः स्नानादिभ्यः सन्मानिताः तथैव यदि पुनरपि क्रियते तर्हि तेषामपि सुदशा भविष्यति। आवाभ्यामस्मै कार्याय प्रबलं प्रयत्नं करिष्यावः। परन्तु भवद्भिरत्र धनसाहाय्यं दातव्यम् तेनास्माकं कार्यं सुशोभनं सम्यक् प्रसृतिमागच्छेत्।

धनिकाः परस्परं संलपन्ति, केचिद्धनिनो धनं ददति, केचिद्विचारयन्ति—तदैवोत्थाय गिरीशः—

एतदस्माकंजीवनमरणसमयः, न भवद्भिरत्र किमपि विचार्यम्, झटिति धनसाहाय्यं प्रदातव्यम् येन शीघ्रं कार्यं भवेत्।

( धनिनो विस्वस्य लक्षरूप्यकात्मकं साहाय्यं वितरन्ति )

( तौ गृहीत्वा गृहं प्रति गच्छन्तौ मध्ये मार्गं संलपतः )।

गिरीशः—महेश ! अयम् धनोपार्जनोपायस्तु भवता साधूपदिष्टः अनया-रीत्या तु वयमेकेनैव दिनेन धनिनो भूताः स्मः। परन्तु किमस्माभिरेतत् सर्वं धनं स्वस्वार्थायैवोपयोज्यम् किम् ?

महेशः—किमत्रापि वक्तव्यम्, एकस्मिन् दिने गत्वा स्पृश्यानां गृहेष्व-स्माभिरुपार्जितं बहुतरं यशः—साम्प्रतमस्मासु जनाः श्रद्दधति, तदस्माभिरेव तत्र भोक्तव्यम्।

वक्तव्यं न किमप्यत्र, त्वया भो धर्मभीरुणा।
छलेन धनमादेयं, नेतॄणां कार्यमीदृशम्॥

[ अस्पृश्यानां गृहम् ]

स एव वृद्धः—स एव तरुणः—

तरुणः—पितामह, तौ सुधारकावेकदैवास्माकं गृहेष्वायातौ पुनर्दर्शनमपि तेषां न संजातम्, अस्माकं सुधाराय जनतया ताभ्यां धनं तु प्रचुरं स्वायत्ती कृतम्—

वृद्धः—धनमेव न संगृहीतम् किन्त्वस्माकं वृत्तिरप्युच्छिन्ना, अधुना प्रायः तत्समानविचारा अनेके स्वहस्ताभ्यामेव स्वान् गृहान् मार्जयन्ति, पुरीषमुत्थाप-यन्ति। वयन्तु वराका उच्छिन्नवृत्तिकाः सन्तो रजकसारमेयसदृशाः सञ्जाताः न च सनातनधर्मणां विश्वासपात्राणि साम्प्रतं स्मः, न च तेऽपि किमपि साहा-य्यमाचरन्ति।

तरुणः—पितामह ! यथा कथ्यते तथैव दशा साम्प्रत मनुभूयते। पूर्वं पर्याप्त-मन्नं वस्त्राणि भूषणानि चास्माभिरलम्भिषत परन्त्वधुना तु तदपि नैव लभ्यते-बुभुक्षापीडिता वयं कं शरणं यामः।

नेपथ्ये।

भगवतः श्रीकृष्णस्य-सनातनधर्मस्य च स्मरथ यूयं भगवद् वाक्यम्
स्वे स्वे कर्मण्यभिरतः संसिद्धि लभते नरः—( सर्वे भगवन्तं प्रार्थयन्ति )।
प्रभो दुर्दशा साम्प्रतं विद्यते नः, वयं न्यक्कृता धर्मतः स्मः पुराणात
निजार्थैर्विणोऽस्मानधर्मं नयन्ति, तदागत्य शीघ्रं सुखं नो विधेहि॥
अवतीर्य श्रीकृष्णः—अस्पृश्याः—आकर्णयत—

एते मदीया एव पुत्रा धर्ममर्मविरहिता भवतो मत्पुत्रान् स्वधर्मतश्च्यावयन्ति स्वयञ्च प्रच्यवन्ते। भवतामेतत्कर्म। परन्तु भवद्भिरत्र "देवयात्राविवाहेषु यज्ञप्रकरणेषु च उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते" इत्यपवादाश्रयेणैव स्पर्शदोषं परिहरद्भिः स्वच्छतया स्वकर्म कुर्वद्भिः "अवश्यमेव भोक्तव्यं कृतं कर्मशुभाशुभमिति विविच्य यथा पूर्ववत् वर्तितव्यम्। अद्यापि मदाज्ञा परिपालकाः सनातनधर्मिण एव भवतां पूर्णतया सहायकाः अतस्तेषामेवाज्ञया भवद्भिर्जीवनं यापनीयम् परधर्मप्रवेशेन भवतामुन्नतिर्न भविष्यति। किन्तु स्वधर्मपालनेनैव।

यावच्छक्यं भवद्भिः शिक्षितैः स्वास्थ्यनियमपरिपालकैर्भवितव्यम्। परन्तु अपन्थाः तु नाश्रयणायः--यतोहि-"अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति"

सर्वे सहर्षं वयं भगवदुक्तमेव करिष्यामः ततः। सनातनधर्मिण आगत्य तानाश्वयसन्ति--

हे अन्त्यजाः? यूयं न मुञ्चत हिन्दुधर्मं कर्हिचित्।
निम्नतायामपि न भजत स्वल्पमपि दुःखं क्वचित्। १।
दृश्यतां खलु निम्नगाया अपि जलं निजकर्मतः।
याति महतां मस्तकेषु, स्थानतां महितां क्वचित्। २॥
कर्म तद्वत् शास्त्रगीतं स्वञ्च कुर्वाणा द्रुतम्।
प्राप्स्यथोच्चं स्थानमार्य्यं नान्यथा वा जातुचित्। ३।
सेवावृत्तिं योगिभिरपि दुष्करां कुरुताऽन्वहम्।
'रामेश्वरं' यूयं प्रभुं खल्वाप्स्यथ द्रुतमेव चित्। ४।

---

**श्रीरामराजत्रिपाठीश्रीच्छत्रधारि.संस्कृतविद्यालय राजहथुवास्थः सूचयति--**

छपरामण्डलान्तर्गत हथुआ राजकीयश्रीच्छत्रधारिसंस्कृतविद्यालये श्रीसरस्वतीदेव्याः पूजनस्य चतुर्थोऽवसरः सुसम्पन्नः, परञ्च भारतसम्राट्पञ्चमजार्जस्य परलोक प्रस्थानसमाचारं श्रुत्वा भारतवर्षीयाः मानवाः शोकनिमग्नाः बभुवुः जनवरीमासस्य सप्तविंशति तारिकायां चतुर्थवादनकाले श्रीहथुआमहाराणीलहिवामहोदया स्वसभापतित्वे महतीं शोकसभां कारितवती। राजकर्मचारिभिः तत्पश्चात् दीनजाति पुरुषेभ्यः धनवस्त्रादिकंदत्तं दुर्दिनसम्पन्नेऽपि वसन्तपञ्चमीदिने देव्याः पूजनम् कथञ्कथमपि प्रधानाध्यापकेन श्रीपं० जाह्नवीप्रसादत्रिपाठिना कृतम्। शोकसभायां प्रधानाध्यापकेन शोकोद्गरणमतिशयं प्रकटीकृतमिति।

---

( बहूदकसाधनोपदेशाः )

द्वितीयस्य तु विज्ञेया पूजा प्रोक्ता हि मानसी ।
चतुर्योगेषु प्रोक्तेषु योगस्तस्य हठस्स्मृतः ॥
उपांश्वेव जपेन्नित्यं गुरुमन्त्रादिकं शुभम् ।
सैश्वर्यायाः स्थूलमूर्तेः ब्रह्मणः परमेशितुः ॥
ध्यानेन यदि तृप्तः स्यात्संन्यासी तु बहूदकः ।
ज्योतिर्ध्यानेऽथवा विन्दुध्याने कुर्याद् रतिं सदा ॥
निर्गुणाया एव शक्तेर्ध्यानमेतत् सहायकम् ।
कृत्वा हृत्पद्मनिलये विश्वाख्यं विश्वसंभवम् ॥
आत्मानं सर्वभूतानां परस्तात्तमसः स्थितम् ।
सर्वस्याधारमव्यक्तमानन्दं ज्योतिरव्ययम् ॥
प्रधानपुरुषातीतमाकाशं दहनं परम् ।
तदन्तः सर्वभावानामीश्वरं ब्रह्मरूपिणम् ॥
ध्यायेदनादिमद्वैतमानन्दादिगुणालयम् ।
महान्तं परमं ब्रह्म पुरुषं सत्यमव्ययम् ॥
सितेतरारुणाकारं महेशं विश्वरूपिणम् ।
ओंकारान्तेऽथवात्मानं संस्थाप्य परमात्मनि ॥
आकाशे देवमीशानं ध्यायीताकाशमव्ययम् ।
कारणं सर्वभूतानामानन्दैकसमाश्रयम् ॥
पुराणं पुरुषं शम्भुं ध्यायन्मुच्येत बन्धनात् ।
यद्वा गुहायां प्रकृतौ जगत्सम्मोहनालये ॥
विचिन्त्य परमं व्योम सर्वभूतैककारणम् ।
जीवनं सर्वभूतानां यत्र लोकः प्रलीयते ॥
आनन्दं ब्रह्मणः सूक्ष्मं यत् पश्यन्ति मुमुक्षवः ।
तन्मध्ये निहितं ब्रह्म केवलं ज्ञानलक्षणम् ॥
अनन्तं सत्यमीशानं विचिन्त्यासीत संयतः ।
गुह्याद्गुह्यतमं ज्ञानं यतीनामेतदीश्वरम् ॥
योऽनुतिष्ठेत सततं सोऽश्नुते योगमीश्वरम् ।
तस्माद् ध्यानरतो नित्यमात्मविद्यापरायणः ॥
ज्ञानं समभ्यसन् नित्यं मुच्यते भवबन्धनात् ।

यद्वा पृथक्त्वमात्मानं सर्वस्मादेव केवलम् ॥
आनन्दमक्षरज्ञानं ध्यायीत च पुनः परम् ।
यस्माद् भवन्ति भूतानि यद्‌गत्वा नेह जायते ॥
स तस्मादीश्वरो देवः परस्ताद्योऽधितिष्ठति ।
यदन्तरे तद्‌गमनं शाश्वतं शिवमव्ययम् ॥
यमाहुस्तत्परो नास्ति स देवः स्यान् महेश्वरः ।
अह्ना रात्र्या च यान् जन्तून् हिनस्त्यज्ञानतो यतिः ॥
तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडाचरेत् ।
प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम् ॥
प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ।
इति साधनोपदेशाः ।

# ४१–बहूदकाचारोपदेशः ।

वर्णाश्रमधर्म्मयोः तयोः सर्वेषु विभागेषु च आचारस्य प्राधान्यमत एव कुत्रचिदाचारः प्रथमो धर्म्मः कुत्रचिच्च प्रधानो धर्म्म आचार इत्यभिहितम् । स्ववर्णाश्रमसम्बन्धी तयोर्विभागैश्च सम्बद्धो धर्म्मानुकूलः शारीरिको व्यापारः आचार इत्यभिधीयते । आचारं द्वारीकृत्यैव व्यक्तिविशेषस्याधिकारो निर्णीयतेऽतः कुटीचकबहूदकादिव्रत-परायणैः संन्यासिभिः स्वस्वाधिकारानुकूलाचाराणां पालनं यत्नतो विधेयम् । आचाराणां प्रभावो यथा स्वान्तःकरणे पतति तथैवाऽन्येषामप्यन्तःकरणेषु । कुटीचकाद्‌बहूदकाधिकार उन्नत इति बहूदकाचाराः संक्षेपतोऽधोनिर्दिश्यन्ते ।

## [ आचारोपदेशः ]

[ कुर्यात्तत्र बहूदकः ] आचार्यकार्यं शास्त्रोपपत्तिकांशोपदेशनम् ।
द्वितीयः खलु सूक्ष्मस्य त्यजेदध्यासमन्वहम् ॥
रक्षेत्सदा प्रयत्नेन द्वितीयः सूत्रमात्रकम् ।
शिखा तस्य जटायां हि सम्यक् परिणता भवेत् ॥
प्राणान्ते स्थूलदेहस्य दाहादिविषये स्मृतिः ।
दहनं क्षेपणं वापि द्वितीयस्याऽनले जले ॥
बहूदकस्तु संन्यासी गुरुदेवस्य संनिधौ ।
स्पृष्ट्वा तीर्थजलं सम्यग् गृह्णीत व्रतमुत्तमम् ॥

त्यजेत्तदुक्तमखिलं सङ्कल्पेन बहूदकः।
कुटीचकस्तु संन्यासी पूर्वलक्षणलक्षितः॥
त्रिभिरेव हि वर्षैस्तु स बहूदकतां श्रयेत्।
तत्त्वज्ञानेऽग्रसरतां विना किन्तु न तामियात्॥
बहूदकस्य धर्मेषु विशिष्टानि मुनीश्वराः।
वच्मि सर्वप्रधानानि लक्ष्यमाणानि यानि वै॥
विश्वात्मना समं स्वस्य चक्ये यत्नो विशेषतः।
जगद्ब्रह्मस्वरूपं वै ज्ञात्वा निष्कामकर्मकृत्॥
केवलं स भवेन्नित्यं व्रतेऽस्मिन्निरतः शुचिः।
पूर्णतायास्तथा लाभस्त्यागे तपसि यत्नतः॥
अनिकेतः स्थिरमतिस्तथा च दृढसंयमी।
न केषुचिदभिष्वङ्गो कश्चनापि हि कुत्रचित्॥
तीर्थयात्राटनं चैव समासेन निबोधत।
कामिनीकांचनाभ्यां हि वैराग्यं मनसा यदि॥
पूर्णं नैवोपलब्धं चेन्न बहूदकतां श्रयेत्।
संस्कारो ममतायाश्चेत्स्वजातिकुलबन्धुषु॥
न पूर्णं मनसा नष्टो न बहूदकतां श्रयेत्।
आत्मन्येव स्थितौ पूर्णा यदीच्छा नोपजायते॥
कदापि विप्रो धर्मज्ञो न बहूदकतां व्रजेत्।
कुटीचकस्य यत्त्वाहुर्मनसा पूजनं सदा॥
देवर्षिनित्यपितॄणां यच्चाहुर्वै ह्यमन्त्रकम्।
जगत्कल्याणबुद्ध्यैव महायज्ञविधानकम्॥
सर्वमेतच्च संप्रोक्तं ब्रह्माण्डस्यात्मना सह।
ज्ञेयं तन्मुनिभिर्नित्यमैक्यसम्बन्धवर्द्धकम्॥
तयोर्बहूदकस्यास्ति न निषेधो न वा विधिः।
संकल्पमोहरहितो यस्मात्स परिकथ्यते॥
अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत्।
प्राणयात्रिकमात्रःस्यान्मात्रासंगाद्विनिर्गतः॥
अभिपूजितलाभांस्तु जुगुप्सेतैव सर्वशः।
अभिपूजितलाभश्च यतिर्मुक्तोऽपि बध्यते॥
इन्द्रियाणां निरोधेन रागद्वेषक्षयेन च

अहिंसया च भूतानाममृतत्वाय कल्पते ॥
अवेक्षेत गतीर्नृणां कर्मदोषसमुद्भवाः ।
निरये चैव पतनं यातनाश्च यमक्षये ॥
विप्रयोगं प्रियैश्चैव संयोगं च तथाप्रियैः ।
जरया चाभिभवनं व्याधिभिश्चोपपीडनम् ॥
देहादुत्क्रमणं चास्मात् पुनर्गर्भे च संभवम् ।
योनिकोटिसहस्रेषु सृतीश्चास्यान्तरात्मनः ॥
अधर्मप्रभवं चैव दुःखयोगं शरीरिणः ।
धर्मेण सुखमित्यादि स्मृतिकारवचस्तथा ॥
धर्मार्थप्रभवं चैव सुखसंयोगमक्षयम् ।
सूक्ष्मताञ्चान्ववेक्षेत योगेन परमात्मनः ॥
देहेषु च समुत्पत्तिं उत्तमेष्वधमेषु च ।
दूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे रतः ॥
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ।
फलं कतकवृक्षस्य यद्यप्यम्बुप्रकाशकम् ॥
न नामग्रहणादेव तस्य वारि प्रसीदति ।
संरक्षणार्थं जन्तूनां रात्रावहनि वा सदा ॥
शरीरस्यात्यये चैव समीक्ष्य वसुधां चरेत् ।
अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपितम् ॥
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ।
जराशोकसमाविष्टं रोगायतनमातुरम् ॥
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ।
प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ॥
विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम् ।
यदा भावेन भवति सर्वभावेषु निस्पृहः ॥
तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ।
अनेन विधिना सर्वान् त्यक्त्वा संगान् शनैः शनैः ॥
सर्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ।
ध्यानिकं सर्वमेवैतत्तदेतदभिशब्दितम् ॥
मज्ञानध्यात्मवित्कश्चित् क्रियाफलमुपाश्नुते ।
अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ॥

आध्यात्मिकं च सततं वेदान्ताभिहितं च यत् ।
इदं शरणमज्ञानामिदमेव विजानताम् ॥
इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम् ।
अनेन क्रमयोगेन परिव्रजति यो द्विजः ॥
स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति ।
वर्णाश्रमस्य धर्मं हि आर्यत्वस्य दृढं ध्रुवम् ॥
एक एव चरेन्नित्यं सिद्ध्यर्थमसहायवान् ।
सिद्धिमेकस्य संपश्यन् न जहाति न हीयते ॥
अतिवादाँस्तितिक्षेत नावमन्येत कञ्चन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥
क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।
सप्तद्वारावकीर्णाञ्च न वाचमनृतां वदेत् ॥
अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥
न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥
तापसादिभिराक्रान्तं नागारं भिक्षया व्रजेत् ।
एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकम् ॥
वर्षाभ्योऽन्यत्र वर्षासु मासाँश्च चतुरो वसेत् ।
अभयं सर्वभूतेभ्यो दत्वा चरति यो मुनिः ॥
न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ॥

इति बहूदक-संन्यासपद्धतिः ।

---

## ४२—हंसाधिकारप्राप्तिः ।

जीवन्मुक्तिपदप्राप्तये कुटीचको बहूदकः हंसश्चेति त्रयः सोपानभूताः अवगन्तव्याः । हंसो हि तृतीयं सोपानम् । त्रिष्वप्येतेषु एकैक उत्तरोत्तरं समुन्नतः । एते त्रयोऽपि साध्यकोटौ प्रविष्टाः, परमहंसस्तु सिद्धकोटिगः । अतो हंसव्रत एव साधनाधिकारपूर्णताऽधिगन्तव्या । साधनावस्थायां हंससंन्यासाधिकारः सर्वमतिरिच्यते । यावच्च साधकेषु पूर्वोक्ताश्चतस्र एषणा न विलीयेरन्, विषयेभ्यश्च पूर्णं वैराग्यं न प्रादुर्भवेत्, साधनचतुष्टयसिद्धिलक्षणानि च न प्रतीयेरन्, अहंकृतिर्वा न समूलं प्रणश्येत्, दम्भत्यागेन कर्मयोगस्य, आलस्यराहि-

त्येन भक्तियोगस्य, अहङ्काराभावेन ज्ञानयोगस्य च सिद्धिलक्षणानि नावाप्येरन् तटस्थज्ञानस्वरूपज्ञानयोश्च पार्थक्यानुभवो वा न दृष्टिगोचरतामुपेयात् न तावत्साधको हंसव्रतग्रहणस्य पूर्णोऽधिकारी भवेत् । यदि गुरुदेवः कुत्रचन साधके सर्वविधमप्युन्नतं लक्षणं परिपश्येत्, तर्हि तं मुमुक्षुं भाग्यशालिनं कुटीचकबहूदक-हंसनामकदीक्षात्रयेण सहैव दीक्षितं कर्तुं शक्नोति । परमस्य वैराग्यस्य, परायाः भक्तेः, आत्मज्ञानस्य चाधिकारवतः सिद्धस्य कृते नहि किल देशकालसापेक्षता त्रैवार्षिकव्रतग्रहणस्यापि च न प्रयोजनम् । हंसव्रतधारी महापुरुष एव हंसदीक्षां दातुं शक्नोति । परमहंसस्तु तत्कृते समर्थ एव । तत्कृपा तु तदर्थं नितरां प्रशस्ता ।

---

# ४३--शिखासूत्ररहस्यम् ।

शिखा सूत्रं नाम वर्णाश्रमधर्मावलम्बिन्या आर्यजातेः परमावश्यकं चिह्नम् । सदाचारः, वर्णधर्मः, आश्रमधर्मः, नारीणां पवित्रता, सर्वास्ववस्थासु चाध्यात्मिकं लक्ष्यमिति लक्षणमार्यजातेः । यत्रैतत्सर्वं नोपलभ्यते, साऽनार्या जातिरिति । आर्यानार्यजात्योरयमेव वेदशास्त्रसम्मतो भेदः । त्रिलोकपावन्याः, देवर्षिपितृसंवर्द्धनकारिण्याः, आध्यात्मिकोन्नतिशीलाया आर्य्यजातेः शिखा सूत्रं च प्रकृष्टं चिह्नम् । शिखा हि आध्यात्मिकलक्ष्यसूचिका । जीवनं च यज्ञमयमनुष्ठातुं यज्ञसूत्रापरनामकं यज्ञोपवीतमध्यात्मोन्नतिशालिभिर्मानवैः परिधातव्यमिति वेदाः शास्त्राणि च समामनन्ति । मनसो बुद्धेश्च सदोद्ध्र्वमुखीकरणमेवाध्यात्मिकलक्ष्यस्य रहस्यमवगन्तव्यम् । शिखाया धारणं तद्बन्धनं चाध्यात्मलक्ष्यस्थैर्ये परमं साहाय्यकरं प्रतिपादितम् । सदा सदाचारपरायणानां मानवानां शिखासु ब्रह्मविष्णुमहेश्वराणां, नित्यानां देवर्षिपितॄणां च निवासः शास्त्रसम्मतः । आर्यजातीयानां द्विजानां निखिलमपि जीवनं यज्ञमयमिति हेतोस्तैरध्यात्माधिदैवाधिभूतरूपत्रिविधशुद्धये त्रिगुणितं यज्ञसूत्रं परिधेयमिति वेदेषु शास्त्रेषु च परिदृश्यते । अतो हि शिखासूत्रपरित्यागत आध्यात्मिकलक्ष्यराहित्यं यज्ञमयजीवनहीनत्वं च मनुष्येषु समुत्पद्यते । एवम्भूतयोस्त्रिलोकपवित्रकरयोः शिखासूत्रयोः परित्यागो ब्रह्मचारिभिर्गृहस्थै र्वानप्रस्थैश्च न कदाप्यनुष्ठेयः । यतस्तत्त्यागेन तैः पतितैर्भूयते । कुटीचकै र्बहूदकैरपि संन्यासिभिः शिखासूत्रपरित्यागो न विधेयः । आध्यात्मिकपथपथिको मुमुक्षु र्यावत्कृतकृत्यो योगारूढो न भवेत् न तावत्तेन त्रिलोकपवित्रकरवर्णाश्रमचिह्नानि परित्यक्तव्यानि ।

यदा हि संन्यासधर्मस्यान्तिमां हंसदीक्षां श्रीगुरुदेवकृपापरम्परयाऽधिगच्छति, तदैव साधको वर्णाश्रमबाह्यचिन्हानि परित्यज्यान्तर्मुखो भवितुमधिकारं प्राप्नोति। जीवन्मुक्तपदमधिगन्तुं कुटीचक-बहूदक-हंस-परमहंस-धर्माः सोपानस्वरूपाः स्वातन्त्र्येण सुनिरूपिताः। मध्यमवैराग्यम्, उत्तमवैराग्यम्, अधिमात्रवैराग्यम्, परं वैराग्यमित्यादिभिश्चतुर्भिरधिकारैस्तद्धर्मा कथमिव सम्बन्धनिबद्धा इति पूर्वमेव समुपबृंहितम्। योगारूढदशाचरितार्थता परमहंससंन्यासिष्वेव-सम्भवति। अत एव परमहंसधर्मदीक्षा न कापि विद्यते। यतोऽसौ स्वयं, सिद्धस्वरूपा। परमहंसदशाद्वारभूतस्य हंसधर्मस्यैव दीक्षा शास्त्रेषु निर्दिष्टा। हंसदीक्षाग्रहणकाले शिखासूत्रयोः परित्याग आवश्यकः। तदानीं तादृशमुमुक्षुणा आत्मारामेण सता तत्त्वतस्त्रिलोकेन सह सम्बन्धविच्छेदं कर्तुं पार्यते। यावच्च वासनानां पूर्णो विलयः, एषणानां सर्वथा परित्यागः मनोनाशस्य यथेष्टं लक्षणं, तत्त्वज्ञानेन चात्मज्ञानोपलब्धे परिपूर्णा योग्यता मुमुक्षुषु न सम्यक् समुत्पद्येरन्, न तावत्तै र्योगारूढै र्भवितुं शक्यते, न वा तैर्वर्णाश्रमधर्मबाह्यचिन्हानि शिखायज्ञोपवीतादीनि परित्यक्तुं पार्यन्ते। योगारूढानामात्माराममहात्मनामेव कृते आध्यात्मिकोन्नतिबहिर्लक्षणस्वरूपशिखाधारण-निष्प्रयोजनीयताऽवगन्तव्या, तथा च निर्विकल्पसमाधिसंयुक्तमहात्मान्तःकरणं सर्वदैव यज्ञमयमिति तत्कृते यज्ञमयजीवन-बहिर्लक्षणरूप-यज्ञसूत्रसंरक्षणस्या-नावश्यकत्वमवधेयम्। सुतरां समुन्नताधिकारसम्पन्नेनैव महात्मना शिखासूत्रा-दीनि परित्यक्तव्यानीति निष्कर्षः।

## ४४–हंससंन्यासव्रतग्रहणम्।

बहूदकव्रतावस्थायामात्मानं हंसव्रतयोग्यतावन्तं परिभाव्य मुमुक्षुणा साधकेन श्रीगुरुदेवचरणसरोरुहशरणं शरणीकुर्वता सप्रणिपातं स्वीयमभिमतं निवेदनीयम्। ततश्च कृपासागरो गुरुः पूर्वोक्तां पद्धतिमनुसृत्य शुभे काले स्नान-संकल्पादिकं कारयित्वा शिष्यं हंसदीक्षया दीक्षेत। यथापूर्वं योग्यब्राह्मणद्वारा गणपतिपूजनं, पुण्याहवाचनम्, अग्निस्थापनं च विधाप्य प्राणादिहोमं पुरुषसूक्त-होमं, विरजाहोमं च समाप्य शिखासूत्रे हावयेत्। शिखासूत्रहवनविशिष्टो विधिरधोनिर्दिश्यते।

### ( शिखासूत्रहवनविधिः )

"अभयं सर्वभूतेभ्यः स्वाहा" इति प्राच्यां दिशि अपां पूर्णाञ्जलिं क्षिप्त्वा, शिरसि स्थापितकेशानुत्पाट्य यज्ञोपवीतमप्युद्धृत्यैकीकृत्य करे गृहीत्वा "वेदांत-

विज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥" "ॐ आपो वै सर्वा देवताः सर्वाभ्यो देवताभ्यः जुहोमि ॐ भूः स्वाहा" इत्यप्सु जलैः सह हुत्वा प्रार्थयेत् । "सर्वदेवात्मके तोयं तोयाहुतिमहं हरे ॥ दत्वा सर्वेषणां त्यक्त्वा युष्मच्छरणमागतः । त्राहि मां सर्वलोकेश गतिरन्या न विद्यते । संन्यस्तं मे जगन्नाथ पाहि मां मधुसूदन ॥ त्राहि मां सर्वदेवेश वासुदेव सनातन । संन्यस्तं मे जगद्योने पुण्डरीकाक्षमोक्षद ॥ अहं सर्वाभयं दत्वा भूतानां परमेश्वर । युष्मच्छरणमापन्नस्त्राहि मां पुरुषोत्तम ॥" इति विष्णोः प्रार्थना ।तदन्तरं श्रीगुरुदेवः पूर्वोक्तप्रकारेण नूतनं चिन्हं परिधाप्य शिष्यं भाग्यवन्तं प्रणवमन्त्रेणाभिषेचयेत् । ततश्च शान्तिपाठपूर्वकमात्मशक्तिं परिपूरयितुं गुरुः कूटस्थे स्वरूपे वा स्थित्वा हृदयालम्मनद्वारा शिष्यं कृतकृत्यं कुर्यात् ।

---

## ४५—प्रणवप्रवेशः प्रेषनिदिध्यासनं च ।

प्रलयकाले स्थूलं वस्तुजातं सूक्ष्मे, तच्च प्रणवे, सोऽपि मूलप्रकृतौ, साऽपि च परे ब्रह्मणि विलीयते । तदाद्वैतसत्त्वैव केवलमवशिष्यते । संन्यासदीक्षासु हंसदीक्षैवान्तिमा । अतोऽन्तिमदीक्षायामेवास्यां योगिराजः श्रीगुरुदेवः प्रणवप्रवेशमार्गं सरलं विधाय गुरुभक्तिपरायणं शिष्यं कृतार्थयति । समष्टिव्यष्टिरूपेण ब्रह्माण्डं पिण्डं चापि समानमेव । पुरुषशक्तिः प्रकृतिशक्तिर्वा, पुरुषभावः प्रकृतिभावो वा चित्सत्तावैभवं, सत्सत्तावैभवं वा यदेतत्सर्वं ब्रह्माण्डे समुपलभ्यते, तत्सर्वं पूर्णावयवमानवपिण्डेऽपि विद्यते । अत एव कारणात् सकलानां देवानां ग्रहनक्षत्रादीनां च पीठानि मानवशरीरे प्रकटीभवन्ति । लययोगसिद्धान्तमनुसृत्य सहस्रारन्ध्रे परमपुरुषस्य, आधारचक्रे च कुलकुण्डलिनीरूपिण्याः परमायाः प्रकृतेश्च स्थानं निर्दिष्टम् । यावत् साधकस्य प्रवृत्तिर्बहिर्मुखीभावमवलम्बते, यावच्च तदीया दृष्टिर्विषयमनुधावति, यावच्चापि साधकोऽविद्याराज्ये भ्राम्यति; तावत् तस्य देहस्थिताऽऽधारचक्रे विद्यमाना कुलकुण्डलिनीरूपिणी महाशक्तिः प्रसुप्ता तिष्ठति इति लययोगसिद्धान्तः । गुरुदेवस्य दयापरम्परया साधको यदान्तर्दृष्टिं प्राप्नोति, भुवनेश्वर्य्याश्च कृपाकलापेन अविद्याजालं छित्वा विद्यासुखदक्रोडमुपढौकते, यदा च तस्य दृष्टिर्विषयविरहिता स्वात्मानमभिलक्ष्य समाहिता भवति; तदैव तस्मिन् मानवे कुलकुण्डलिन्या देव्याः प्रबुद्धेः प्रारम्भः, त्रयाणामप्येषां पूर्णतायां सम्पद्यमानायामेव कुलकुण्डलिनी महाशक्तिः प्रबुद्धा सहस्रारन्ध्रमभिगम्य परमपुरुषे विलीयते । यावदेतन्न भवति, न तावत् द्रष्टृदृश्ययोः पारस्परिको गुम्फितः सम्बन्धो विच्छिद्यते, न च तावज्जीवोऽविद्या-